|| ओम् ||

# || समर्पणम् ||

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥

अखण्डानंद ! आदर्शपुरुष ! इच्छापूरक ! ईश्वर ! उमेशप्रिय ! एकलिङ्गा-
र्चक ! ऐश्वर्यनिधे ! ओङ्कारवेध । कमलाकान्त ! खरविध्वं-
सक ! गोरक्षक ! घनश्याम ! चमत्कारिन् !
छलिविनाशक ! जगदीश !
ताडकांतक !
दलितोद्धारक ! धर्म-ध्वज !
न्यायकारिन् ! पितृपूजक! फलदातः ! बुद्ध-
वंद्य ! मातृभक्त! यज्ञकर्तः! रावणारे ! लक्ष्मणप्रिय ! वालि-
हन्तः ! शांतिस्थापक ! भरतभक्तिपोषक ! सीताप्राणाधार ! हनुमदाराध्य !
क्षमासागर ! त्रातः! ज्ञानदयासिन्धो ! श्रीमर्यादापुरुषोत्तम
रामचन्द्र ! प्रणतिपुरस्सरं शबरीफलोपममेतं
ग्रंथस्वरूपं फलं स्वीकृत्य कृतार्थं कुरु
निवेदकजनं ।
कृतार्थंकुरु निवेदकजनम् ।

शुद्धं वा यदिवाऽशुद्धं यत्किंचिल्लिखितं मया
तत्सर्वं कृपयाऽऽदाय प्रसन्नो भव राघव

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥

।। श्रीदधिमथ्यै नमः ।।

# ।। भूमिका ।।

श्रीशारदासमेतं स्मारं स्मारं गणाधिपं देवम् ।
चरणद्वंद्वं वंदे श्रीशालग्रामशास्त्रिवर्यस्य ।।

महाशयाः ! भारतीयेतिहासग्रंथेषु श्रीरामायणस्य स्थानं सर्वोपरि विराजते । पूर्वं कवीन्द्रो महर्षिर्वाल्मीकिः श्री रामायणं विरच्य मर्यादापुरुषोत्तमस्य श्रीमद्भगवतो रामचन्द्रस्य दिव्यां कीर्त्तिं लोकेषु प्रसारयामास । अथाऽध्यात्मरामायणाऽग्निवेशरामायणयोर्निर्मितिरभूत् । ततोऽनेके कविचूडामणयः कालिदासभवभूतिक्षेमेन्द्रभोजराजप्रभृतयो रघुवंशवीरचरितरामायणमंजरीरामायणचम्प्वादिविविधग्रंथान् विरच्य श्रीसीतारामादिदिव्यपात्राणां विमलं यशः समग्रभूमंडले संचारयां बभूवुः । अत्रान्तरे भाषाकवीश्वरास्तुलसीदासकेशवदासकृत्तिवाससप्रभृतयो रामचरितमानस रामचन्द्रिकारामायणादिभक्तिरसप्रधानानि महाकाव्यानि रचयित्वा कालिमलग्रस्तानां जीवानां महोपकारं चक्रुः । दिनेष्वेतेषु विद्यालयेषु सर्वत्र यथा पंचतंत्रहितोपदेशादिसद्ग्रंथैर्नीतिशिक्षा दीयते । तथैव यदि रामायणादिभिरपि वैशिष्ट्येन धार्मिकशिक्षा मिलेत्तदा महोपकारोभवेत्प्रजानामित्यालोच्य पूर्वोक्तकवीनां ग्रंथानुसरणेनैवाऽस्य ग्रंथस्य रचना मया कृता । प्रयासोऽयं बालबोधार्थमेव । ग्रंथेऽस्मिन् यत्र कुत्राऽपि काचित् त्रुटिर्भवेत् । सा विद्वाद्भिः संशोधनीया । यतोऽहमल्पज्ञः । अल्पज्ञकृतं च कार्यं भवति दोषयुतं । सर्वदा सर्वत्र च निर्दोषस्तु स एक एव जगदीश्वरः । ग्रंथस्यास्य मुद्रणसमये गुणग्राहकवर्याः १०५ श्रीविभूषिताः श्री कोटाधिपतियुवराजपदालंकृता महाराजकुमारश्रीभीमसिंहमहोदया विशेषधन्यवादार्हा ये साहाय्यं दत्त्वा ममोत्साहमवर्धयन् । परमेश्वरस्तान् दीर्घायुषः कुर्यादितिशम् ।

संवत् १९८४
अक्षयतृतीया
श्री जानकीनिवासः, पुष्करं.

निवेदकः
**शिवदत्त त्रिपाठी**
अजमेर वास्तव्यः

# अथ श्रीगद्यरामायणं प्रारभ्यते

निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम् ।
मन्ये स वव्रे धातापि तस्मै विघ्नाजिते नमः ॥
जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

अस्ति खल्विहैव सकलाश्चर्यैकपात्रे भरतक्षेत्रे ब्रह्मलोकोपमो दिव्याश्रमो महर्षिवाल्मीकेः । तत्रैकदा कुशासने समुपविष्टो महामुनिर्दधीचपिप्पलादादिमुनिवरैः परिवेष्टितो निगमागमविहिताः कथाः कुर्वन्नासांचक्रे । अत्रान्तरे देवर्षिर्नारदो वीणां वादयन् हरिगुणावलीश्च गायन् तत्राजगाम । एतदालोक्य मुनिवृन्दसमेतः प्राचेतसः सहसोत्थाय तपःस्वाध्यायसम्पन्नं तं ब्रह्मपुत्रं विधिवत्पूजयामास । अथ सत्संगलाभाय वाल्मीकिः प्रीतिपुरस्सरं तं जगाद । मुनिपुंगव ! साम्प्रतमस्मिंल्लोके को नु गुणवान्, वीर्यवान्, धर्मवान्, दयालुः, कृतज्ञः, प्रियदर्शनः, सत्यवाक्यः, समर्थः, विद्वान्, दृढव्रतः, चरित्रवान्, जितक्रोधः, द्युतिमान्, धृतिमान्, शमदमसम्पन्नश्चाऽस्ति ? किम्बहुना यस्य रोषाद् देवा अपि बिभ्यति ? एतदहं श्रोतुमिच्छामि ? ऋषिराज ! त्वमेवंविधं ज्ञातुं सर्वथैव समर्थोऽसीत्यभिधाय वल्मीकजन्मा मुनिर्विरराम । निशम्यैवं मुनिवचनं प्रहृष्टो ब्रह्मर्षिर्नारदः प्रत्यवदत् । विद्वन् ! यद्यपि त्वया संकीर्तिताः सर्वे गुणा एकत्र दुर्लभास्तथापि सम्यग् बुद्ध्वाऽहं सर्वगुणाढ्यं नरं वक्ष्यामि तच्छ्रूयताम् । अस्ति कौसलेषु पृथ्वीभूषणमयोध्यानाम नगरी । या सुधाधौतैः प्रासादैरमरावतीं हसन्तीव विभाति । तत्रेक्ष्वाकुवंशप्रभवः श्रीरामचन्द्राभिधानो नरेन्द्रचूडामणी राज्यं करोति । स महानुभावः अदीनात्मा, अरिन्दमः, आर्यः, आजानुबाहुः, कम्बुग्रीवः, गूढजत्रुः, घनश्यामः, चतुरः छद्मनिग्रही, जाज्वल्यमानः, त्यागी, दयालुः, धर्मज्ञः, नीतिनिपुणः, प्रजापालकः, प्रतापवान्, पीनवक्षाः; बुद्धिमान्, भाग्यशाली, महावीर्यः, मितभाषी, महोरस्कः, महेष्वासः, यशस्वी, रिपुंजयः, लक्ष्मीवान्, वाग्मी, विशालाक्षः,

विपुलांसः, विचक्षणः, वेदवेदांगतत्वज्ञः, शुचिः, शुभलक्षणः, समः, सर्वज्ञः, सत्यसंधः, समाधिमान्, सर्वलोकप्रियः, साधुः, सुविक्रमः, स्निग्धवर्णः सुललाटः, सुशिराः, सुशिक्षितः, स्मृतिमान्, हृदयंगमः, क्षमावान्, त्राता, ज्ञाननिधिश्च विद्यते । किम्बहुना । स महाभागः सोमवत् प्रियदर्शनः, वीर्ये विष्णुसदृशः, गांभीर्ये समुद्र इव, धैर्येण हिमालयोपमः, क्रोधे कालाग्नितुल्यः दाने धनदसदृशः, क्षमया च पृथिवीसमानोऽस्ति । पुरैकदा राजा दशरथः प्रकृतिहितकाम्यया तं श्रेष्ठगुणयुक्तं ज्येष्ठसूनुं श्रीरामचन्द्रं यौवराज्येन संयोक्तुमियेष । अत्रान्तरे पूर्वं दत्तवरा कैकेयी तस्याभिषेकसंभारान् दृष्ट्वा वरेणैकेन रामविवासनं द्वितीयेन च भरताभिषेचनं ययाचे । ततः सत्यपाशसंयतो राजा प्रतिज्ञापरिपालनाय प्राणप्रियं रामं विवासयामास । पितृभक्तो रामः पितृवचननिर्देशात् कैकेयीप्रियकारणाच्च वनं जगाम । अथ सौभ्रात्रमनुदर्शयन् प्रियो भ्राता लक्ष्मणस्तमनुससार । ततः सर्वलक्षणसम्पन्ना जनकात्मजाऽपि यथा रोहिणी शशिनं तथा राममनुजगाम । अथ पौरैर्दूरमनुसृतो दाशरथिर्गंगाकूलमवाप्य सपौरं सूतं विससर्ज । अथ धर्मनिष्ठो राघवो निषादाधिपतिं गुहमासाद्य गंगातीरकृतोटजोऽतिष्ठत् । ततः सीतालक्ष्मणसमेतः स गुहं पुरस्कृत्य वनेन वनं गत्वा च बहूदकानदीस्ततार । अथ ते चित्रकूटमवाप्य भरद्वाजशासनाद्रम्यमावसथं च कृत्वा तत्र सुखेन रममाणाश्चिरं न्यवसन् । अत्रान्तरे पुत्रशोकातुरो दशरथः सुतं विलपन् स्वर्गं जगाम । ततो वशिष्ठप्रमुखैर्द्विजै राज्याय नियुज्यमानःसमर्थोऽपिभरतो राज्यं न बवांछ । अथार्यभावं पुरस्कृत्य रामपादप्रसादको रामानुजो वनं गत्वा तत्र च रामं समवाप्य प्रणतिपूर्वकम याचत् । महाशय ! त्वमेव धर्मतो राजाऽसि । अतोऽयोध्यां प्रशाधि । निशम्यैतद्भरतवाक्यं परमोदारो रामोऽवदत् । भ्रातर्मामैवं वद । पितृप्रदत्तं राज्यं त्वमेव लभस्व । ततो बहुविधैराख्यानैर्विबोधितोऽपि भरतो यदा राज्यं नैच्छत्तदा महात्मा रामोऽस्य राज्याय न्यासस्वरूपे पादुके प्रादात् । ततो भरतः काममनवाप्यैव रामपादावुपस्पृशन् न्यवर्तत । सोऽथ राजसिंहासने रामपादुके प्रतिष्ठाप्य रामाऽऽगमनकांक्षया नंदिग्रामे राज्यमकरोत् । अत्रान्तरे सत्यसंधो रघुपतिरत्यासन्नतया मंत्रिवृद्धादीनां तत्रागमनमालक्ष्य दण्डकान् प्रविवेश । ततो राजीवलोचनो रामो महारण्यं प्रविश्य विराधं राक्षसं जघान । सोऽथ महामुनिं शरभंगं दृष्ट्वा तद्वचनादगस्त्यसुतीक्ष्णेध्मवाहादीन् मुनिवरान् संपूजयामास । ततो रघुनाथोऽगस्त्यप्रसादादैन्द्रंशरासनमक्षयसायकौ तूणी खड्गं च जग्राह । अथ तत्र वनचरैः सह वसतस्तस्य समीपे दिग्भ्यो विदिग्भ्यश्च मुनयः समाजग्मुः ।

ततः सोऽग्निकल्पेभ्यस्तेभ्यो मुनिभ्यो राक्षसवधं प्रतिशुश्राव । अथैकदा तत्रैव वसता तेन जनस्थाननिवासिनी कामरूपिणी शूर्पणखा नाम राक्षसी विरूपिता । ततः शूर्पणखावाक्याद्योद्धुमुद्यतान् सानुगान् खरदूषणादीन् राक्षसान्निजघान । किम्बहुना । तेनैकाकिना तत्र रक्षसां चतुर्दशसहस्राणि निहतान्यासन् । एवं ज्ञातिवधं श्रुत्वा क्रोधमूर्छितो रावणो मारीचं नाम राक्षसं सहायं वरयामास । ततः सोऽब्रवीत् । रावण ! बलवता तेन सह ते विरोधो न क्षमः । अथ कालचोदितो रावणस्तद्वाक्यमनादृत्य सपदि मारीचेन साकं तदाश्रमपदं जगाम । अथ मायाविना तेन तौ नृपात्मजौ दूरमपवाह्य शून्यागारस्थां तां साध्वीं रामभार्यां सहसा जहार । ततः कृतार्थो रामो जानकीमनवाप्य शोकाविष्टचेतसा पुनःपुनर्विललाप । सोऽथ सीतां मार्गमाणो वने गृध्रं जटायुषं निहतं दृष्ट्वा तमाश्वास्य च तस्य दाहसंस्कारमकरोत् । ततः स मार्गेयं घोरदर्शनं कबंधं जघान । स प्राणप्रयाणसमयेऽवदत् । वीरराघव ! सम्प्रति धर्मनिपुणां शबरीं पश्येति निगद्य वीरगतिमवाप । ततो दयानिधी रामः शबरीं समभ्ययात् । सा गृहागतान् महामान्यान् विधिवत् पूजयामास । अथ पंपातीरे रघुवरो हनुमता संगतोऽभवत् । ततो हनुमद्वचनाद्रामभद्रः सुग्रीवेण सहामिलत् । अथ रामः सुग्रीवाय सर्वमात्मवृत्तान्तं शशंस । ततः सुग्रीवोऽपि तस्मै निजकथामावेद्य तेन च साकमग्निसाक्षिकं सख्यं चकार । अथ राघवेण वालिवधं प्रति प्रतिज्ञातम् । तच्छ्रुत्वा वानरो वालिवधार्थं राघवं प्रेरयामास । यद्यपि रघुपतिर्महाधनुर्धर आसीत्तथापि सुग्रीवो वीर्येण राघवे नित्यमेव शंकित आसीत् । ततोऽवसरज्ञः सुग्रीवो रामप्रत्ययार्थं महापर्वतसन्निभं दुंदुभिकायं दर्शयामास । एतदालोक्य स्मिताननो रामचन्द्रः पादांगुष्ठेनैव तम् संपूर्णं दशयोजनं चिक्षेप । ततस्समहाबाणेनैकेन सप्ततालान् भित्त्वा गिरिं रसातलंचाऽपि विभेद । एतदालोक्य विश्वासमापन्नो हरीश्वरो रामं पुरस्कृत्य किष्किन्धाख्यां गुहां च गत्वा जगर्ज । तच्छ्रुत्वाऽतिचकितो वाली तारामनुमान्य युद्धार्थं निश्चक्राम । ततः सुग्रीववचनाद्रामः शरेणैकेन वालिनं निहत्य तद्राज्ये स्वसुहृदं सुग्रीवं प्रतिष्ठापयामास । अथ कृतकृत्यो वानरेश्वरः सर्ववानरान् समाहूय तान् जानकीमनुसंधातुं दिशो विदिशश्च प्रस्थापयामास । ततः संपातिवचनान्मारुतिः शतयोजनसंपूर्णं लवणार्णवं समुत्तीर्य रावणपालितां लंकां ददर्श । सोऽथ वज्राङ्गस्तामन्विष्यन्नशोकवनिकां गत्वा तत्र रामध्यानपरायणां सीतां समीक्ष्य च स्वात्मानं कृतकार्यं मेने । ततः स तस्यै रामसुग्रीवसख्यादि सर्ववृत्तं विनिवेद्य रामदत्तमभिज्ञानं चापि समर्पयामास । ततः

पावनिर्वैदेहीं समाश्वास्य प्रासादतोरणं च मर्दयामास । अथ महावीरः पंचसेनाग्रगान् हत्वा, सप्तमंत्रिसुतान् विनिष्पिष्य शूरमक्षं चाऽपि निहत्य ब्रह्मास्त्रकृत बन्धनमवाप । ततः समर्थोऽपि स राक्षसजनितां पीडां विषेहे । सोऽथ पैतामहाद्वराच्चतुः पंचघटिकानंतरं मुक्तिमधिगम्य कृतार्थो बभूव । ततः प्रतिनिवर्तमानो महाकपिः सीतां विहाय सर्वां लंकां दग्ध्वा च रामाय प्रियमाख्यातुं पुनरायात् । सोऽथ रामं प्रदक्षिणं कृत्वा वैदेही तत्त्वतो मया दृष्टेति न्यवेदयत् । ततः स सुग्रीवो रघुपतिः समुद्रतीरं गत्वा सूर्यसंकाशैः शरैस्तं क्षोभयामास । अथ भीतः सरित्पतिरात्मानं दर्शयामास । ततो राघवः समुद्रवचनान्नलं सेतुं कारयामास । अथ दाशरथिस्तेन सेतुना लंकां गत्वा रणे रावणन्निजघान । ततो रामः सीतामवाप्य परां व्रीडामाससाद । अथ रामो जनसंसदि जानकीं यत्परुषवचनं जगाद । तच्छ्रुत्वाऽमृष्यमाणा सा साध्वी सहसा ज्वलनं प्रविवेश । ततो रामोऽग्निवचनाद् विगतकल्मषां सीतां विज्ञाय गुरुजनानुरोधेन जग्राह । शुभकर्मणाऽनेन सदेवर्षिगणं सचराचरं च त्रैलोक्यं संतुष्टमभूत् । तस्मिन्नवसरे सर्वदैवतैः संपूजितो रामोऽतितरां विरेजे । ततो रघुवरो राक्षसेन्द्रं विभिषिणं लंकाराज्येऽभिषिच्य सफलोद्यमो बभूव । अथ रघुनाथो देवताभ्यो वरं समवाप्य युद्धे हतान् वानरान् संजीवयामास । ततः सुहृद्वृतो रामः पुष्पकविमानमारुह्य साकेतं प्रतस्थे । अथ सत्यपराक्रमो रघुवीरो भरद्वाजाश्रमं प्राप्य ततो भरतांतिके हनूमन्तं प्रेषयामास । अथ लब्धावसरो रामः सुहृद्गणं पुरस्कृत्य पुष्पकविमानं समारुह्य च नंदिग्राममाजगाम ।

अथ सभ्रातृको रामस्तत्र जटां हित्वा सीतां पुरस्कृत्य च रविकुलराजधानीं जगाम । ततः स पूर्वजराज्यं समवाप्य सफलमनोरथो बभूव । तस्मिन्रामराज्ये लोकस्तुष्टः पुष्टः सुधार्मिकश्च वर्तते । किं बहुना सर्वलोका निरामया निर्भया दुर्भिक्षादिकष्टविवर्जिताश्च विधंसे । अत्रत्याः पुरुषाः पुत्रमरणं न द्रक्ष्यंति । अयोध्यावासिन्यो नार्योऽप्यविधवा नित्यं पतिव्रताश्च भविष्यंसि । कुत्रापि जलवातवह्निज्वरादिकृतं भयं नोत्पत्स्यते । सर्वाणि नगराणि राष्ट्राणि च धनधान्ययुतानि संति । यथा कृतयुगे लोकाः सुखिन आसन् । तथैव रामराज्येऽपि प्रजा सर्वसुखमनुभवंति। महानुभावो रामो बहुसुवर्णकैरश्वमेधैरिष्ट्वा विद्वद्भ्यः संख्यातीतं च गोकुलं प्रदास्यति । ततो ब्राह्मणेभ्योऽपरिमितं च वित्तं दत्त्वा शतगुणान् राजवंश्यानपि स्थापयिष्यति । सोऽथ लोकेऽस्मिन् चातुर्वर्ण्यं स्वे २ धर्मे सन्नियोक्ष्यति । किम्बहुना रामो दशवर्षसहस्राणि दशवर्षशतानि च धर्मराज्यं कृत्वाऽन्ते देवदुर्लभं ब्रह्मलोकं समवाप्स्यति । य इदं वेदसम्मितं पुण्यपवित्रं श्रीरामचरित्रं पठेत् । स सर्वपापविनिर्मुक्तो

भूत्वा ब्रह्मसायुज्यं समवाप्स्यति । ब्राह्मणो रामायणं पठन् शब्दब्रह्मनिष्णातो भवतु । क्षत्रियो रामचरितं पठित्वा भूपतिपदं लभताम् । वैश्यो रामगुणावलीं गायन् महाधनाढ्यतामेतु। एवं शूद्रोऽपि श्रीरामस्तुतिं कुर्वन् महोच्चपदं लब्ध्वा सुखमवाप्नुयादिति शम् ।

एवं देवर्षिवचनं श्रुत्वाऽतिसंतुष्टो वाल्मीकिर्मुहुर्मुहुर्हिरण्यगर्भांगभुवं महामुनिं प्राशंसत् । ततो नारदमुनिर्महर्षिमापृच्छ्य विहायसं जगाम । अथ मुनिवरो मुहूर्तमात्रमाश्रमे स्थित्वा माध्याह्निककृत्यं संपादयितुं तमसातीरं जगाम । तत्र पार्श्वस्थं शिष्यं भरद्वाजमवादीत् । वत्स ! पश्य पश्य । तीर्थमेतत्तु सज्जनचित्तवन्निर्मलं विभाति । तात ! कलशोऽत्र न्यस्यताम् । वल्कलं च मम दीयताम् । अद्याऽहं कालातिक्रमणात्तमसातीर्थमेवाऽवगाहिष्ये । निशम्यैतद् गुरुवचनं भरद्वाजो बाढमित्युक्त्वा मुनये वल्कलं समर्पयामास । ततो वनश्रियं निरीक्षमाणो महर्षिस्तस्याभ्याशे स्वच्छन्दं विचरंतं क्रौंचमिथुनं विलोकयामास । अत्रान्तरे पश्यतस्तस्य कश्चित्पापनिश्चयो निषादस् तस्मान्मिथुनादेकं निजघान । ततो महीतले लुठंतं शोणितपरीतांगं च तं विलोक्य क्रौंचीकरुणां गिरं रुराव । तच्छ्रुत्वा मुनिहृदयालीनः शोकानलसमीरितः करुणारसो दयया श्लोकच्छलान्निर्गतोऽभवत् ।

मा निषाद ! प्रतिष्ठांत्वमगमः शाश्वतीः समाः ।
यत् क्रौंचमिथुनादेकमवधीः काममोहितम् ॥

एवं ब्रुवतो वीक्षतश्च तस्य हृदि महाचिन्ता बभूव । अहो ! शकुनिशोकपीडितेन मया किमिदं व्याहृतम् ? ततः शिष्योऽपि तदनुत्तमं गुरुवाक्यं प्रतिजग्राह । ज्ञात्वैतन्मुनिरतीव संतुष्टोऽभवत् । अथो मुनिवरस्तस्मिंस्तीर्थेऽभिषेकं कृत्वा तमेवार्थं विचिन्तयन् स्वाश्रमं न्यवर्तत । अत्रान्तरे तत्र वेदमूर्तिर्भगवांश्चतुर्मुखो मुनिं द्रष्टुं स्वयमुपागमत् । एतदालोक्य विस्मयाविष्टो वाल्मीकिः सहसोत्थाय प्रांजलिस्तस्थौ । ततो मुनिः पाद्यार्घ्यासनवंदनैर्विधिपूर्वकं श्रीपरमेष्ठिनं संपूज्य तं दिव्यासने प्रतिष्ठापयामास । अथ भगवान् पद्मयोनिः परमार्चिते आसने समुपविश्य वाल्मीकयेऽप्यासनं समादिदेश । ततः स्वयंभूर्महामुनिमनामयं पृष्ट्वा सस्मितं प्रोवाच । महामुने ! आपन्नानुकम्पनं महतां सहजधर्मः । त्वयात्वयं श्लोक एव बद्धो नाऽत्र विचारणा कार्या । सरस्वतीयं मच्छंदादेव ते प्रवृत्ता । सांप्रतं यथा नारदाच्छ्रुतं तथा श्रीमद्भगवतो रामचन्द्रस्य कृत्स्नं चरित्रं वर्णय । मत्प्रसादाद् रामभरतलक्ष्मणशत्रुघ्नानां वैदेह्या अपि च राक्षसानां रहः किंवा प्रकाशं च यद् यद् वृत्तं तत् तत्सर्वं ते विदितं भविष्यति । किं बहुना । यावन्महीतले

गिरिसरित्समुद्राश्च स्थास्यंति तावल्लोकेषु श्रीरामायणकथाप्रचालिष्यतीत्यादिश्य भगवानब्जयोनिरन्तर्हितोऽभवत् । अथ मुनिरुदकमुपस्पृश्य प्राचीनाग्रेषु दर्भेषु स्थित्वा च श्रीमद्वेदपुरुषं सस्मार । ततो योगवलेन नारदोक्तं समग्रं रामचरित्रं ज्ञात्वा सप्तकाण्डात्मकं रामायणाख्यं महाकाव्यं रचयामास । ततः कोन्वेतत्प्रयुंजीयादितिमुहुर्मुहुश्चिन्तयन्नास्ते । एतस्मिन्नेवावसरे कुशीलवाख्यौ राजपुत्रौ तत्रागत्य गुरुवरपादावगृह्णीताम् । एतदालोक्य प्रसन्नो मुनिवरस्ताभ्यां शिवानि सन्त्विति शुभाशीर्वादं दत्वा मध्येसभमेतत्काव्यं गायतमित्यादिदेश । ततो वाढमित्युक्त्वा तौ जनसंसदि तत् काव्यमगायताम् । तच्छ्रुत्वा श्रीरामाश्वमेधोत्सवेसमागता मुनयोऽतिसंतुष्टिमवाप्यनानाविधैः पारितोषिकैस्तौ प्रसादयामासुः । तस्मिन्नेवावसरे कांचनासनासीनो रघुपतिर्भरतादीन्पुरस्कृत्य कुशीलवाभ्यां समुच्चारितं श्रोत्ररसायनं महाकाव्यं च श्रुत्वाऽतितरां जहर्ष ।

अस्ति सरयूतीरे जनलोचनानंददाता कौसलो नाम जनपदः । तत्र भुवनविश्रुताऽयोध्यानाम महापुरी मन्वादिसूर्यवंशीयभूमिपालानां महिमानं प्रकाशयंती सुशोभते । या पतिव्रतेव पराधृष्या, पद्मिनीव श्रीसम्पन्ना, महाउरुपधीरिव सत्याढ्या, पृथ्वीव वहुकौतुका च वर्तते । अथैकदा तत्र शक्रवैश्रवणोपमो दशरथो नाम राजा बभूव । यस्य राज्ये निशासु तमो, दंतिषु मदो, मुक्ताफलेषु जाड्यं, पत्रेषु छेदः सस्यसंग्रहणे च खलो वभूव । तस्यान्तःपुरशतेऽपि गुणाधिक्यात् कौसल्यासुमित्राकैकेयीचेति तिस्रः प्रियाः पत्न्यो बभूवुः । यद्यपि राजा वीर्यवान् ऋतुकालाभिगामी चाभूत्तथापि दैव योगतस्तस्य नैकस्यामपि कस्यांचित्सुतः समुदपद्यत । अथैकदा म्लानमुखंभूपं विलोक्य विजने कौसल्योवाच । आर्यपुत्र ! दिवसधूसरशशांक इव कथमद्यश्वः क्षीणकलोऽसि ? कृपया वेदनाकारणं समाचक्ष्वेति प्रियावचनं श्रुत्वा राजोवाच । देवि ! यद्यप्यस्म्यहं सर्वसुखी तथाऽपि केवलं पुत्रराहित्यमेव माम् पुनः पुनरुद्वेजयति । एतदाकर्ण्य महाराज्ञी सप्रश्रयं जगाद । कृपानाथ ! विद्यमानेषु राजहितैषिषु च विप्रवर्येषु का चिन्ता सन्तानस्य ? एवं प्रियावचनं निशम्य समाश्वस्तो राजा सुमंत्रं प्रेषयित्वा मंत्रिमण्डलं सपुरोहितं विप्रवृन्दं च समाजुहाव । अथ समायातेषु तेषु राजा सविनयं जगाद । महाशयाः ! पुत्रार्थं लालप्यमानस्य मे सुखन्नास्ति । अतस्तदर्थं हयमेधेन यक्ष्यामीति मम विचारोऽस्ति । एतदाकर्ण्य सुसंतुष्टो वशिष्ठोऽब्रवीत् । राजन् ! सर्वा एव सम्पदस्तपोऽधीनाभवन्त्यतः शीघ्रमेव यज्ञानुष्ठानं कुरु । सुकृतकल्प पादपोऽयं सद्योऽचिंत्यं हि फलं सूते । त्वं श्रीयज्ञपुरुषप्रसादात् सर्वथैवाभिप्रेतान्

पुत्रान् समवाप्स्यसीत्यभिधाय मुनीश्वरो विरराम। एतन्मुनिवचनमाकर्ण्य सर्वेऽपि महर्षयस्तथास्त्विति व्याहरन्तो वशिष्ठवाक्यं समर्थयामासुः। अथाऽनुज्ञामवाप्य गतेषु सर्वेषु सुमंत्रो राजानमुवाच। महाराज! पुरा मुनिमण्डलस्थो भगवान् सनत्कुमारो भाविनीं त्वत्कथां जगाद। अंगेष्वेकदा लोमपादाख्यो राजा भविष्यति। तस्य देशे यदा विप्रशापसमुद्भवाऽनावृष्टिर्भविष्यति तदा स ब्राह्मणान् समाहूय तत्प्रतीकारं परिप्रक्ष्यति। तच्छ्रुत्वा ते वदिष्यंति। राजन्! बालब्रह्मचारिणं महामुनिविभाण्डकसुतं श्रीऋष्यशृंगं सर्वोपायैस्त्वमिहानीय तस्मै कन्यां दत्वा च सुखी भवेति विप्रमण्डलवाक्यं श्रुत्वा राजा सचिवानाहूय मुनिपुत्रागमनोपायमनुयोक्ष्यति। विधिवशात् तेष्वेव दिनेषु दशरथभूपालेन सहांगराजस्य सख्यं भविष्यति। ततः सचिवानुरोधाद्रोमपादो यदा दशरथात् पालनार्थं कन्यां याचिष्यते तदा राजा सुहृद्वाक्यनिर्वाहार्थं तस्मै शान्तां नाम कन्यां दास्यति। ततोऽमात्या यदा गणिकाधीनं मुनिपुत्रागमनमितिव्याहरिष्यंति तदा राजा गणिकावृन्दमाहूय स्वाभिप्रायं श्रावयिष्यति। तच्छ्रुत्वा पूर्वं तु वारांगना भीत्या तमानेतुं सहमता न भविष्यंति। किन्तु पारितोषिकलोभाद्यथाकथंचित् साहसमवलंब्य वनं गत्वा च स्वार्थं साधयिष्यंति। ततः समागते मुनिपुत्रे देवो वर्षिष्यति। अथ परितुष्टो राजा तस्मै शांतां वितीर्य सफलप्रयासो भविष्यति। महाराज! स एव तव जामाता यदा बृहद्यज्ञं कारयिष्यति तदा त्वं पुत्रवान् भविष्यसीत्यभिधाय सूतो विरराम। निशम्यैवं मंत्रिवचनं राजा पुत्रोत्पत्तिसंबन्धिनीं चिन्तां परित्यज्य मुनिवशिष्ठाज्ञामनुसरन् हयमेधार्थं समुद्यतोऽभवत्। अथैकदा रोमपादभूपतिप्रेरणयांऽगदेशवारमुख्यास्तपःस्वाध्यायनिरतं विषयानभिज्ञं च मुनिसुतं प्रलोभयितुं वनं विविशुः। ततो विभाण्डकमुनिभीत्याऽऽश्रमस्य नाऽतिदूरे लताजालान्तरेषु स्थित्वा मुनिपुत्रागमनं प्रतीक्षमाणास्तस्थुः। पितृप्रियो महर्षिसूनुस्तेषु दिनेषु नातिचक्राम। अथ कदाचिद् यदृच्छयानिर्गतो वैभाण्डकिराश्रमाद्बहिर्विचित्रवेशा वारांगना विलोक्याऽतीव विस्मयाविष्टो बभूव। एतदालोक्य प्रत्युत्पन्नमतयो ललना मधुरस्वरं गायन्त्यो मुनिपुत्रमुपागम्याऽपृच्छन्। ब्रह्मन्! को भवान्? कथं चैकाकी वने विचरति? ज्ञातुमिच्छामो वयं भवद्वृत्तम्? तच्छ्रुत्वा सोऽब्रवीत्। भो भो ब्रह्मचारिणः! अहमृष्यशृंगाभिधानो विभाण्डकमुनेरौरसःपुत्रोऽस्मि। शुभदर्शनाः! इहैवास्माकमाश्रमपदमस्ति। कृपया भवन्तस्तत्र पदार्पणं कुर्वन्तु। अहं भवतां विधिपूर्विकां पूजां चिकीर्षामि। एवमाकर्ण्य प्रियवचनं ताः सर्वा अपि वारवनितास्तं दिव्याश्रमं विलोकयितुं सत्वरं तत्र जग्मुः। ततो मुनिसुतो गतानां तासामर्घ्यपाद्या-

चमनकन्दमूलफलादिभिः पूजां चकार । अथ ता अपि सत्कृतिं स्वीकृत्य प्रत्युपकाराय विविधान् मोदकान् तस्मै विनिवेद्य च मुनिभयात् स्वनगरं न्यवर्तत । एवं गतागतेन स्वल्पैरेव दिनैः स मुनिसुतस्तत्केलिविभ्रमकलाविलासरसिको बभूव । ततस्तासां प्रणय-पुरस्सरैरयत्नालिङ्गनैर्हियमाणः स शनैः शनैस्ताभिर्निजपुरं नीतः । अथ तस्मिन्यंगविषयं प्राप्तेऽनावृष्टिप्रभवा विपत् सुधाधारैः पयोधरैरिव सहसा प्रशशाम । ततो लोमपादस्तत्प्रीत्या तस्मै शान्तां नाम दुहितरं समर्पयामास । अथैकदा वशिष्ठानुमतो राजा दशरथोऽगविषयाद् वधूसखमृष्यशृंगमानिनाय । एतदालोक्य वशिष्ठोराजानमब्रवीत् । महीपाल ! आमुखापातिकल्याणं सर्वार्थसिद्धिं सूचयति । ततो महीपतेर्महारंभसंभारो भूरिदक्षिणश्चाश्वमेधः प्रावर्तत । तस्मिन् यज्ञे सुरमुनिनराणां च सुमहान् समाजोऽभवत् । देवलोकोऽपि भूलोकाच्छश्वदाप्यायते । यतोऽग्नौ ब्राह्मणैर्हुतंहविर्दिवौकसां तृप्त्यै भवति । अथ राजशतक्रतोः क्रतौ समाप्ते ऋष्यशृंगः पुत्र्यामिष्टिमकरोत् । अत्रान्तरे दशाननेन विप्रवासितसम्पदो विरांचिप्रमुखा देवा अच्युतं शरणं गत्वा प्रोचुः । भगवन् ! रावणो नाम राक्षसो ब्रह्मवरदानेन देवानप्यसुरान् करोति । कृपासागर ! स युधि मनुष्यादृते सर्वभूतानामबध्योऽस्ति । कृपया त्वमितो गत्वा दशरथभूपालस्य पुत्रतां व्रज । लक्ष्मीनाथ ! स्वयोगमास्थाय स्वाऽऽत्मानं चतुर्धा विभज्य धरामवतीर्य च त्रैलोक्यकंटकं रावणं जहि । निशम्यैवं देववृन्दमभ्यर्थनां तथास्त्विति भगवान् विष्णुर्जगाद । ततो निवृत्तेषु देववर्गेषु पूर्णाहुतिसमये दोर्भ्यां पायसपूरितं स्वर्णपात्रमादाय पावकात् कृष्णपिंगलं महद्भूतं प्रादुर्बभूव । सोऽथ प्राजापत्यपुरुषो मुनिशासनान् नरेश्वराय पुत्रीयपायसपात्रं प्रतिपाद्य तिरोहितोऽभवत् । अथ भूपालः पायसार्धं कौसल्यायै प्रादात् । अर्धं सुमित्रायै शेषं च केकय्यै विततार । ततो विसृष्टाखिलभूपेन संपूजितो मुनिः कान्तां शान्तां समादाय निजाश्रमं ययौ । अथ पतिभक्तिपरायणा कौसल्या चैत्रशुक्लनवम्यां पुनर्वसुनक्षत्रे कर्कलग्ने मेषराशिस्थे सूर्ये उच्चस्थे ग्रहपंचके चाऽदितिर्दिवाकरमिव द्विषतां विरामं रामं प्रासूत । ततः पुत्रजन्मपरितुष्टो राजा ब्राह्मणेभ्यः सूतमागधवंदिभ्यश्चापि यथायोग्यं धनं दत्त्वा जानपदानपि लोकान् प्रसादयामास । अथावसरे केकयी भरतं सुषुवे । ततः सुमित्राऽपि लक्ष्मणशत्रुघ्नौ सुतावजनयत् । अथ चत्वारोऽपि संस्कृता राजकुमारा दिक्पालोपमा शुशुभिरे । ततो विद्याविस्रंभक्रीडासु लक्ष्मणो रामं शत्रुघ्नश्च भरतमनुससार । तस्मिन्नवसरे राजा वरुणः सागरैरिव किंवा कैटभारिर्भुजैरिव दिदीपे । अथोपनयनसमये वसिष्ठः समादिदेश । राम ! सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय

प्रियं धनमाहृत्य प्रजातंतुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानिकर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचारितानि तानि त्वयोपास्यानि नो इतराणि। ये के चास्मच्छ्रेयांसोब्राह्मणास्तेषांत्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदितेकर्मविचिकित्सा वा वृत्तविचिकित्सा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता अयुक्ताः। अलूक्षा धर्मकामाः स्युः वा यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता अयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा तेतेषु वर्तेरन् तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। तानि त्वयोपास्यानि। विचिकित्सा वा स्यात् तेषु वर्तेरन् सप्त च। ततस्ते स्वल्पेनैव समयेन शस्त्रास्त्रग्रामकोविदा बभूवुः। अत्रान्तरे विरंचिशासनान् महेन्द्रादयो देवा अपि विष्णुसहायार्थं सुग्रीवादीन् वानराञ्जनयामासुः। अथैकदा हेमवेत्रांशुमालिनः प्रतीहाराः सहसा प्रविश्य प्रणम्य च सभासीनं नृपमवोचत्। देव! तीव्रतपःपुंजपिंजरिताम्बरो महामुनिर्विश्वामित्रस्त्वां द्रष्टुमागच्छति। तच्छ्रुत्वा हर्षपीयूषनिर्भरो राजा वशिष्ठसमेतः समुत्थाय तं मुनिवरं प्रत्युद्ययौ। ततः स महामुनिः सभां प्रविश्य शुभासनमवाप्य तेन च संपूजितः प्रीत्या तमनामयं पप्रच्छ। अथ राजा विनयेन वाणीं सफलां कुर्वाणोऽब्रवीत्। भगवन्! ते स्वागतम्। एषा त्वद्दर्शन-सुधासारसिक्ता सुकृतवल्ली पुण्यपुष्पोज्ज्वला च प्रहर्षमतुलं फलं सूते। तपः, तीर्थाभिषेकः, सत्समागमश्चैते जन्मरजसः परिमार्जनोपायाः संति। प्रभो! उच्यताम्। किं ते प्रियं करवाणि? जनोऽयं तु त्वदाज्ञानुग्रहेणैव कृतकृत्यो भवतु। निशम्यैवं नृपवचनं विश्वामित्रः प्रत्यवदत्। सहस्रांशुवंशे जन्म, विनयोज्वला गुणा रुचिराचारस्य भवतः सर्वं श्लाघ्यमेव। महीपाल! शोणितासारवर्षिणः पिहितदिक्चक्राश्च मारीचाद्या राक्षसा दीक्षितस्य मम यज्ञं बाधंते। अतस्तेषामुग्रतेजसां वधाय महावीरं रामं मे सम्प्रयच्छ। राजन्! विधाता तपोवनस्थानां मुनिजनानां क्रतुपरित्राणार्थमेव क्षात्रं तेजः सृजति। बालोऽयं राम इति मत्वा वृथा संशयं मा कृथाः। इमे वसिष्ठप्रमुखामहर्षयस्ते सुतस्यास्य प्रभावं सम्यगवगच्छंति। निशम्यैतन्मुनिवचनं कम्पिताशयो राजा सविनयं प्रोवाच। भगवन्! कथमयं बालको रक्षःक्षयक्षमोऽस्ति। दीक्षितस्य तव

क्रतुरक्षार्थे स्वयमहं सज्जोऽस्मि । एषाऽक्षौहिणी भवदीयैव । प्रभो ! पुत्रलाभमनोरथैनेव-वर्षसहस्राणि ममायुषो व्यतीतानि । पश्चिमे वयसि समुचितोऽयं पुत्रो मे जातः । अतो राजीवलोचनं रामं परित्यक्तुं नाहमीश्वरः । निशम्यैवं भूपवचनं किंचिदसूयारचितस्मितः कौशिकः पुत्रवत्सलं भूपं जगाद । अहो ! कातरस्येव तव मतिः स्नेहविह्वला जाता । अहह ! त्वमस्य वीरस्य पराक्रमं न जानीषे ? पूर्वं प्रतिज्ञाय कार्यकाले मोहमुपगतोऽसि । एषोऽहं यथागतं व्रजामि । सत्यच्युतस्त्वं सुखी भवेत्यभिधाय विरते मुनीश्वरे पृथ्वी विचचाल देवाश्च भयमापेदिरे । ततः शमिवरो वशिष्ठोऽब्रवीत् । राजन् ! इक्ष्वाकुवंशजस्त्वं स्वप्रतिज्ञां वृथा मा कृथाः । लोके प्रतिज्ञापरिपालनं हि महत्त्वरक्षणं विद्यते । विद्वांसो देहं क्षणभंगुरं मत्वा कीर्तिमेव सततं रक्षंति । अमितप्रभावेऽस्मिन् पुत्रे मुधा शंकां कर्तुं त्वन्नार्हसि । शिष्टरक्षणार्थं दुष्टनिग्रहार्थं च क्षत्रियो लोके जायते । प्राज्यतजेसा कौशिकेन सुरक्षितोऽयं राघवो विरंचित्रातो देवराज इव सर्वथैव दुर्जयो भविष्यति । किम्बहुना अस्य महामुनेः प्रभावेण रामभद्रः सदैव कुशलं समवाप्स्यति । पुरा तेजोनिधिः कृशाश्वो विरंचिवराञ्जयासुप्रभे भार्ये प्राप । ततस्तस्य तयोर्विविधविग्रहं पुत्रशतं जातम् । अस्त्रविदो यद्दिव्यमस्त्रमण्डलं जगुः । स कृशाश्वोऽस्मै विश्वामित्राय समग्रं अस्त्रमण्डलं प्रादात् । राजन् ! विहाय संकोचं महामुनये राघवं समर्पयेति वसिष्ठेनोक्ते महीपतिर्वाढमित्यूचे । ततो राजा शुभशंसिभिर्निमित्तैःस्वाभ्युदयं विज्ञाय कौशिकाय कृतस्वस्त्ययनं सलक्ष्मणं च रामं समर्पयामास । ततोऽतिसंतुष्टो मुनिः काकपक्षाङ्कौ धनुर्धरौ बद्धखड्गौ च राजकुमारौ नीत्वा स्वाश्रमं गन्तुमारभत । अथ गव्यूतिमात्रं गत्वा सरय्वा दक्षिणे तटे स्थित्वा च रामाय बलातिबले विद्ये प्रादात् । एवं जयरूपबलप्रदे विद्ये समवाप्य रघुनाथः सिद्धार्थो बभूव । ततः सानुजो रामस्तत्र निशां नीत्वा प्रातरेव मुनिमनुययौ । सोऽथ गंगासरयूसंगमे पुण्याश्रमं दृष्ट्वा कस्याश्रमोऽयमिति गुरुमपृच्छत् ? तच्छ्रुत्वा गुरुरुवाच । रामभद्र ! पुराऽत्र मूर्तिमान् कामदेवः कृतोद्वाहं देवाधिदेवमुमापतिं च लक्ष्यीकर्तुं सुचिरं तपश्चचार । अथैकदा भगवांस्त्रिपुरान्तकस्तपोवनेऽस्मिन् तं विलोक्य सहसा दृशैव भस्मसाच्चकार । ततो विन्ध्याचलान्तिके तदंगानिचये निपतिते सोऽगविषयः सर्वसम्पदां निलयो बभूव । योऽनंगोऽप्यङ्गनापांगसंयोगाज्जगज्जितवांस्तस्यैवकामदेवस्याऽयमाश्रमोऽस्ति । एतदाकर्ण्य मुनिवचनं विस्मयाविष्टो राघवो निशामेकां तत्रातिवाह्य प्रातरेव ततः प्रतस्थे । सोऽथ नावा सरयूं तीर्त्वा तत्र घनस्वरं च श्रुत्वा किमेतदिति मुनिमपृच्छत् । ततः सोऽभ्यधात् । राम ! पुरा ब्रह्मदेवः कैलासशिखरे

मनसा सरो निर्मितवान् । तदद्यश्चोमानसं सर इति कथ्यते । तस्मात् सरसः प्रसूता इयं सरयू सरिद्वराऽस्ति । जाह्नवीसंगतस्य तत्प्रवाहस्याऽयं जगद्वन्द्यनिःस्वनोऽस्ति । एवमाकर्ण्य गुरुवाक्यं रामस्तं तीर्थसंगमं भूयो भूयः प्रणनाम । ततो दक्षिणतीरस्थं वनमासाद्य रामः कौशिकमपृच्छत् । मुनिराज ! घोरसत्वसंपातयुतं कस्येदं वनम् ? एतदाकर्ण्य मुनिरुवाच । वत्स ! पुरा पृथिव्यां कलूषमलदाख्यौ जनपदावास्ताम् । यदा वृत्रवधादिन्द्रो ब्रह्महत्यामवाप । तदा क्षुत्क्षामकंठः पाकशासनः पुण्यश्लोकैर्महामुनिभिः पवित्रसलिलैः क्षालितो निर्दोषोऽभवत् । ततः स्वस्थो महेन्द्रः कारूपाख्यं शरीरजमलं दृष्ट्वा देशयोर्धन्यतावहं वरं प्रादात् । पुराऽत्र सुकेतुर्नाम यक्षोऽभवत् । विरंचिवरात्तस्य ताटका नाम कामरूपिणी नागायुतबला च कन्या बभूव । अथैकदा सुकेतूराक्षसराजाय सुंदाय तां सुंदरीं सुतां प्रादात् । तस्यामस्य मारीचो नाम दुर्जयः सुतोऽभवत् । अथ कदाचित् भैरवस्वना सा मोहात् पुत्रं पुरस्कृत्याऽगस्त्यप्रधर्षणे मतिं चक्रे । मुनिस्तां सपदि विकृता भवेत्यशपत् । अथ जनकण्टको मारीचोऽपि तच्छापाद्राक्षसतां जगाम । तदाप्रभृति सा दुष्टा मालवानां करूषाणां च क्षयं कुर्वाणाऽत्र निवसति । रघुनाथ ! कार्यगौरवात् स्त्रीविचारं परित्यज्य गोत्रजान्तकरीं घोरामिमां राक्षसीञ्जहि । एवमनुश्रूयते । पुराऽपि दीर्घजिह्वाख्या विरोचनसुता विश्वक्षयोदिता शक्रेण हताऽभूत् । एवं शक्ररहितं लोकमिच्छन्ती दैत्यमाताऽपि शरणागतवत्सलेन विष्णुना सहसा निहता । राम ! जगद्वन्धुस्त्वं मुनिवृन्दहितमेव समालम्ब्य वज्रधारेण पत्रिणा ताटकामेतां निपातय । निशम्यैवं गुरुशासनं रामः क्षणं ध्यात्वोवाच । देव ! सर्वधर्मनिर्णयेऽहं तु भवद्वचनमेव प्रमाणं मन्ये । अपरं च पित्राऽप्यहं भवच्छासने नियुक्तोऽस्मि । अतः सर्वात्मना मया भवदाज्ञैव परिपालनीयेत्याभाष्य धन्विवरोऽधिज्यमादाय च वज्रशैलनिष्पेषनिःस्वनं ज्याघोषमकरोत् । तच्छ्रुत्वा त्रिदशवर्हिणोऽतिसंतोषमवाप्य ननृतुः । अत्रान्तरे कोपं कृत्वा प्रलयांभोधरच्छविः करालवदना च सा रामाभिमुखमायाता । एतदालोक्य । रघुनंदनः क्रोधादापतंती तां सहसा बाणेन जघान । एवं रामशरविद्धगात्री सा कूलंकषैर्जलैश्छिन्ना तमालवनमालेव सद्यो धरातले निपपात । एवं तस्यां हतायां भुवनत्रये च प्रसन्ने देवराजो रामं प्रशंसन् मुनिमुवाच । कौशिक ! स्वच्छयशसेऽस्मै रामाय पुनरप्यस्त्रविद्यारहस्यं प्रयच्छ । यतः स्वगुणैरेव पात्रतां नीताः साधवः किं किमभिलषितं नाप्नुवंति ? एवं सुरेशेन प्रोक्तो मुनीश्वरो रघुवीराय सायुधां कृशाश्वशिक्षितामस्त्रविद्यां प्रादात् । ततो ब्रह्मास्त्रं, कालचक्रं, धर्मचक्रं,

विष्णुचक्रं, पैनाकं, आग्नेयं, वारुणं, वायव्यं, नारायणास्त्रं, क्रौंचं, नागास्त्रं, कंकालं, कापालं, मुसलं, गन्धर्वास्त्रं, वैद्याधरं, मोहनं, प्रमथनं, वर्षणं, शोषणं, संतापनं, नैषादं, मानवं, वामनं, शामनं, सोमास्त्रं, शैशिरं रौद्रास्त्रं चेति नानास्त्रसमुदायं राघवो विश्वामित्राज् जग्राह । ततस्तेन मुनिसकाशाज्जृंभकरहस्यानि ससंहाराण्यप्यशेषतः संप्राप्तानि । सोऽथ पाणिना तानि संस्पृश्य प्रतिपूज्य च विससर्ज । अथ काननं व्रजन् रामः कौशिकं पप्रच्छ । भगवन् ! इदं प्रफुल्ललताकुंजमंजुगुंजद्विहंगमं, मनोनयननिर्वाणं च कस्य काननं वर्तते ? एवं सविनयं रामप्रश्नं श्रुत्वा मुनिरभाषत । वत्स ! सिद्धाश्रमोऽयम् । श्रीभगवान् विष्णुर्वामनरूपं धृत्वाऽत्रैव भुवनत्रयं क्रांत्वा च त्रैलोक्यजयिनो बलेः कृत्स्नां जगतीं जहार । अस्मिन्नेव सिद्धमुनिजनसेविते पुण्यप्रदेशे मम यज्ञभूमिरस्तीति मुनिनोक्ते सिद्धाश्रमं प्राप्तो रघुनंदनःसज्जोऽस्मि यज्ञरक्षार्थमित्यूचे । ततो विश्वामित्रो राघववाक्येन संतोषमवाप्य वीतविघ्नेन चेतसा दीक्षितोऽभवत् । ततः सलक्ष्मणो रामो मुनिगिरा निद्रां परित्यज्य क्रतुत्राणाय षडहोरात्रं स्थाणुरिव निश्चलस्तस्थौ । अथ सप्तमेऽहनि मुनिवेद्यां प्रज्वलिते जातवेदसि भीमनिर्घोषैर्नक्तंचरैर्व्याप्तं नभोऽभूत् । तस्मिन्नवसरे रक्तास्थिवर्षिणान्तेषां मेघौघविपुलैर्बलैरुग्रतिमिरैश्च ग्रस्ता इव दिशो बभूवुः । ततस्तेषां गंभीर संरंभैर्घोरविक्रमैर्भ्रान्तेव भुवनत्रयी बभूव । एतदालोक्य रामो लक्ष्मणं सस्मितं प्रोवाच । भ्रातः ! मखविघ्नकारिणामेषां सैन्यसम्पदस्तु पश्य । विकारैर्दूषितात्मनां मन इव मलिनतां नीतं व्योम प्रतिभातीत्यभिधाय रामो यन्मारुतास्त्रं प्राक्षिपत् । तेन दिशो विदिशश्च दोलाविलासं लेभिरे । मायाविशारदो मारीचश्चापि योजनशतान्ते निपपात । ततो रामो ज्वालाजटिलाग्रेणाग्नेयास्त्रेण राक्षसाधिपं सुबाहुं ददाह । अथ कोपाकुलो राघवो वायव्यास्त्रेण सपदि सर्वांस्तदनुगान् हत्वा महामुनेः क्रतुक्षेत्रं सर्वतो निर्विघ्नं चक्रे । एवं सुन्दसुते मारीचे जलधितटे निपतिते उपसुंदात्मजे सुबाहौ च भग्ने सिद्धचारणगन्धर्वकिन्नरयोषितां नवेऽस्मिन् रामचरिते कोऽप्यपूर्वः कथारसो बभूव । अथ महायज्ञे संपूर्णे महर्षयो रामं प्रोचुः । रघुनाथ ! त्वत्पराक्रमरक्षितोऽयं मखः कौशिकेन संप्राप्तः । एतेष्वेवदिनेषु महेन्द्रतुल्यविभूतेः श्रीमिथिलेश्वरस्य जनकस्य राजकल्पवृक्षफलं धनुर्यज्ञो भविष्यति । तत्र गत्वा महेश्वरधनुः पश्य । किम्बहुना । यत्प्रगल्भा अपि देवा तत् संकल्पे धर्तुं न शक्ताः । एवं मुनिजनवचनं समाकर्ण्य विश्वामित्रं पुरस्कृत्य सलक्ष्मणो रामो मिथिलां प्रतस्थे । अथ ते सन्ध्यासमये शोणं समासाद्य तत्तटे जपहोमादिकाः क्रियाश्चक्रुः ।

अथ तत्र सुखासीनं विश्वामित्रं रामोऽपृच्छत् । देव ! कोऽयं रम्यतमः प्रदेशः ?

एतदाकर्ण्य मुनिवरोऽब्रवीत् । रघुवीर ! पुरा कुश इति विश्रुतो ब्रह्मपुत्रो नृपो बभूव । तस्य कुशनाभः, कुशाम्बः, असूर्तरजसः, वसुश्चेति चत्वारो महावीर्याः पुत्रा अभूवन् । तेषु कुशनाभो महोदयं कुशाम्बः कौशाम्बीं अमूर्तरजसः प्राग्ज्योतिषं वसुश्च गिरिव्रज-मावासयामास । अथ गच्छता कालेन राजर्षिकुशनाभस्य घृताच्यां कन्यानां शतं बभूव । ततो यौवनवसन्तेन विभूषिताः सविभ्रमास्ता लता इव विलासललिता अभूवन् । अथैकदा समीरणः क्रीडोद्याने ता विलोक्य रागात् संगमं ययाचे । किन्तु कन्यकास्ताः पितृभयात् तस्याभ्यर्थनां नामन्यंत । ततः क्रुद्धो देवः सर्वगात्राणि प्रविश्य सर्वास्ताः कुब्जीचकार । एतज्ज्ञात्वा तत् कन्याशतं पितरमुपसृत्य सविनयमभा-षन्त । तात ! सर्वात्मको वायुरस्मान् प्रधर्षयितुमभिलपति । वयं पितृमत्यो भवदाज्ञां विना किमपि कर्तुं न प्रभवामः । निशम्यैवं कन्यकागणवार्तामतिसंतुष्टो राजा प्रत्यु-वाच । पुत्र्यः ! धन्या यूयम् । क्षमामवलंब्यैव कुलव्रतं पालितं युष्माभिः । लोके क्षमातुल्यं सदनुष्ठानं नास्ति । अत्रान्तरे चूलीनाम महामुनिरूर्ध्वरेता ब्राह्मं तपः समा-चचार । तत्रैकदा उर्मिलातनया सोमदा नाम गन्धर्वी समागत्य पुत्रकामनया तपस्यन्तं मुनिं पर्यचरत् । अथ गच्छता कालेन तत्सेवया परितुष्टो मुनिस्तां परिणीय तस्यां ब्रह्मदत्ताख्यं पुत्रं जनयामास । अथैकदा महीपतिः कुशनाभः कुलशीलादिगुणोपेतं ब्रह्मदत्तमहीपमवलोक्य तस्मै सर्वा एव कन्याः प्रादात् । ततः स्पृष्टमात्रे पाणौ सर्वा एव कन्या विकुब्जा विगतज्वराश्च बभूवुः । अथ कुशनाभः पुत्रेष्ट्यां गाधिनामकं पुत्रं सत्यवतीनामिकां पुत्रीं च समवाप्तवान् । राम ! तस्य महात्मनोऽहं पुत्रोऽस्मि । या च सत्यवती मे स्वसा ऋचीकाय दत्ता । सा कौशिकीति विख्याता सरिदभवत् । कल्मषापहोऽयं देशस्तयैव पुण्यनद्या समन्वितो विभाति । काकुत्स्थ ! कथाः कथयतो ममार्धरात्रो गतः । सर्वे तरवो निष्पंदा मृगपक्षिणश्च निलीनास्तिष्ठंति । त्वमपि संप्रति निद्रामभ्येहीत्यभिधाय मुनीश्वरो विरराम । अथाऽन्येद्युः सर्वे शोणसमेतां जाह्नवीं समुत्तीर्य दिनांते गंगापुलिने स्थितिं चक्रुः । ततस्तत्र कौतुकाद्रामेण गंगावतरणं पृष्टो मुनिमण्डलस्थो महर्षिः प्रोवाच । रघुनंदन ! पुरा हिमाद्रेर्मेनायां गंगागौर्यौ दुहितराव-भूताम् । तयोर्ज्येष्ठा देवसरिद् गंगाकनिष्ठाचोमा बभूव । एतदाकर्ण्य रामो महामुनि-मपृच्छत् । गुरुदेव ! कृपया गंगावतरणप्रसंगं श्रावयेति वचनमाकर्ण्य मुनिवरोऽब्रवीत् । राम ! पुराऽयोध्यायां सूर्यवंशशिरोमणिः सगरो नाम महीपतिर्बभूव । तस्य ज्येष्ठापत्नी-विदर्भराजतनया केशिनी कनिष्ठा च सुपर्णतनया सुमतिरितिविश्रुताऽभवत् । अथ

गच्छता कालेन भृगुवरात्केशिनी पुत्रमसमंजं सुपर्णा च गर्भतुम्बं लेभे। अथ कालेन राजा तुम्बभेदाद् विनिःसृतान् षष्टिपुत्रसहस्राणि प्राप। अथ कदाचिज्ज्येष्ठोऽसमंजः सरय्वां बहून् बालकान् प्रक्षिप्य जहास। एतदाकर्ण्य न्यायनिपुणो राजा तमुत्तराधिकारिणमपि सहसा पुरान्निर्वासयामास। अथैकदा राजा स्वपौत्रमंशुमन्तमामंत्र्य हयमेधाय दीक्षितोऽभवत्। अत्रान्तरे वासवो राक्षसीन्तनुमास्थाय तं यज्ञियाश्वमपजहार। तच्छ्रुत्वा राजा सर्वान् पुत्रानाहूयादिदेश। पुत्रकाः! यूयमितो गत्वाऽशु घोटकं विचिन्वध्वम्। निशम्यैवं भूपनिदेशं ते ओमित्युच्चार्य दिशो विदिशश्च बभ्रमुः। ततस्ते पृथ्वीप्रदक्षिणां कृत्वा पितरमुपगम्य च प्रोचुः। तात! समग्रा मही परिक्रान्ता। सत्ववंतश्च रणे निषूदिताः किन्तु क्वाऽपि वाजिहर्तारं नोपलभामहे। संप्रति किं करवाम? सुनिरूप्याज्ञापयतु भवान्। निशम्यैवं पुत्रगणवाक्यं कोपकम्पितो राजाऽब्रवीत्। वत्स! पुनर्गत्वा वसुधातलं खनत। स्वस्त्यस्तु। किम्बहुना। हयहर्तारमासाद्यैव कृतार्था निवर्तध्वम्। एतत् पितृवचनमाकर्ण्य सर्वेएवराजपुत्रास्तथास्त्विति व्याहृत्य च यथाभिमतं देशं गताः। ततः केचिद् गच्छन्तो वसुधातलं चखनुः। अपरे पूर्वदक्षिणपश्चिमोत्तरस्थान् दिग्गजान्प्रणम्य कृतार्थतामभन्यंत। ततः सर्वे मिलित्वा पातालतलं जग्मुः। यत्र साक्षाद्विष्णुस्वरूपो भगवान् कपिलदेवः समाधिनिरतोऽतिष्ठत्। ततस्तेविचरन्तस्तस्याश्रमे चरन्तं हयमवलोक्य हर्षपारावारस्य चरमसीमानमवापुः। अथ ते प्रमादात् तमेव हयहर्तारं निश्चित्य यावत्तं सहसा महीतुमुपाद्रवंति तावत्तद्दृष्टिनष्टाः सर्वे भस्मकूटावशेषतां प्रययुः। अथ कदाचिद् राजा चिरगतान् पुत्रान् विज्ञाय नप्तारमाहूय प्रोवाच। वत्स! त्वं शूरः कृतविद्यश्चाऽसि। अतो यत्र कुत्राऽपि गत्वा पितॄणां समाचारमन्वेषय। एवं सगरेण विसृष्टः स धन्वी दिग्गजगिरा पाताललोकं प्रविवेश। ततो यत्र ते पितरो भस्मराशीकृतास्तत्र गत्वा दुःखशोकाकुलो भूत्वा च छिन्नमूलद्रुम इव सहसा पपात। अत्रान्तरे समागतो वैनतेयस्तमाश्वास्य प्रोवाच। पुरुषव्याघ्र! मा शुचः। महाबला इमे कपिलकोपाग्निना दग्धाः। सम्प्रत्येतेषां पापापनुत्तये मंदाकिनीमत्रानयेत्यादिश्य सुपर्णो जगाम। ततोंऽशुमान् धैर्यं धृत्वा चरंतं हयं समादाय च पित्रे वृत्तसमेतं समर्पयामास। अथ राजा विद्युत्पातोपमं तद्वचः समाकर्ण्य यथाकथंचिद्यज्ञं समापयामास। रघुवर! एवं द्वात्रिंशद्वर्षसहस्राणि राज्यं कृत्वा मनस्विमुकुटमणिः सगरः स्वर्गलोकमयात्। ततोंऽशुमान् राजसिंहासनमलंचकार। सोऽपि समये गुणाढ्याय दिलीपाय राज्यं दत्वा रम्ये हिमवच्छिखरे सुदारुणं

तपस्तेपे । अथ पितरि देवलोकं प्राप्ते दिलीपोऽपि कथं गंगावतरणं स्यात्, कथं चैतेषां सलिलक्रियाभवेदिति चिन्तापरो बभूव । ततः सोऽपि वर्षसहस्राणां विंशतिं राज्यं कृत्वा वंशप्रदीपाय भगीरथाय श्रियं दत्वा च त्रिदशेश्वरलोकं जगाम । एवं सगरपुत्राणामितिहासं श्रुत्वा स राजर्षिर्मंत्रिषु राज्यभारमाधाय गोकर्णे गंगावतरणार्थे दीर्घं तपश्चक्रे । अथ वर्षशतान्ते प्रजापतिः स्थाणुनिश्चलं तं समभ्येत्य वरं गृहाणेत्यवदत् । तच्छ्रुत्वा सोऽब्रवीत् । भगवन् ! व्योमगंगावतीर्णेन सलिलेन भस्मीभूतान् पितृगणानासावयितुमिच्छामि । एतद्राजर्षिवचनं श्रुत्वा विरंचिरुवाच । महाभाग ! गंगावतरणेन तु ते मनोरथः पूर्णो भविष्यति । परंतु गंगावेगं पृथ्वीयं कथं धारयिष्यति ? एतदर्थं त्वं पूर्वं महादेवं समाराधयेति निगद्य ब्रह्मदेवोऽन्तर्दधे । अथ दृढनिश्चयो राजा कानिचिद् दिनानि निराहारः कानिचिदहानि जलं पीत्वा चोर्द्ध्वबाहुस्तपस्तेपे । संवत्सरे पूर्णे त्रिधुशेखरो राज्ञे प्रत्यक्षदर्शनं दत्वा प्रोवाच । राजन् ! तव प्रीत्यै शिरसाऽहं शैलराजसुतां धारयिष्यामीत्यादिश्यान्तर्हितोऽभवत् । ततो विरंचिशासनात् स्फीतफेनाट्टहासिनी त्रिदशवाहिनी धूर्जटेः शिरसि पपात । साऽथ देवदेवस्य जटाजूटे चिरं भ्रान्त्वाऽपि मूर्खबुद्धिः शास्त्ररहस्यमिव पारं न प्राप । ततः संवत्सरे समाप्ते भगीरथेन तपसा पुनः पुनः प्रार्थितो भवो जटां निष्पीड्य जान्हवीं तत्याज । ततो हरशिरः शृंगपतिता जगद्वन्द्यसिद्धमुनिभिर्वन्द्यमाना च जगतीतलेऽवततार । साऽथ मत्स्यकच्छपादिजलचरगणसमेता महात्मनो जन्होर्यज्ञवाटं संप्लावयामास । ततो महामुनिस्तस्या अवलेपं ज्ञात्वा क्रोधात् सर्वमेव जलमपिवत् । ज्ञात्वैवं यदा सगंधर्वा मुनयस्तमनुनिन्युस्तदा महातेजास्तां श्रोत्राभ्यामसृजत् । तदा प्रभृति लोकेऽस्मिन् गंगा जान्हवीति निगद्यते । ततो भगीरथस्यानुगा सा पातालतलं गत्वा पुण्यसलिलस्पृष्टभस्मभ्यः सगरसुतेभ्यः सद्गतिं प्रादात् । ततो राजा विरंचिवचनात् तत् सलिलैस्तेषां सलिलक्रियां कृत्वा कृतकृत्यो बभूव । रघुनंदन ! एवं भगीरथेनानीता गंगा भागीरथीति विश्रुताऽभवत् । रघुवीर ! इदानीं कनिष्ठाया हरवल्लभाया अपि विवाहयोग्याया वृत्तान्तं शृणु । श्रीमती मेनकात्मजा गौरी उग्रेण तपसा देवाधिदेवं पिनाकिनं वरं समवाप्य चिरं दिव्यकैलासादिगिरिसानुषु विजहार । तत्र स्पर्धानुबंधेन रतिसंगमे प्रवृत्ते यद्यपि तयोः पार्वतीपरमेश्वरयोर्दिव्यं वर्षशतं व्यतीयाय । तथापि तस्यां तनयो नाऽजायत । अथ विरंचिप्रमुखादेवास्त्रैलोक्यसंक्षयात् त्रस्ताः । अतः समुद्भूतं तेजः कोनु धर्तुं शक्ष्यतीति चिन्तयां बभूवुः । ततस्ते शरणं गत्वा तौ प्रणिपत्य च महारतस्य विरतिं ययाचिरे ।

अथ भूतभावनो भगवान् भवः प्रीत्या तानुवाच । देवाः ! निजपदात् क्षुभितं मे तेजः को धारयिष्यतीति ? श्रीचन्द्रचूडेनोक्ते प्रणताः सुराः प्रोचुः । भगवन् ! इयं भूतधात्री भवत्तेजो धारयितुं शक्ता । निशम्यैवं सुरगणवचनं हरःक्षितौ वीर्यं विससर्ज । ततस्तेन तेजसा सगिरिकाननां महीं व्याप्तां दृष्ट्वा देवास्तद्ग्रहणाय सानिलं दहनं चापि समचोदयन् । एवं वन्हिना व्याप्तं तत्तेजः श्वेतपर्वतो बभूव । तथा दीप्तं जातरूपमयं महच्छरवणं चाऽप्यभूत् । ततः कुपिता गिरिजा स्वदारेषु न कदाचिद्वोऽपत्यं भविष्यतीति शशाप देवान् । अपरंच भूमिरियं संततिस्नेहरहिता बहुभोग्या च भविष्यतीत्युक्त्वा ललज्जे । अथ हिमगिरौ हरो देव्या सह पुनस्तपश्चक्रे । यतः परकार्यमुखा महापुरुषाः स्वसुखेषु तु वार्हिमुखा एव तिष्ठंति । अत्रान्तरे ब्रह्मवाक्यात्सेनाधिपार्थिनो देवा गंगायामपत्यं जनयेति जातवेदसं प्रोचुः । ततस्तेन गर्भाधानाय देवापगा संप्रार्थिता । साऽपि सुरगण-प्रीत्यर्थं दिव्यस्वरूपं दध्रे । साऽथ तत्तेजो दुःसहं वीक्ष्य समन्ततो व्यकीर्यत । एवं सर्वतो विकीर्णोऽनलस्तामपि वीर्येणापूरयत् । अथ सर्वस्रोतःसु पूर्णेषु सा हुताशनं बभाषे । देव ! व्यथितमानसाऽहं ते तेजो धर्तुं सर्वथा नोत्सहे । ततो वन्हिवचसा गंगा तद्भासुरं गर्भं यत्र शरवणे तत्याज । तत्र सहस्रांशुसमप्रभः कुमारः समुदपद्यत । स एव कृत्तिकाक्षीरविवर्धितत्वात् कार्तिकेय इति संज्ञामवाप । सोऽथ तारकासुरं हत्वा सर्वं देवकार्यं चकार । यत्तेजो हिमालये पतितं तद्धिरण्यमभूत् । एवं विस्तीर्णं तत्तेजः स्थानभेदाद्रजतपारदलोहताम्रत्रपुसीसकादिधातुरूपेण परिणतिमवाप्य पृथक् पृथक् संज्ञामवाप । अथाऽन्येद्युः शनकैर्व्रजन्तस्ते गंगापुलिनमेखलां विशालां नगरीं प्रापुः । ततो रामः सुमतिभूपतेरतिरमणीयां पुरीं दृष्ट्वा तत्कथां पप्रच्छ । तच्छ्रुत्वा विश्वामित्रोऽब्रवीत् । दाशरथे ! पुरा कृतयुगे दितिसुता दैत्या अदितिसुता देवाश्च मिलित्वाऽमृतलाभाय क्षीरसागरमंथनं निर्धारयामासुः । ततस्ते वासुकिं योक्त्रं मंदरं च मंथानं कृत्वा सहसा ममंथुः । तत्रादौ यद् विषं न्यसरत् । तेन सदेवासुरमानुषं सकलं जगददहत् । ततो देवाः संभूय महादेवं शरणमयासिषुः । स महाभागो विष्णुवचसा विषं पीत्वा सर्वेषां कष्टं निवारयामास । ततो देवगणाः पातालं प्रविश्य विष्णुं तुष्टुवुः । अथ भगवान् करुणां कृत्वा कामठं रूपं धृत्वा च पर्वतं पृष्ठोपरि दधार । ततो वर्षसह-स्रेण रत्नानि निःसर्तुमारेभिरे । अप्सु निर्मथनाद्या वरस्त्रियो न्यसरन् । ता अप्सरस इति जगति विश्रुता अभूवन् । ततस्तासां च या या असंख्याताः परिचारिका अभूवन् । तास्ताः सुरासुरैर्गृहीताःसर्वसाधारणा बभूवुः । अथ या वरुणसुता वारुणी जाता । तां दिति-

सुतास्तत्यजुरदितिसूनवश्चाऽगृह्णन् । तेन दैतेया असुरा आदित्याश्च सुरा वभूवुः । अथोच्चैःश्रवान्यसरत् । तं देवराजोऽग्रहीत् । ततः कौस्तुभमणिर्निःससार । भगवान् विष्णुस्तंजग्राह । अथो नानौषधिवर्गैः समेतः सुधापूर्णकमण्डलुश्च वैद्यचूडामणिर्धन्वन्तरिः प्रादुर्बभूव अत्रान्तरे अमृतार्थे देवासुरसंग्रामो भवितुमारब्धः । तत्र सर्वलोकक्षयं दृष्ट्वा विष्णुर्मोहिनीरूपं धृत्वा च तूर्णंसुधाकलशमपाऽहरत् । ततो विष्णुप्रसादाद्देवेन्द्रोऽशेषान्दानवान् निहत्याऽमरावतीं शशास । एवं हतेषु पुत्रेषु परमदुःखिता दितिः स्वामिनमुपसृत्यजगाद । कान्त ! त्वत् प्रसादाच्छक्रहन्तारं पुत्रमाप्तुमिच्छामि । निशम्यैतद् भार्यावचनं कश्यपोऽब्रवीत् । सुमुखि ! यदि त्वं पूर्णे वर्षसहस्रके शुचिर्भविष्यसि । तदा तु वलज्येष्ठं शक्रनिषूदनं सुतं समवाप्स्यसीत्यभिधाय गते महामुनौ दृढसंकल्पा दितिः सुदारुणं तपश्चक्रे । अथैकदा छिद्रान्वेषणदक्षो मघवा समित्कुशाग्निकुसुमादिभिस्तां पर्यचरत् । किम्बहुना । गात्रसंवाहनैरपि तस्याः श्रममपाहरत् । एवं दशोने वर्षसहस्रे पूर्णे परमसंतुष्टा दितिरिन्द्रं वभाषे । वत्स ! शिवमस्तु । त्वमाचिरात्समकक्षं भ्रातरं समधिगमिष्यसीत्यभिधाय शीर्षस्थाने पादौ कृत्वा च मध्याह्ने सुष्वाप । विलोक्यैवं विपर्ययं प्रसन्नात्मा देवराजस्तच्छरीरं प्रविश्य वज्रेण तत्रस्थं गर्भसप्तधा चिच्छेद । अथ विदारितो गर्भो यदा सुस्वरमरोदीत् । तदाऽकस्माद् दितिरबुध्यत । अथ सुराधिपोऽस्य रोदनेन दितिं प्रबुद्धां ज्ञात्वा मारोदीर्मारोदीरितिवदन् तं गर्भं विदारयांबभूव । एतदालोक्य न हन्तव्यं न हन्तव्यमिति दितिरुवाच । अथ मातृवचनगौरवाच्छक्रो बहिर्निर्गत्य करौ संयोज्य दितिमभाषत । देवि ! त्वमशुचिः सुप्ताऽसि । अतोऽवकाशं लब्ध्वा रणे शक्रहन्तारं गर्भं सप्तधा कृतवानस्मि । मातः ! सततमात्मानं गोपायीतेति श्रुतिवाक्यमनुस्मरन् रिपुदमनमकार्षम् । सम्प्रति ममापराधं क्षंतुमर्हसि । रामभद्र ! मारोदीरितिशक्रवचनेन ते देवा मरुत्संज्ञका वभुवुः । अत्रैव पुनीतक्षेत्रेऽलंवुषायामिक्ष्वाकुर्विशालाख्यं सुतं जनयामास । तेनेयमावासिता नगरी विशालेति प्रसिद्धिमवाप । अत्रान्तरे विदितवृत्तान्तो विशालाधिपतिः सुमतिस्तत्रागत्य विश्वामित्रं पुरस्कृत्य च राम लक्ष्मणावपि संपूजयामास । ततो राजा कौशिकाद्राजकुमारयोः परिचयमवाप्य परमप्रीतो वभूव । अथाऽन्येद्युः पुरातनैश्चिन्हैरंकितं स्थानं दृष्ट्वा रामो विश्वामित्रं पप्रच्छ । गुरुदेव ! कस्यायमाश्रमः ? तच्छ्रुत्वा महामुनिरुवाच । कौसल्यानंदन ! आसीत्पुराऽत्र गौतमो नाम महर्षिः । तस्य तपःश्रीरिव दिव्यरूपिणी योषिदहल्याऽभिधाना वभूव । अथैकदा तत्स्वरूपचर्चां श्रुत्वा मन्मथासक्तो देवराजो मुनिवेषं विधाय विजनेऽहल्यां

प्रोवाच । वरवर्णिनि ! संगमार्थिनो मम मनोरथमाशु पूरय । एतत् प्रियवचनमाकर्ण्य शक्रोऽयमित्यवज्ञाय चाहल्या तं संपूर्णसंकल्पं चक्रे । उक्तं च कुंजरकर्णाग्रात् किंवा पिप्पलपर्णादथवा विद्युद्विलसनादपि विलोलं ललनामनो भवति । अत्रान्तरे समागतो गौतमः स्वसदृशं शक्रं लज्जया तूर्णं गच्छन्तं च विलोक्य कोपकम्पितः प्रोवाच । दुर्मते ! मम रूपं समालम्ब्य यत् त्वं कुकृत्यं कृतवानसि । तेन दोषेण त्वं विफलो भविष्यसीत्यशपत् । सोऽथ भार्यामपि शशाप । दुष्टे ! रामसंदर्शनावधि त्वं शीलपरित्यागादस्मात् काननेऽस्मिन् निरालम्बा भस्मशायिनी च शिलाभवेति शशाप । सोऽथ सिद्धचारणसेवितं हिमवच्छिखरं च गत्वा तीव्रं तपस्तेपे। रघुनंदन ! त्वमिदानीम् शापादहल्यां संतारय । यतः साधुसमागमश् चिरगूढपरिक्लेशविनाशायैव भवति । एतन्मुनिराजवचनं समाकर्ण्य सलक्ष्मणो रामस्तत्र गत्वा नीहारजालसंछन्नां सुधाकरकलामिव शिलारूपिणीन्तां ददर्श । ततो रामदर्शनमवाप्य परित्यज्य शिलाभावं सा पूर्ववद् दिव्यांगना बभूव । अथ मुनिवधूः शंकां विहाय तौ पूजयित्वा च तुष्टाव । यत्पादपंकजपरागपवित्रगात्रा, श्रीभागीरथी भवविरंचिमुखान् सुरान् पुनाति । साक्षात्स एव मम दृग्विषयो यदास्तेऽतः किं वर्ण्यते मम पुराकृतभागधेयम् । एवमालोक्य देवाः पुष्पवृष्ट्या स्वकीयामपि परितुष्टिं प्रकटयामासुः ।

अथ विश्वामित्रपुरोगमा जनकराजस्य पृथुलश्रियं मिथिलां दृष्ट्वा मुनिसेवितं मखक्षेत्रं विविशुः । तत्र दीप्ततपसां मुनीनां भुजशालिनां भूभुजां च ब्रह्मक्षत्रमयी कांचिदपूर्वाशोभाऽदृश्यत। एवं दृष्टकौतुकः स राघवः कौशिकः क्वचिदेकान्ते स्थितिं चक्रे। अत्रान्तरे जनकभूपतिः स्वयं प्राप्तं विश्वामित्रं श्रुत्वा शतानंदं पुरोहितं च पुरस्कृत्य दर्शनार्थं स्वयं प्रत्युद्ययौ। सोऽथ मनीषिणां मान्यं महामुनिं विधिवत् संपूज्य धन्यताभरणां प्रीतिं समवाप । ततो मुनिर्विनयावनतं भूपतिमनामयं पृष्ट्वा प्रोवाच । राजन् ! सदाचारविभूषणस्त्वं धन्योऽसि । अहोवत ! विदग्धेन भवता कान्ताकटाक्षचटुलैर्विभवैरक्षयं यशः समुपार्जितम् । गंगोदकमिव शुभ्रं तव यशः श्रुत्वा नितराम्मेऽन्तरात्मा प्रसीदति । निशम्यैवं कौशिकवचनं जनकः प्रत्यवदत् । भगवन् ! यज्ञसंभारोऽयं विभवाडम्बरः । किन्तु तव पावित्रं दर्शनं सर्वयज्ञफलप्रदं मन्ये । धीरगंभीरव्यंजनोर्जितमानसौ सुकुमाराविमौ राजपुत्रौ कस्य ? मम मनोऽनयोर्दर्शनेन किमप्युत्सुकतामेति । निशम्यैवं प्रीतियुक्तं जनकवचनं कौशिकः प्रोवाच । राजन् ! सुकृतशालिनो राज्ञो दशरथस्यैतौ तनयौ स्तः । अयं गुणनिधीरामः । अस्य चानुजोऽयं लक्ष्मणः । मन्मखरक्षायै राक्षसक्षयकारिणोऽस्य पुण्यो-

ञ्जलाकीर्तिर्लोककर्णावतंसतां याता । महानुभावोऽयमहल्यां समुद्धृत्य विशालां विलोक्य च शिवधनुर्द्रष्टुं त्वत् क्रतौ समायातोऽस्ति । तच्छ्रुत्वा प्रहृष्टो जनकोऽब्रवीत् । ऋषिराज ! तदा तु धन्योऽहम् । यस्य गृहे स्वयं रामः सम्प्राप्तः । अत्रान्तरे विश्वामित्रगिरा रामेण शापान्मोचितां जननीं ज्ञात्वा शतानंदोऽब्रवीत् । राघव ! धन्यो राजा दशरथो यस्य पुण्यकल्पतरुफलं भवादृशः सुतो जातः । अपरं च शक्रविजेता कौशिको यस्य गुरुस्तस्य महिमा केन वर्ण्यते ? पुराऽयं गाधिनंदनो विश्वामित्रः सप्ताब्धिमेखलां पृथ्वीं शशास । अथैकदा स महासैन्यसमेतः काननान्तेषु विचरन् वशिष्ठाश्रमं जगाम । ततः पूज्येन मुनिवरेण पूजितः प्रणयाच्च निमंत्रितः कृच्छ्रादिव तथेत्यूचे । अथ वशिष्ठोऽपि कामधेनुमभ्येत्य प्रोवाच । देवि ! मयाद्य ससैन्यो राजा विश्वामित्रो निमंत्रितः । अतस्त्वं कृपां कृत्वा तस्मै विविधां भोज्यरत्नांशुकश्रियं प्रयच्छेत्युक्त्वा तां विधिवत् संपूजयामास । अथ मुनिवरपरिचर्यया‌ऽतिसंतुष्टा सा तस्मै तदर्थितं सर्वं प्रादात् । ततः सबलवाहनो नरपतिर्विविधैर्भोगैस्तृप्तो महार्घरत्नैश्च सत्कृतोऽतिविस्मयं जगाम । ततो राजा सर्वसम्पदां कारणं शवलां धेनुं विज्ञाय तपोनिधिमुपसृत्य च प्रोवाच । लोके कामधेनुः परं रत्नमस्ति । राजा च रत्नभाजनं विद्यते । ज्ञात्वैतद् गवां सहस्रेण मह्यमेतां संप्रयच्छ । एतदाकर्ण्य वशिष्ठः प्रत्यवदत् । राजन् ! नाऽहं गवामयुतैः स्वर्णराशिभिर्वापि क्वचिच्छवलां दास्यामि । मम हव्यकव्याग्निहोत्रादीनि सर्वाणि कार्याण्यस्या एवाधीनानि संति । अतोऽहं श्रेष्ठां तपः सिद्धिमिव पुण्यामिमां संत्यक्तुं नोत्सहे । श्रुत्वैतत्कौशिकोऽवदत् । महामुने ! हेमशालिनां गजानां शशांकशुभ्राणां हयानां चायुतैरथवा गवां कोटिभिः शवलां मे देहि । ब्रह्मन् ! निर्बन्धोऽन्तेऽनुशयप्रदो भवति । एवमाग्रहातिशयेनोक्तो वशिष्ठः पुनरुवाच । राजन् ! नाऽहं जीवितसर्वस्वं शवलां ते ददामीति ब्रुवाणो मुनिर्यदा कामधेनुं न ददौ । तदा वलवान् गाधिनंदनस्तां बलाज्जहार । एवं बलीयसा भूपालेन ह्रियमाणा धेनुरतिदुःखमवाप्य वशिष्ठं शरणं गत्वा च गद्गद्गिराऽवदत् । भगवन् ! हव्यकव्योपयोगिनीनिर्दोषाऽहं कथं त्वया त्यक्ता ? एतदाकर्ण्य कृपानिधिर्मुनिवरस्तामुवाच । देवि ! न मया त्वं परित्यज्यसे किन्तु मत्सकाशात् त्वं प्रसभं ध्रियसे । किं बहुना । राजा तु बलवान् वयं च ब्राह्मणा दुर्बलाः । किं त्वमधुना शस्त्रवीचीवलयसंकुलां वाहिनीं न पश्यसि ? निशम्यैतन्मुनिवचनं शवलोवाच । मुने ! यथा ब्रह्मतेजो महद्बलमस्ति तथा क्षात्रं तेजो बलवन्नास्ति । विभो ! यद्यप्ययं क्षत्रियः शौर्याधिकस्तथापि त्वदनुप्राणिताया मम बलं पश्येत्युक्त्वा हुंकारेणैव वीरान्पल्हवान् ससर्ज । साऽथ युद्धे विश्वामित्रसैनिकैः क्षपितान् तान्

दृष्ट्वा योनितो यवनम्लेच्छान्, शकृतः शकान्, सृष्ट्वा काम्बोजदरदवाल्हिकतुरुष्कानप्यसृजत् । ततो विकृताकारैः प्रदीप्तनानायुधैश्च तैर्म्लेच्छैर्युद्ध्यमानः क्षितिपतिः क्षणेन निहताशेषसैनिकोऽभवत् । एतदालोक्य भूपतेः पुत्रशतं सुसंरब्धं वशिष्ठमभ्याद्रवत् । अथ वशिष्ठः समाकृष्टमहाचापखड्गान् जवादापतितांश्च तान् दृष्ट्वा हुंकारेणैव भस्मसाद्विदधे । एवं हतपुत्रो गतसचिवः सैन्यविरहितश्च राजा निरुद्धकच्छायो दावदग्धपर्वत इव बभूव । ततो भूपः प्राज्यं राज्यं परित्यज्य हिमवत्तटं च गत्वा पादांगुष्ठधृतिश्चिरमुग्रं तपश्चचार। अथैकदा वरप्रदो महेश्वरः स्वयमागत्य प्रार्थिने तस्मै दिव्यमस्त्रग्रामं प्रादात् । ततोऽस्त्रबलसंपन्नः स वशिष्ठाश्रमं गत्वा तं त्रस्तशिष्यजनोज्झितं चक्रे । ज्ञात्वैवं वशिष्ठः कालदण्डमिव महोत्कटं ब्रह्मदण्डमादाय संगरे तस्य सर्वाण्येव दिव्यास्त्राणि ददाह । ततः क्षीणसर्वास्त्रो यदा ब्राह्ममस्त्रमसृजत् तदा कोपाकुलोमुनिर्ब्रह्मदण्डेन तदप्यफलं व्यधात् । किम्बहुना । तस्मिन् समये तस्य तद्भैरवं वपुर्द्रष्टुं देवगणा अपि न सेहिरे । ततो भग्नदर्पो विश्वामित्रोऽतिदुःखमवाप्य धिक्क्षात्रं बलमित्युक्त्वा पुनरपि तपसे वनं जगाम । उक्तं च—

धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥

सोऽथ भार्यासहितो दक्षिणांदिशमाश्रित्य तीव्रं तपस्तेपे । येन परमर्षयोऽपि विस्मयमवापुः । तत्र तस्य हविष्यन्दमहिष्यन्ददृढनेत्रमहोदयाः पावकवर्चसः पुत्रा जाताः । अथाऽस्य पूर्वजा हतशेषाश्चाष्टौ पुत्रा भुविख्यातिमवाप्य राज्यभागिनो बभुवुः । ततः पूर्णे वर्षसहस्रे ब्राह्मण्यकामं तं राजर्षिं स्वयं ब्रह्मदेवः समवाप्य प्रोवाच । संयमिना त्वया राजर्षिसंमतास्तु लोका विजिताः । मनुष्यजन्मफलं चापि लब्धम् । इत्यभिधाय पद्मयोनावन्तर्हिते मन्युसन्तप्तो मुनिः शुचा श्वसन् नागइवाहतोऽभवत् । अहोनु ! महीयसा यत्नेनाऽपि मया ब्राह्मण्यं नाधिगतम् । ममैतत्तपः खलसंगतमिव निष्फलतां यातमित्युक्त्वा स पुनरप्युग्रं तपश्चकार । उक्तं च । श्रेष्ठपुरुषाः कार्यमारभ्य फलं विना न परित्यजंति । अत्रान्तरे सत्यसुधाधौताननद्युतिस्त्रिशंकुर्यागेन सशरीरो दिवं गन्तुं स्वपुरोहितं वशिष्ठं च समाहूय परम यत्नवानभूत् । सोऽथ तस्य क्रतोरशक्यतया वशिष्ठेन प्रत्याख्यातस्तत्पुत्रानभ्येत्य प्रोवाच । महाशयाः ! यज्ञे कृतार्थतां याचमानोऽकल्मषश्चाऽहं गुरुणा परित्यक्तः । गुरुवद्गुरुपुत्रा अपि माननीया इति विचिन्त्य युष्माञ्छरणमागतोऽस्मि । सम्प्रति विग्रहवान्दिवं गंतुं भवद्भिर्यष्टुमिच्छामि । अहह ..! सत्यमुक्तं

त्रिद्विद्भिर्यदाविधुरे विधौ पीयूषादपि मृत्युर्भवति । सुहृदः शत्रुतां गच्छंति । समाराधिताश्चापि लोकाः प्रकुप्यन्ति । किम्बहुना । साधुसमागमः पापं प्रमार्ष्टि, शुभोदर्कं च प्रसूते अथ युस्माभिरपि परित्यक्तोऽन्यं गुरुं गमिष्यामि । निशम्यैवं भूपवचनं वाशिष्ठाः प्रोचुः । रे मंद ! सत्यवादिना गुरुणा त्वशक्यत्वात् परित्यक्तोऽसि । दुर्वृत्त ! यत् त्वं मर्यादामतिक्रम्य परान् व्रजसि । तस्मात् सद्यश्चाण्डालो भवेत्यशपन् । सोऽथ निजपुरीं गत्वा तत्रैकां निशामतिवाह्य च प्रातरेवाऽधोनीलाम्बर उपरि रक्तवासाः कल्मषभूषणैश्च भूषितो भूत्वा चाण्डालत्वं परिदर्शयामास । एवं श्रीविहीनं निजकुलच्युतं व्याकुलिताशयं च तं दृष्ट्वा सर्वे पौरा मंत्रिणश्च सहसा तत्यजुः । अहोवतैषा कर्मसंगतिर्यान्नृणां पौरुषमुन्मूलयत्येव । यतः कुशलायोद्यतो राजा प्रत्युत शोच्यतां यातः ? ततश्चिन्तातुरस्त्रिशंकुः करुणाशालिने विश्वामित्राय सर्ववृत्तान्तं निवेदयामास । तच्छ्रुत्वा दयासागरः कौशिकोऽवदत् । माभैषीः । सुखार्थिन् ! एषोऽहं तव क्रतुसमीहिते सज्जोऽस्मि । त्वमनेनैव शरीरेण सुरलोकं प्रयास्यसीत्यभिधाय यज्ञसंभारे शिष्यवर्गान् प्रचोदयामास । ततो मुनिस्तस्य निन्द्यतनोर्याजकोऽभवत् । यतो महात्मनां चरितं तु सदा दुःखितत्राणचतुरं हि भवति । अथ सर्वं मुनिकुलं सत्कारपूर्वकं निमंत्रयितुं तद्विसृष्टाश्छात्रास्तूर्णं दशापि दिशो जग्मुः । ततो विश्वामित्र प्रभावात् प्राप्ते मुनिगणे केचिच्छिष्याः परावृत्य प्रोचुः । कृपानाथ ! वाशिष्ठतनयान् विहाय सर्वे निमंत्रिता मुनयः समायाताः । प्रभो ! तेषां महोदयादीनां दर्पाविष्टं वचस्तु श्रूयताम् । यत्र चण्डालो याज्यः क्षत्रियश्च याजकस्तत्र वयं ब्रह्मर्षयः कथं यज्ञसभासदो भवेम । अहोतु ! महाविप्लवकारिणा तेन विश्वामित्रेण कल्पान्तेन गिरय इव सर्वे ब्राह्मणा अधःपातिताः । निशम्यैवं शिष्यवाक्यं कोपकंपितः कौशिकोऽशपत् । ते वाशिष्ठाः सप्तजन्मशतानि मृत्युदग्धा निर्घृणाः श्वमांसादाश्च मुष्टिका नाम भविष्यंति । अथ दुर्वृत्तो महोदयस्तु निषादतां प्रयास्यतीत्युक्त्वा दृढनिश्चयो महामुनिर्विरराम । ततो विश्वामित्रपृष्ठपोषकैर्मुनिवृन्दैः विहितारंभो विधिः पूर्णोऽभवत् । तस्मिन्नवसरे यज्ञभागार्थे समाहूता देवता यदा नागच्छन् । तदा कुपितो मुनिः स्रुवमुद्यम्य जगाद । राजन् ! महाश्चर्यकारिणो मम तपोबलं पश्य । संप्रति त्वं मम तेजसा सशरीरो दिवं गच्छेति मुनिनोक्तमात्रे नृपो दिवमाचक्रमे । उक्तं च । लोके प्रदीप्तमंत्रतपसां महात्मनां किमसाध्यमस्ति ? अथ शक्रो देवलोकमारूढं त्रिशंकुं दृष्ट्वा त्वमधःशिरा पतेत्युक्त्वा च हुंकारेण तमपातयत् । ततः पतँस्त्रिशंकुस्त्रायस्वेति मुनिमभ्यधात् । एतदालोक्य मुनिः क्रुधाऽत्रैव तिष्ठाऽत्रैव तिष्ठेति तमूचे । ततो मुनिरपरप्रजापतिरिव दाक्षिणमार्गगानन्यान्

सप्तर्षीन् नक्षत्रमालां चाऽपि ससर्ज । एवं नवीनां सृष्टिं रचयितुं समुद्यतं मुनिं दृष्ट्वा संत्रस्ता दिवौकसो दैन्यव्यंजनमंजलिं च कृत्वा तं प्रोचुः । मुनिराज ! महीपतिरयं गुरुशापादशुचितां यातोऽस्ति । अतः सशरीरो दिवं गन्तुं सर्वथा नार्हति । तच्छ्रुत्वा कौशिको देवानुवाच । भो देवाः ! त्रिशंकुस्वर्गगमने ममापि प्रतिज्ञा नान्यथा भवितुमर्हति । भूपालोऽयं सत्कृतैर्नक्षत्रैः सहात्रैव तिष्ठतु । निशम्यैतन्मुनिवचनं शापशंकिता देवास्तमूचुः । महानुभाव ! त्वदाज्ञया वैश्वानरपथाद्बहिर्योगसंख्याविहीनान्यक्षयाणि नक्षत्राण्यत्रैव तिष्ठंतु । अथ तवाज्ञया राजाऽप्ययं सर्वथा तत्रैव तिष्ठतु । तथा तवेयं दिव्यकीर्तिर्लोके सदैव स्थिरा भवत्वित्यभिधाय देववृन्दे तिरोहिते मुनिः क्रतुं समाप्य समायातान् मुनिगणानपि विससर्ज । ततो मुनिस्तपस्तप्तुं पुष्करं तीर्थमगात् । अत्रान्तरे साकेते श्रीमानम्बरीषनामा नृपो बभूव । अथैकदा यजमानस्य तस्य यज्ञीयं पशुं महेन्द्रो जहार । सोऽथ विप्रवाक्यात् तमनुसंधातुं पृथ्वीं विचचार । अथ गच्छता कालेन स तपोवनमासाद्य भृगुतुंगे स्थितं ससुतं सदारं च कमपि ऋचीकनामानं मुनिं समवलोकयामास । सोऽथ तं प्रणम्य प्रसाद्य यथावृत्तमस्मै विनिवेद्य च गवां शतसहस्रेण तं पशुं सुतं ययाचे । एवं भूपवचनं श्रुत्वा ऋचीकः प्रत्यवदत् । राजन् ! ज्येष्ठो विक्रयं नार्हति । यतो ममायं दयितः पुत्रोस्ति । वंशश्चास्मिन् प्रतिष्ठितो वर्तते । एतदाकर्ण्य भार्याऽप्युवाच । योऽयं शुनकाख्यः कनीयान् स मम दयितः सुतोऽस्ति । अतोऽहमिमं प्राणप्रियं सुतं सर्वथा त्यक्तुं नोत्सहे । प्रायो जगति ज्येष्ठः पुंसां प्रियः कनिष्ठश्च योषितां प्रियो भवति । निशम्यैवं मातृवचनं मध्यमः शुनःशेपो राजानं सस्मितमवादीत् । राजन् ! ज्येष्ठः पितुर्न विक्रेयस्तथा कनिष्ठो मातुरीप्सितोऽस्ति । अहं मध्यमो बान्धवविहीनोऽर्थादद्य विक्रीतोऽस्मीतिमुनिपुत्रेणोक्ते राजा गवां शतसहस्रेण तमेव निनाय। ततोऽयोध्याभिमुखं गच्छन् महीपालः पुष्करे निशामवसत् । तत्रादावेव शुनःशेपो विश्वामित्रं समभाषत । भगवन् ! तपोनिधिं त्वां शरणमहं संप्राप्तोऽस्मि । ऋचीकनामकेन मुनिना मध्यमसुतोऽहं विक्रीतोऽस्य राज्ञः क्रतौ पशुतां गतवानस्मि । कृपया रक्ष्यतामिति तेनोक्ते कौशिकः स्वसुतान् प्रोवाच । भो भो पुत्राः ! मद्गिरा भवतामेकः पशुतां यातु । यतः सर्वात्मना मम शुनःशेपो रक्षणीयः । एवं पितृवचः श्रुत्वा पुत्राः प्रोचुः । अहो ! परपुत्ररक्षार्थं भवता स्वपुत्रः कथं त्यज्यते ? अयं स्वपुत्रनिधनोद्यमस्तु श्वमांसाशनतुल्य एवास्तीति पुत्रवचः श्रुत्वा विश्वामित्रः क्रुधा प्रोवाच । रे पितृदूषका ! यूयं श्वमांसादिनः श्वपाकतामेव व्रजन्त्विति शशाप । ततो मुनिः शुनःशेपं प्रोवाच । वत्स !

गच्छ राज्ञो महाक्रतावीदं गाथाद्वयं पठित्वा मां स्मृत्वा च शुभमवाप्स्यसि । एतद्गुरुशासनमासाद्य मुनिपुत्रको भूभुजा सह तत्क्रतुक्षेत्रं प्रययौ । सोऽथ सदस्यानुमतो रक्ताम्बरविलेपनः पवित्रपाशैर्बद्धो वैष्णवं रूपमासाद्य च मनसा कौशिकं सस्मार । ततो गाथाद्वयं पठन् विशमनास्पदं यूपं प्राप । अथ प्रीतः शतक्रतुर्भूपतये क्रतोर्बहुगुणं फलं दत्वा शुनःशेपं ररक्ष । अथ कौशिकोऽपि पुष्करे सहस्राब्दं दुष्करं तपः कृत्वा व्रतान्ते स्वयं ब्रह्माणमागतं ददर्श । ततो देवगणसहितः स विरंचिर्ब्राह्मण्यं विना दिव्यं तपःफलं दत्वा च सहसान्तर्दधौ । अथ दृढनिश्चयो विश्वामित्रोऽपि तत्प्राप्त्यै सुरशंकास्पदं पुनस्तीव्रतरं तपश्चकार । ततः कदाचिन्नाककामिनी मेनकाऽभ्येत्य पुष्करे स्नानं विदधे । तस्मिन्नवसरे कौशिको विलासस्मितसुधासेकपल्लविताधरां, चंचलकटाक्षविक्षेपरचितश्रवणोत्पलां कान्तिकल्लोलिनीमिव तां च विलोक्य सहसा प्रीतिविधेयतां ययौ । उक्तं च । स्मरो महतामपि चित्ताब्धिमंदरो भवति । ततः स्मराकुलो मुनिस्तस्यां निर्भरासङ्गप्रणययंत्रितो भूत्वा दशवर्षायुतं कालमपि क्षणं मेने । ततो मुनिस्तपःक्षयादनुशयमवाप्य नदीवेगः शरदीव ह्रियाल्पको बभूव । ततो मुनिर्मनसो रागं प्रक्षाल्य विवेकविमलो जातः । सोऽथ मेनकां विसृज्य चिरं विपुलं तपश्चक्रे । अथो दयाद्रितटे कौशिकीतीरवासिनस्तस्य तपोयुक्तस्य वर्षाणां सहस्रं शनकैरयासीत् । अथैकदा तपोभीता देवाः प्रजापतिं समभ्येत्य कौशिको ब्रह्मर्षिपदं लभतामित्यूचिरे । ततो देवैः संप्रार्थितो विधाता कौशिकं समभ्येत्य प्रोवाच । मुने ! नाद्याऽपि निर्द्वन्द्वोऽसि । इन्द्रियगणं सर्वथा विजित्य कालेन ब्रह्मसंमतं ब्राह्मण्यं समवाप्स्यसीत्यादिश्य स्वयम्भूस्तिरोदधे । अथ गते विरंचौ महामुनिरूर्द्ध्वबाहुर्निरालम्बस्तपश्चक्रे । ग्रीष्मे पंचानलः शीते च सलिलान्तरमाश्रितोऽभवत् । एवमुग्रतपसस्तस्य भीत्या त्रिदिवौकसां संभ्रमोऽभूत् । ज्ञात्वैवं शक्रस्तज्जिगीषया देवांगनां रंभां प्राहिणोत् । साऽथ शाप चकिताऽपि शक्रवाक्यान् मधुमदनाभ्यां सह कौशिकस्य तपोवनं प्रायात् । ततो मुनिः प्रफुल्ललताजालभ्रमद्भ्रमरमण्डले, स्मरवंदिनि कलालापिनि कोकिलकुले, नयनानंदकौमुदीं विलाससरसारंभां रंभां ददर्श । सोऽथ दीर्घतपा अपि स्निग्धचक्षुषा तां क्षणमैक्षत । उक्तं च । शोषितेऽप्यस्मिन् शरीरेऽभिलाषो न शुष्यति । ततः स प्रणिधानेन सर्वं रहस्यं ज्ञात्वा वत्सरायुतं शिला भवेति शशाप । एवमधुना सार्धं भग्नमनोरथे मन्मथे याते कामक्रोधादिविकारेण मुनिः पश्चात्तापमगमत् । सोऽथ करुणया विप्रप्रसादपर्यन्तं तस्याः शापं विधाय वर्षायुतं मौनी तथाऽभोजनोऽतिष्ठत् । एवं क्रोधमात्स-

र्यवर्जिते निरालम्बे स्थाणुभूते च तस्मिन् शक्रेरिता विघ्नाअवकाशं लेभिरे । अथ वर्षसहस्रान्ते यदा व्रतावधिः समाप्तस्तदा पारणासमये स्वयं शक्रोऽपि विप्ररूपं धृत्वा तत्रागत्य च भुक्तवान् । ततो वर्षसहस्रं स निरुच्छ्वासो बभूव । किम्बहुना । तत्तालुविवरोत्थैर्धूमैर्द्यौः सम्पूरिताऽभूत् । अथ सदेवासुरपन्नगे लोके समुद्भ्रान्ते, तिग्मांशौ मंदतेजसि, जलधिमण्डले क्षुभिते, गिरिसंघाते विदीर्णे, महीतले च कम्पमाने सुरैरभ्यर्थितो ब्रह्मा स्वयं मुनिं समुपाययौ । ततो ब्रह्मा क्षीणमोहाय तस्मै ब्रह्मर्षिपदवीं प्रादात् । यया स सांगोपांगान् सर्वान् वेदान् स्ववशेऽकरोत् । ततः प्राञ्जलिः कौशिकः प्रीतं प्रजापतिं प्रोवाच । प्रभो ! ब्रह्मसूनुर्वशिष्ठो मां ब्राह्मणोऽसीति भाषताम् । ततो देवैः समाहूतो वशिष्ठस्तं समभ्येत्य स्वस्तिब्रह्मर्षये तुभ्यमित्युवाच । अथ देवगणैः सह तिरोहिते पितामहे कौशिको वशिष्ठेन सख्यं कृत्वा सुखितो बभूव । एवमयं महानुभावो विविधाश्चर्यचरितोऽस्ति । बत काकुत्स्थ ! धन्योऽसि । यस्य महामुनिर्गोप्तास्तीत्यभिधाय शतानन्दो व्यरमत । एवमाकर्ण्य पुरोहितवचनं जनकः प्रीत्या पुनः पुनः कौशिकमपूजयत् । ततो दिनान्ते राजा मुनिमामंत्र्य स्वसदनं ययौ । अथ प्रभाते भूपालो मुनिं समेत्य प्रणतिपुरस्सरं प्रोवाच । महामुने ! राघवाभ्यां सह भवान् शैवं धनुर्द्रष्टुमर्हति । भगवन् ! धनुषोऽस्य प्रभावं तु स्वयं जानीषे। पुरा राजर्षि निमेःषष्ठो देवराताख्योऽस्माकं पितामह आसीत् । कपर्दिना स्वधनुस्तस्य हस्ते न्यस्तम् । भगवान् भर्गो दक्षयज्ञवधे प्राज्यतेजसा देवान् विधूय लीलाव्यापृतकार्मुकोऽभ्यधात् । ये मे यज्ञभागमकृत्वा यज्ञभागमलभन्त तेषां पत्रिभिः प्रवरांगान्येषः शातयत्विति वादिनं शर्वं देवाः प्रसादयामासुः। ततः प्रसन्नो भगवान् नीललोहितो मम पितामहाय देवराताय तद्धनुः प्रादात् । तदेव परमार्चितं शैवं धनुरस्माकं गृहेऽद्यावधि वर्तते । कान्तिसंपदां जननी हलाकृष्टमहीजाता सीताभिधाना मे सुताऽस्ति । यः शौर्यनिकषोपमं धूर्जटिधनुराधिज्यं करिष्यति । स श्लाघ्यां जानकीं कीर्तिमिव समवाप्स्यति मुनिराज ! दर्पप्रचण्डदोर्दण्डा वैदेहीविवाहोत्सुकाः के महीपाश्चण्डीशचापदण्डेन न विडम्बिता ? यदा तस्य ग्रहणेऽप्यसक्ता अभूवन् । तदा धारणस्य तु कथा का ? अथ तुलारोपितविक्रमास्ते भूमिपालाः संभूय मे नगरावधं चक्रुः । ततः पूर्णे वर्षे देववरात् क्षीणसैन्याब्धिना मया चतुरंगं महद्बलम् प्राप्तम् । ज्ञात्वैतत्ते ध्वस्तमानमनोरथा भूपाः स्वपुराणि ययुः । यदि रामः कार्मुकारोपणे पणे शक्तः स्यात् । तदा तु शौर्यशुल्कां कुवलयेक्षणां तां मे कन्यां समवाप्स्यतीति कथयित्वा महीपतिः खण्डपरशोर्धनुरानीयतामिति सर्वान् सचिवान् समादिदेश ।

ततोऽष्टचक्रशकटाकृष्टमंजूकाश्रितं नृणां पंचभिः शतैश्चानीतं धनुरदृश्यत । अथ जनकराजेन निवेदितं धनुर्दृष्ट्वा विश्वामित्रो रघुनंदनं जगाद । राम ! त्रिभुवनविश्रुतमिदं कार्मुकं गृहीत्वाऽस्य पुरुषोचितो व्यापारः क्रियताम् । निशम्यैतद् गुरुवचनं रामस्तन्माहेश्वरं धनुः प्रणम्य जगद्विस्मयाकुलितं च कुर्वन् लीलया जग्राह । अथोद्भुतविक्रमः स क्षणादधिज्यं धनुरादाय समाकृष्य च धन्विनां दर्पेण सहैव तद् बभंज । अथ भज्यमानस्य धनुषो ध्वनिरकाण्डताण्डवारंभे नन्दनोद्यानबर्हिणामाचार्यतां ददौ । एवं भग्नकार्मुकशब्देन लोलसप्ताब्धिमेखला वसुधावधूश्चकंपे । ततो विस्मयोत्साहहर्षप्रणयनिर्भरः स पार्थिवोऽभीष्टसिद्धिं समवाप्य मुनिमुवाच । भगवन् ! धन्या खलु मे पुत्री यया रामः पतिः प्राप्तः । किम्बहुना यस्याः कीर्तिः सप्तार्णवप्रणयिनी भूयात् । बहुधा विसदृशासंगकारिणो विधेर्वाच्यताद्य रामसीतासमागमाच् चिरान्निवृत्ता मे दूतास्तूर्णमयोध्यां गत्वा दशरथाय निवेदयंतु । यतः पुण्यवान् स महाभागः पुत्रपरिणयोत्सवेऽत्र समायातु । एवमभिधाय स मिथिलेश्वरो जवशालिभिर्वाजिभिः शीघ्रगान् संकल्पानिव नृपाय दूतान् प्रेषयामास । ततो हर्षपीयूषवर्षिणस्तेपि तूर्णतरं तत्र गत्वा सभासीनं महीपालं विदितवृत्तान्तं चक्रुः । अथ श्रीमान् दशरथो वशिष्ठवामदेवमार्कण्डेयपुरस्सरैर्महामुनिभिः सह मिथिलां प्रतस्थे । तस्मिन्नवसरे समुद्रतुल्येन सैन्येन गच्छता तस्य शस्त्रप्रभाजालवीचीवलयिता दिशो व्यराजन्त । ततो राजा जनको मिथिलां संप्राप्तं दशरथं श्रुत्वा श्लाघ्यसंबंधिसंपदः पुरस्कृत्य च प्रत्युद्ययौ । सोऽथ वशिष्ठप्रमुखान् मुनीन् प्रणम्य स्वजन्म प्रशंसन् जगतीपतिं जगाद । अहोवताऽहमद्य पुण्यवतामवतंसत्वं प्राप्तवानस्मि । यस्य गृहान् भगवान् वसिष्ठो भवांश्च समायातः । जगत्यस्मिन् द्वावेव पुत्रवतां श्रेष्ठौ जातौ । राघवेण पुत्रेण त्वं विष्णुना च स कश्यपः । राजन् ! त्वं राघवार्थं मम शौर्यशुल्कां सुतां गृहाण । किम्बहुना । सम्बन्धेऽस्मिन् मणिकांचनयोगः संजात इति जनकेनोक्तो हर्षादशरथः प्रोवाच । नरनाथ ! भवता प्रीतिमिव समर्पितां कन्यां बहुमन्यामहे । उक्तं च । सुविपुले वंशे जन्म, विद्याविभूषिता मतिः, महाजनैश्च सह सम्बन्धो गुरुजनाशीर्वादफलं कथ्यते । अपरं च । गुणसौभाग्यपूर्णभाग्योदयो यदसौ कौशिको रामस्य श्रेयसे सक्तः । इति रघुनाथेनोक्ते प्रणयार्जिता मुनयस्तपोनिधिं कौशिकं परिणयं च प्रशशंसुः । एवं जनकेन यथार्हं पूजितस्य महीभुजः महानंदचन्द्रसुधासिक्ता रजनी सुखेन जगाम । ततो जनकेन पुरोहितं शतानन्दं विसृज्य निजोनुजः कुशध्वजः समाहूतः । स चाज्ञामवाप्य तूर्णं समभ्यायात् । अथ वेत्रभृतां

गिरा वंदिवृन्दे मूकतां श्रिते वाग्मिवरो वशिष्ठः प्रस्तावोचितं वाक्यं जगाद । राजन् ! शुद्धाभिजनयोर्युवयोरयं श्लाघ्यः सम्बन्धो जातः । सांप्रतं तव पुत्र्या वैवाहिको विधिः प्रवर्त्तताम् । अत्रान्तरे प्रीतिलालसो युधाजिद् भागिनेयं भरतं द्रष्टुं तत्राजगाम । सोऽपि राजतः पूजामवाप्यातुलं हर्षं लेभे । ततो जनकोऽब्रवीत् । रामाय सीतां लक्ष्मणाय चोर्मिलां ददामि । अयं सानुजो भरतः कुशध्वजस्य जामाता भवत्विति भूमिपालेनोक्ते महादानपुरस्सरो महार्हमंगलोदारश्च महोत्सवः प्रावर्तत । ततो मुनिवरोऽब्रवीत् । तत्रादावव्यक्तप्रभवस्य ब्रह्मणो मरीचिरभवत् । मरीचेः कश्यपः, कश्यपाद्विवस्वान्, विवस्वतो मनुः, मनोरिक्ष्वाकुः । इक्ष्वाकोर्विकुक्षिः, विकुक्षेर्बाणः, बाणादनरण्यः, अनरण्यात्पृथुः, पृथोस्त्रिशंकुः, त्रिशंकोर्धुंधुमारः, धुंधुमाराद्युवनाश्वः, युवनाश्वान्मान्धाता, मान्धातुः, सुसंधः, सुसंधेर्ध्रुवसंधिः, ध्रुवसंधेर्भरतः, भरतादसितः, असितेः सगरः, सगरादसमंजः, असमंजादंशुमान्, अंशुमतो दिलीपः, दिलीपाद् भगीरथः, भगीरथात्काकुत्स्थः, काकुत्स्थाद्रघुः, रघोः कल्मापपादः, कल्माषपादात् शंखनः, शंखनात्सुदर्शनः, सुदर्शनाद्रक्तवर्णः, रक्तवर्णाच्छीघ्रगः, शीघ्रगान्मरुः, मरोः प्रशुश्रुकः, प्रशुश्रुकादंबरीपः, अम्बरीषान्नहुषः, नहुषाद्ययातिः, ययातेर्नाभागः, नाभागादजः । अजाद्दशरथः, अस्माद्दशरथाल्लोकपालोपमाः पुत्रा रामभरतलक्ष्मणशत्रुघ्ना अजायन्त । राजन् ! एतेभ्य कन्यका दत्वा कृतार्थो भवेति वसिष्ठेनोक्ते जनकोऽप्यभाषत । आसीज्जनकानां पूर्वजो निमिः । निमेर्मिथिः । मिथेर्जनकः । जनकादुदावसुः । उदावसोर्नंदिवर्धनः । नंदिवर्धनात्सुकेतुः । सुकेतोर्देवरातः । देवराताद् बृहद्रथः । बृहद्रथान्महावीरः । महावीरात्सुधृतिः । सुधृतेर्धृष्टकेतुः । धृष्टकेतोर्हर्यश्वः, हर्यश्वान्मरुः । मरोः प्रतीन्धकः । प्रतीन्धकात् कीर्तिरथः । कीर्तिरथाद् देवमीढः । देवमीढाद्विबुधः । विबुधान्महीध्रकः । महीध्रकात्कीर्तिरातः । कीर्तिरातान्महारोमा । महारोम्णः स्वर्णरोमा । स्वर्णरोम्णो ह्रस्वरोमा । ह्रस्वरोम्णो द्वौ पुत्रौ स्तः । तयोर्ज्येष्ठोऽहं सीरध्वजः । कनिष्ठश्चायं कुशध्वजः । पितरि स्वर्गमारूढे पुत्रवन्मयाऽयं परिपालितः । अथैकदा सांकाश्याधिपतिः सुधन्वा विपुलैर्बलैर्मिथिलान्निरुध्य दूतमुखेन कुलदैवतमस्माकं शांभवं धनुर्ययाचे । ततोऽहमपि पुरान्निर्गत्य युद्धे तं विग्रहरुचिं यशोविग्रहशेषतान्नीतवान् । एवं तस्मिन्वीरगतिं प्राप्ते तत्पुरं सांकाश्यं कुशध्वजाय दत्वाऽहं निर्वृत्तोऽभवम् । अथोभावपि मिथिलेशसाकेतनाथौ गोदानविधिं समापयामासतुः । ततो वैवाहिकमण्डपे समायातेषु श्रीरामभरतलक्ष्मणशत्रुघ्नेषु वसिष्ठपुरोगमा महामुनयोऽपि तत्र समागच्छन् । अत्रान्तरे शतानंदानुमत्या जनकः प्रपामध्ये विधिवद्वेदीं

रचयामास। ततोऽग्निसाक्ष्ये राजीवलोचनो रामः सर्वाभरणभूषितायाः सीतायाः पाणिं जग्राह। अथ भरतो माण्डवीं लक्ष्मण उर्मिलां शत्रुघ्नश्च श्रुतकीर्तिं परिणिनाय । ततः पुष्पसमाकीर्णे परिणयोत्सवे सम्पूर्णे गीतवाद्यनृत्याकुलवधूवदनेन्दुशतार्चिता रत्नांशुविषया च शर्वरी दिनवज्जगाम। राजा यौतुकेऽतुलितं धनं प्रादात् । रथानामयुतं घोटकानां नियुतं गजानां षट्शतं पत्तीनां लक्षं दासीनां च त्रिशतं ददौ। ततो राजा वसिष्ठादीन् सम्पूज्य प्रस्थापयामास । प्रस्थानसमये सीतामालिंग्य जनकोऽब्रवीत् । वत्स ! नित्यं श्वश्रुशुश्रूषणपरा भव । सदैव रामं छायेव सेवस्व । ततः साश्रुलोचना मातरोऽब्रुवन् । पुत्र्यः ! पितृकुलात् श्वशुरकुलं गत्वा यशस्विन्यो भूयास्त । ततो जयशब्दमुच्चरन्ती जन्या प्रतस्थे । अथ प्रभाते भगवान् विश्वामित्रः क्षितीश्वरौ समामंत्र्य तपसे स्फटिकाचलकंदरां जगाम । ततो राजा दशरथोऽपि रत्नराशिसमेतमनुत्तमं कन्यारत्नं समासाद्य मिथिलेशमापृच्छ्य च तनयैः सह प्रतस्थे । अथ व्रजतस्तस्य मत्तेभकर्णतालानिलोच्छ्रितैर्भृंगवलयैः सर्वतः श्यामला दिशो बभूवुः । ततः खलसंपदिव विविधोद्वेगविधायिनी दुर्निमित्तपरंपरा दृष्टिगोचराऽभवन् । सूर्यस्तमसावृतो बभूव । निर्घातेन ध्वस्ता क्षितिश्चिरमकंपत । रजस्तिरस्कृता लोकाः सन्मार्गपरिपंथिनो बभूवुः । भीषणा अनिला बभ्रमुः । एवं सन्देहान्दोलिते समुनिगणे राजवृन्दे च पावकसंघ इव जामदग्न्यः प्रत्यदृश्यत । ततो भयशंकिता वसिष्ठप्रमुखामुनयस्तं वीक्ष्य स्वस्तीति वदन्तोऽस्य पूजां प्रचक्रिरे । अथ घोरविक्रमो भार्गवोऽपि राघवमालोक्य सक्रोधमुवाच । राम ! साम्प्रतं यत् त्वया चण्डीशकोदण्डे कृतं तत् सर्वमहं बालचेष्टितं मन्ये । बलिने कालाय नमोऽस्तु । येनेदं जगज्जीर्यते । अधुना ममेदमद्भुततरं वैष्णवं धनुर्दृश्यताम् । यदि वीरोऽसि तर्हि धृत्वा च समाकृष्यताम् । शिशोऽस्मिन् विज्ञातसारस्त्वं क्षत्रियकालाग्नेर्ममाऽपि द्वन्द्वयोग्यतां यास्यसीति सावज्ञं ब्रुवाणे परशुरामे ससंभ्रमो दशरथः पुत्रप्रीत्या तमुवाच। भगवन् ! वीतरागेण भवता शक्राग्रे शस्त्रं विन्यस्याऽपि कथं युद्धादरः क्रियते ? मुनिराज ! त्वं कश्यपाय सगिरिसागरां पृथ्वीं प्रदाय संन्यासाश्रममवलंब्याऽपि कथं योद्धुमागतोऽसि । प्रभो ! मुनिप्रणयिनी पुण्या संतोषशीलता क्व ? क्षत्रियोचितः कलुषोऽयं युद्धनिर्बन्धश्च क्व ? क्षमा, विवेकः, शमः संतोषः, परहितोद्यमश्च सर्वत्रैव मैत्रमनसां महात्मनामुचितम् । दृष्टिः स्निग्धा, मैत्रं मनः पीयूषवर्षिणी च वाणी सत्यतपसां महामुनीनामेतास्ताः पुण्यभूमयः संतीति दशरथेनोक्ते भार्गवस्तमनादृत्य राममेव जगाद । उक्तं च । क्रोधान्धःक्वाऽऽत्मनः प्रभुर्भवति ? राम ! जगति द्वे धनुषी दिव्ये गणिते । तयोः शांभवं

तु त्वया भग्नं वैष्णवं च मम पार्श्वे वर्तते। पुरा पितामहोत्साहितयोर्वैकुण्ठाशितिकण्ठयोर्धनुः प्रभवसंघर्षादुत्तमं युद्धमभूत्। तत्र हरिस्त्रिपुरारिणाऽकृष्टं कार्मुकं हुंकारेणैव चित्रार्पितमिवाचलं चक्रे। ततो देवैर्निवारितो रुद्रो युद्धाग्रहं परित्यज्य निजधनुर्जनकेषु निचिक्षेप। ज्ञात्वैवं विष्णुरपि स्ववैष्णवं धनुर्भार्गवकुले प्रतिपादितवान्। कार्तिवीर्यापराधेन जगत् निर्भूमिपं कृत्वा महेन्द्रपर्वतस्थोऽहं धनुर्भंगं श्रुत्वाऽत्र समागतोऽस्मि। रघुनाथ! त्वमिदानीं वैष्णवं चापं गृहीत्वा स्वपौरुषं दर्शयेत्यभिधाय विरते भार्गवे राघवः प्रत्यवदत्। मुनिराज! क्षत्रियेष्वपराधोचितस्ते क्रोधो न निन्द्यः। किन्तु तदा विजयोचितः कश्चित् क्षत्रियो न जातः? योऽर्घ्येषु नापराध्यति स पराभवमपि नाप्नोति। रजोध्वस्तं क्षात्रवृत्तं धूमश्याममपात्रकोपममस्ति। तेजश्च ते शांतमतोमादृशामत्र संरंभः क इति कथयित्वा मुनिसकाशात्सशरं चापमादाय राघवस्तूर्णमधिज्यं विदधे। ततो रामो भार्गवतेजसा सह तत्समाकृष्य सासूयमुवाच। मुने! त्वं ब्राह्मणोऽसीत्यतो मे पूज्यो मनीषिणां च मान्यो भवसि। ज्ञात्वैवं शरीरान्तकरं शरं ते नहि विसृजामि। किन्त्वनेन तव तपोर्जितांल्लोकान्हन्मीति वादिनि काकुत्स्थे ब्रह्मपुरस्सरा देवास्तत् कौतुकं द्रष्टुमुपाययुः। तस्मिन्नवसरे सुरमुनिसिद्धगन्धर्वाणां पश्यतां भार्गवो विगतप्रभदीप इव बभूव। ततो मंदस्वरो जामदग्न्यो राममुवाच। रघुवीर! मम महीयसीं गतिन्तु रोद्धुन्नार्हसि। कश्यपार्पितभुवो ममाऽत्र निवासोऽप्यनुचितः। अहमधुनैव गगनवर्त्मना महेन्द्रशैलं गच्छामि। त्वमनेन मम लोकाञ्जहि। त्वामच्युतं निजनाथमवैमि। इच्छामात्रेणाऽपि प्रलयोदयकारिणा च त्वया जितस्यापि मे लज्जाधूसरमाननं न भवतीति परशुरामेणोक्ते राघवो यं शरं चिक्षेप। स मधुमास इव विशदा दिशश्चक्रे। ततो रामं प्रदक्षिणीकृत्य भृगुसुते गते रघुवरस्तं शरं समुद्रे चिक्षेप। अथ हर्षपूरितमनसो दशरथस्य पवनोद्धूतध्वजपट्टाट्टहासिनी सा सेना चचाल। ततो भूमिपुरंदरो महोत्सवोत्साहप्रमोदालिंगिताङ्गनाम् भूरिभूषामयोध्यां प्रविवेश। तत्र पौरस्त्रियोऽपि त्रिभुवनश्लाघ्यलावण्यललिताननां जानकीं वीक्ष्य महोत्कण्ठतामिव ययुः। अथ कौसल्याद्या देव्यो वधूसखान् पुत्रान्वीक्ष्य मूर्तिमद्भिरानन्दैः प्रफुल्लिता इव बभुः। धन्या सेयं शशिमुखी सीता तथाधन्योऽयं च कमलेक्षणो राम इति कौतुकोदारो जननिःस्वनः सर्वत्रैवाऽभूत्। श्रीरस्तु! कल्याणमस्तु।

इति श्रीगद्यभारते बालकाण्डः समाप्तः ॥

ओंनमः शिवाय ॥

# अथायोध्याकांडं प्रारभ्यते

जितं भगवता येन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

अथ मैथिलीवदनांभोजमधुपस्य रामस्य संभोगसुभगः कोऽप्यपूर्वो रसोद्भवो बभूव । अथैकदा पितुराज्ञया शत्रुघ्नसहितो भरतो मातामहपुरं जगाम । ततः सानुजे भरते कैकेयपुरे स्थिते दशरथः स्वतस्त्रिजगत्पतिमपि स्वविषयमहीमात्रे पतिं कर्तुं मतिं विदधे । सोऽथ मंत्रिभिः सह संमंत्र्य वृद्धश्रवः पुरोधसः समानपुरोहितान् समाहूय समादिदेश । महाशयाः ! विदितमेव हि भवतां शिवतातिमेव मतिं दधानाः देवद्विजपूजापरायणा मानधनाः प्राणिनां दयमानमानसाः परां निर्वृत्तिमुपेत्य देवभूयं गताः सर्वे नः पूर्वपुरुषाः । या जरा नियतमपरिहार्या सा मदंगे समुपागता । तस्मात् सौजन्यभाजने निर्मत्सरे जनानुरागानिलये मत्समे चाऽस्मिन् वत्से विश्वंभराभारमवतार्य विश्रान्तिसुखमनुभावितुमभिलषामि । निशम्यैवं भूपवचनं ब्राह्मणा मंत्रिणः भूपतयः पौराश्च बभाषिरे । राजन् ! यत्ते मनसि वर्तते । तत् समीप्सितं क्रियताम् । अनंतगुणोऽयं रामोऽखिलां महीं धर्तुं शक्नोति । किम्बहुना । तस्य रामस्य करस्तु त्यागांगदोदारः, तनुः कीर्तिप्रणयिनी लक्ष्मीश्च यशास्तिलकिताऽस्ति । ततस्तत्त्वविदां वरिष्ठस्य वसिष्ठस्य वचनात् सामात्यः पौरवर्गो रामाभिषेकोपकरणाहरणाय तत्वरे । अथाऽतिसंतुष्टो राजा विनयाभिरामं राममाहूय प्रोवाच । वत्स ! तवोत्तमांगे राजमुकुटं विधातुमह्नाय तिष्यदिने यतिष्ये । पुत्र ! मनुवंशेऽस्मिन् त्वं सद्वृत्तो भूमिभूषणं च जातोऽसि । संप्रति मदाज्ञया क्रमप्राप्तामिमां पृथ्वीं पाहि । दिनेष्वेतेषु विपरीतानि निमित्तानि दृष्ट्वा मे मनस्त्वरते । जगत्यस्मिन् भवांभोधिबुद्बुदस्यायुषो गतिं को जानाति ? एतदाकर्ण्य पितृवचनं रघुनाथो बाढमित्युक्त्वा तातेन विसृष्टश्च कौसल्याभवनं जगाम । सोऽथ तस्यै भूपमनोरथं विनिवेद्य तां प्रसादयामास । ततो वसिष्ठेन समादिष्टो रामः सीतया सह कुशसंस्तरे समुपविश्य पावकं पूजयित्वा च श्रीमन्नारायणं ध्यायंस्तस्थौ । अथ नानावर्णाभिः पताकाभिः सम-

लंकृते पुरे मंगलतूर्यघोषः पौराणामानंदातिशयं द्योतयामास । अत्रान्तरे कैकेय्याः कौमारदासी मंथरा प्रासादाद्धर्षसमाकुलं नगरं विलोक्यातीव विस्मिता बभूव । साऽथ धात्रीं गत्वाऽपृच्छत् । कस्मादद्य प्रमुदिता राममाता ब्राह्मणेभ्यो महार्थान् संप्रयच्छति ? तच्छ्रुत्वा साऽब्रवीत् । दिष्ट्या श्रीरामचन्द्रस्य प्रातर्यौवराज्यमहोत्सवो भविता । एतदाकर्ण्य वज्रभिन्नेव सा कुब्जा दुःखमवाप्य कैकेयीमंदिरं प्रायात् । ततः सा शयनासक्तां कैकेयीं विबोध्य प्रोवाच। मूढहृदये! उत्तिष्ठ। तवाऽयं को निद्रादरः ? अथवा निर्विवेकानां दुःखं नान्तरं विशति । पूर्वं त्वया सपत्नीसंगमे यत् सौभाग्याभरणं सुखं धृतं तदेवाधुना दौर्भाग्यलज्जाविनतं वह । निशम्यैतन्मंथरावचोऽतिचकिता कैकेयी किंस्वित्ते पत्युस्तु कुशलमिति पप्रच्छ । ततः कुब्जोवाच । अयि ! किन्न जानीषे ? यन्महद्भयमुपास्थितम् । श्वः प्रातरेव रामस्य यौवराज्यमहोत्सवो भविता। अहो नु ! तव पतिर्दशरथः सर्वथैव कुटिलाचारोऽस्ति । यः कंठे शिलां बध्वा त्वां जलधौ क्षेप्तुमुद्यतोऽभवत् । सुभगे ! त्वं तु महीभुजा केवलैर्वाक्यैरेव लालिताऽसि। फलेन तु श्रीमती कौसल्यैव संयोजिताऽस्ति । तवेदं गुणसौभाग्यवर्जितं रूपं धिक् । त्वं तु हैमी पुत्रिकेव पत्युर्बल्लभासीति मन्ये। मुग्धे! कौसल्यातनयो रामो राजा भविता। तव तनयश्च भरतो दास इति श्रुत्वाऽपि किन्ते हृदयं सहस्रधा न विदीर्यते ? एतदाकर्ण्य हर्षनिर्भरा कैकेयी हेमाभरणं पारितोषिकमस्यै दत्त्वा प्रोवाच । मंथरे ! गुणशालिनो रामस्य दिष्ट्याभिषेकः श्रुतः । स महानुभावो मे भरतादप्यधिको मत इति ब्रुवाणां कोपकंपिता मंथरा तदाभरणं दूरे प्रक्षिप्याऽब्रवीत् । मूढे ! विषादावसरे कथमुन्मादिनीव नृत्यसि ? अथवा प्रत्यासन्नविनाशानां धियः प्रागेव नश्यति । प्रभावः, कीर्तिः कुलं, ऐश्वर्यं, शक्तिश्च यस्यैकपदे नश्यति तस्य क्षय एव महोत्सवोऽस्ति । यद् दैवविमोहिता त्वं यत् परिणामं न शोचसि। तस्याऽभ्रपातइव प्रातर्दुःसहः फलपाको भविता । त्वं स्वपुत्रमोहं परित्यज्य परपुत्रे रामे स्निग्धासीति चित्रम् ? हरिणो जननीं वेत्ति किन्तु मृगाशनो व्याघ्रो न जानाति । अधुना तावद्भरतो रामाद्रक्षणीयो यावद् गूढं न निपात्यते । तव पुत्रस्य भाग्ये तु दासत्वमेव लिखितम् । पुरंदरः कया रीत्या भ्रातृणां दितिजानां क्षयमकरोत् ? गरुडोऽपि यथा नागक्षयं कृतवान् स वृत्तान्तः किं त्वया नाकर्णितः ? एवं वक्रं श्रुत्वाऽपि कैकेयी यदा रामं पुनः पुनः शश्लाघे । तदा सा नानाविधैः सपत्नीकथाप्रसंगैस्तस्या मानसं दूषयामास । उक्तं च । खलसंगमोऽयमपरः कालकूटप्रकारः । येन सत्त्ववतामपि क्षिप्रं विकारः क्रियते । ततः किल्विषशीकरैः स्पृष्टा कैकेयी किंकरोमीति मंथरां पप्रच्छ । साऽब्र-

वीत् । देवि ! पुरा दंडकारण्ये शम्बरासुरयुद्धे वेदनापनोदनचेतनार्थं यद्राज्ञा प्रातिज्ञातं तद्वरद्वयं याचस्व। तयोरेकस्य संरंभो भरताभिषेचनं द्वितीयस्य च वन्यवृत्त्यैव रामविवासनम् । अर्थात् पितृगिरा रामश्चतुर्दशसमा वनं यातु । बद्धमूलश्च भरतः सुचिरं श्रियं लभताम् । पुरा देवासुरयुधि स्वपुरे जयन्ते शंभरेण शतक्रतोर्घोरः सैन्यक्षयः कृतः । तस्मिन्नवसरे स्वयं दशरथो देवराजस्य सहायकोऽभवत् । त्वयाऽपि यदा शस्त्रक्षततनुर्भूपो रक्षितस्तदा कृतज्ञेन तेन ते द्वौ वरौ दत्तौ । भवत्या च निजेच्छया तौ तस्मिन्नेव न्यासीकृतौ । पतिप्रिया त्वं तूर्णमेव तदर्थनां कुरु । कुपितायाः सबाष्पायितचक्षुषश्च तव सोऽवज्ञां न करिष्यति । एतदाकर्ण्य मुग्धहृदया कैकेयी क्षणात् पश्चात्तापफलं हर्षं भेजे । उक्तं च । प्रायेण शिशवः स्त्रियो भूपाश्च वने कुरंगा इव नीचलुब्धकैर्ह्रियन्ते । पूर्वं बाल्ये कैकेय्या कश्चिन्मूर्खो ब्राह्मणो विडम्बितः । तच्छापात्तस्याः कीर्तिपराङ्मुखी मतिर्जाता । पुरा किल शैशवे रामेणापि प्रणयकोपतश्च चरणेनाहता मंथरा चिरं कोपमुवाह । साऽप्यवसरमवाप्य तत् प्रतीकारपरा बभूव । ततः कैकेयी मंथरां परिष्वज्याऽस्यै हेमकुंडले च दत्त्वा तां बृहस्पतिवधूमिव महाबुद्धिमतीं मेने । साऽथ विरूपमपि तद्वपुः पुनः पुनः प्राशंसत् । यतो वशीकृता मूर्खा निन्द्येनाऽपि हि गुणसंपत्तिं पश्यंति । ततो वरार्थिनी सा तद्गिरा तूर्णं कोपागारं जगाम । यतः स्त्रियो मूर्खाश्च प्रायः खलवाक्येष्वेव सादरा भवंति । साथ विमुक्तमाल्याभरणा म्लानवसना च महीतले च विचेष्टन्ती अपयशसा व्याप्तेव बभूव । अत्रान्तरे दयितादर्शनोत्सुको राजाऽन्तःपुरं प्रविश्यापि तत्र चारुलोचनां कांतां न ददर्श । सोऽथ छत्रधारिणीवाचा कोपभवनस्थां तां श्रुत्वा चकितः सत्वरं गत्वा च त्यक्तभूषणां तामवलोकयामास । सोऽथ तत्रोपविश्य पाणिना स्पृशन् प्रोवाच । सुंदरि ! पर्यंकादीन् विहाय वसुधापृष्ठे किं शेपे ? ततः साऽपि भूपालमालोक्याधिकां रुषं जग्राह । प्रायस्तरुण्यः स्थविरे वरे प्रागल्भ्यमेव समुपयांति । राजोवाच । देवि ! कोऽयं ते प्रौढः कोपपरिग्रहः ? येनेदं भूषणं ममाऽप्यग्रतो नाभिनंदसि । प्रिये ! ब्रूहि ते प्रियंकरं कं दरिद्रं धानिकं कुर्याम् ? धानिकं च तवाऽहितं क्षणमात्रेण निर्धनं विदधीय । सुमुखि ! प्रवृद्धस्याऽस्य कोपस्य सत्वरं कारणं ब्रूहि। किं बहुना । त्वत्कोपे हेतुतां गतः स्वात्मापि मे वध्यः । दयिते ! मम स्वान्तं सर्वथा तव वशे स्थितं ज्ञात्वाऽपि यन्न भाषसे ? अतोऽयं ते वृथा श्रम इति मन्ये । भामिनि ! मौनमुत्सृज्य प्रसादस्मितपुष्पिता लतेव मधुरालापैः कर्णरसायनं किर । प्रियतमे ! प्रसीद । वद किं तवेप्सितं करवाणि ? अत्र बहुनोक्तेन किम् ? ते प्रिये स्वप्राणानपि प्रदास्यामि ।

अयि सुभगे ! लोकेऽस्मिन् मम प्राणेभ्योऽपि प्रियतरो राजीवलोचनो रामोऽस्ति । तस्योपरिशये कथय त्वद्धितं करोमीति नरनाथेनोक्ते तप्तनिश्वासधूसराधूरपल्लवा कैकेयी प्रत्यभाषत । पुरा प्रसादाभिमुखो ब्राह्मणो मे यां विद्यां प्रादात् । तया भवान् देवासुरसंग्रामे मया रक्षितः । तत्संतोषाद्यौ वरौ मह्यं दत्तवानसि । यौ च मया त्वयि निक्षिप्तौ तावेवाद्य मे संप्रयच्छ । निशम्यैवं प्रियतमावचनं सस्मितो राजा करेण तद्वदनमुन्नम्य प्रोवाच । प्राणप्रिये ! एतावतैव कोऽयं तं कोपाविभ्रमः ? तौ वरौ ते स्वाधीनौ यद्रोचते तत् सत्वरमभिधीयताम् । तच्छ्रुत्वा कुटिला कैकेयी प्रोवाच । सर्वा एव देवताः सत्यप्रतिज्ञस्य राज्ञः वचः शृण्वंतु । वरेणैकेन तु चीराजिनजटाधरो रामश्चतुर्दशवर्षाणि विजनं वनं प्रयातु । अपरेण च वरेण ममात्मजो भरतो यौवराज्यं लभतामित्युक्त्वा सा विरराम । एतदाकर्ण्य राजा मूर्ध्नि वज्रेण समाहतो गिरिरिव महीतले निपपात । सोऽथ संज्ञामवाप्य व्याघ्रीमिव पुरःस्थितां कैकेयीं प्रोवाच । भद्रे ! किमिदं मम प्राणहरं वचो भाषसे ? कमलेक्षणो रामः कमपराधं ते धृतवान् ? पूर्वं तु ममाग्रे त्वं राघवगुणान् वर्णयामास । अद्य किं जातम् । अहह यत्र योषितां प्रभुत्वमस्ति । तत्र सर्वसंपदान्तर्जन्यः पौरुषप्रतिरोधिन्यश्च सकला विपदस्तिष्ठंति । सत्यमुक्तं महामुनिभिर्यत् स्त्रीषु सादरं मनो व्यसनवृक्षस्य महाफलं वर्तते । अहोवत प्रीतिलुब्धेन मुग्धेन च मया त्वं घोरहालाहलेक्षणा कालभुजंगी सेविता । या वरदंशेन मम प्राणानप कर्षति । शुभ्रगुणयुतो रामः सर्वलोकसम्मतोऽस्ति । पंकजिन्या शशीव स कथं ते द्वेष्यतां यातः ? सर्वास्ववस्थासु प्रियं जीवलोकहितकर्तारं च तनयं कथं त्यजामि । भरताय राज्यं गृहाण । परन्तु रामं वनं मा गमयेत्युक्त्वाऽश्रुपरीताक्षो दशरथः पादयोर्निपपात । एतदालोक्य रक्तान्तलोचना कैकेयी प्रोवाच । राजेन्द्र ! किं त्वं भ्रान्तोऽसि । यदुक्तमप्यन्यथा कुरुषे ? किम्बहुना । यदि प्रभातेऽजिनचीरयुक्तो रामो वनं न व्रजेत्तदाऽहं तवाग्रे वधं विषभक्षणं वा कृत्वा प्राणां स्त्यक्ष्यामीति मे दृढनिश्चयः । लोके सत्यसंधानां भवादृशाम् रथ्यावस्करमार्जन्य इव पंककलंकिता असत्य-चपलाश्च वाचो न भवन्ति । पुरा शिविना स्वमांसं दत्तम् । अलर्केण च नेत्रद्वयं प्रदत्तम् । परन्तु सत्यप्रतिज्ञानां प्रतिश्रुते क्वाऽपि नाऽनुतापो वभूव । ततो राजा दुर्बुद्धिं तां निश्चलां विलोक्य हा राम ! हा रामेति वदन् मूर्छितो भुवि निपपात । सोऽथ चेतनामवाप्य प्रोवाच । अधुनाऽहं सत्यपाशेन संयतः पुत्रस्नेहेन च समाकृष्टः किंकर्तव्यमूढोऽस्मि । नूनं प्राणापहारिणा कालेनैव त्वं मयि क्षिप्तास्यन्यथाऽयं तव सदाचार

विपर्य्ययः कथं जातः ? उक्तं च । पापसङ्कल्पा नृशंसाः श्रुतिस्मृतिपुराणाज्ञां च परित्यज्य परप्राणापहारेणैव स्वात्मनः श्रियं वाञ्छन्ति । भक्ताया मम निर्दोषःसुतो राज्ञा विवासित इति ब्रुवाणां कौसल्यां गतत्रपोऽहं किं वक्ष्यामि । अहो ! स्त्रीजितेन राज्ञा गुणवान्पुत्रो निर्वासित इति लोकेऽपयशोविवर्धिनीं गिरं कथं श्रोष्यामि । नूनं विधात्रा त्वं केवलैः किल्विषैरेव निर्मिताऽसि । यतस्तव दारुणे हृदये करुणाकणोऽपि नास्ति । अहो बताऽहं कान्तारूपेण मृत्युनैवाकृष्टोऽस्मि । यस्य विचिन्त्यमानोऽपि प्रतीकारो न विद्यते । दुष्टे ! श्रीरामे वनं गते मयि च हते भृशं शुचा राज्याविस्मृतवैधव्या पूर्णमनोरथा भव । एवं प्रलपतस्तस्य नक्षत्राश्रुकणाकुला शशिशुभ्रा रात्रिर्ययौ । कदा वयं सर्वाभरणसंपन्नमभिषिक्तं च रामचंद्रं द्रक्ष्याम इत्युत्सुकधिया सर्वे पुरवासिनो बभूवुः । अत्रान्तरे वसिष्ठाद्यैर्महामुनिभिः क्रमादभिषेकविधौ सुकल्पिते सुमन्त्रस्तूर्णं महीपतेरंतःपुरं प्रायात् । सोऽथ शनैर्निभृतं प्रविश्य भूपतिं च सुखसुप्तं ज्ञात्वा तत् प्रबोधाय मधुरां गिरं जगाद । देव ! तव प्रजाः सूर्योदय इव भवतोऽभ्युदयं प्रतीक्षंते । श्रीराघवस्य राज्याभिषेकार्हः पुष्ययोगोऽतिवर्तते । पृथ्वीनाथ ! उत्तिष्ठ । सूर्योदयोत्सवे दिशः पीताम्बरा भांति । सत्पुत्रमणिदर्पणे वंशक्रमागतां कीर्त्युज्ज्वलां च श्रियं पश्य । निशम्यैवं सुमंत्रवचनं गाढमत्सरा कैकेयी शनैरुवाच । भद्रपुरुष ! राजाऽद्य प्रजागरेण स्वस्थचित्तो नास्ति । राममेवाऽनु चिन्तयन् रात्रिं निनाय । त्वं सत्वरमितो गत्वाऽस्य संमतं पुत्रमिहानयेत्युक्त्वा सा चण्डी सासूयं क्षितिपालमैक्षिष्ट । एतदालोक्य दिनधूसरः शशीव विवर्ण-वदनो राजा दीर्घं निःश्वस्य प्रोवाच । सुमंत्र ! सत्यसमयाख्येन कालपाशेन वेष्टितं मामवलोक्य किमुपेक्षसे ? अत्रान्तरे भृशं कैकेय्याः परुषाक्षरैरुद्वेजितो राजा विह्वलया गिरा सुमन्त्रं जगाद । महामात्य ! नाऽहं रात्रौ निद्रां लब्धवान् । यतः शोकवतां निद्रा कुतः ? त्वमिदानीं जवशालिना रथेन गत्वा मे बहिश्चरं जीवितं राममिहानय । ततः संशयाकुलः सुमन्त्रस्तूर्णं गच्छन् मार्गे रामस्य गुणालंकरणं यशः शुश्राव । सोऽथ मेरुकन्दर-सुंदरं राममंदिरं समवाप्य कक्ष्याः शनैः समुत्तीर्य चान्तरमन्तः पुरं प्राप । ततः स आवेदितोऽन्तः प्रविश्य रघुनन्दनं च दृष्ट्वा प्रणनाम । अथाज्ञामवाप्योपविश्य च राघवं प्रोवाच । युवराज ! कैकेयीमन्दिरस्थो राजा स्थितिमता मम्रयं भवन्तं विलोकयितुमिच्छति । एतदाकर्ण्य बाढमित्युक्त्वा च रथारूढो रामः पौरजनाशिषः शृण्वन् जगाम । मार्गे रामं विलोक्य पौरांगना मिथः प्रोचुः । अयं धनदोऽप्ययक्षराजः विष्णुरप्यच्युतः कामोऽपि च साङ्गोऽस्ति । सोऽथ लक्ष्मणसमेतो वृद्ध-

कंचुकिरक्षितं पातालमिव रत्नांशुकपिशोदरं पितुरन्तःपुरमवाप्य च विगतप्रभं भूपं ददर्श । ततः स मातापितरौ प्रणम्य सेवायां समुपस्थितोऽस्मीत्यवोचत् । ततो वाष्पाविलविलोचनो राजा रामं विलोक्य पुत्रेत्युक्त्वा वक्तुकामोऽपि ह्रिया नम्राननोऽभूत् । अथ राघवो राज्ञो विक्रियां वीक्ष्य विसंज्ञ इव किमेतदिति चिन्तासन्तापं समाययौ । ततः स कैकेयीं सविनयमपृच्छत् । मातः ! कुतोऽयं भूपतेर्गंभीरः खेदविप्लवो जातः ? वयं तु निदेशे स्थिताः स्मः । विभवश्च निःसपत्नः पुनः किं खेदकारणमित्युच्यताम् ? यद्य पुण्यैर्विनापराधं मयि प्रभुः प्रकुपितस्तर्हि त्वमेव तूर्णं प्रसादय । मातस्त्वं तु सुतवत्सलाऽसि ।

यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥

निशम्यैवं राघववचनं सादरा कैकेयी प्रोवाच । वत्स ! यदा नरपतिर्विषण्ण एव नास्ति । तदा कुतोऽस्य कोपसंम्भावना ? किन्तु कृतज्ञोऽयं मे प्रवरौ वरौ प्रतिश्रुत्य सम्प्रति च सत्यलोभयोरनुतापेन वाच्यतां प्रयातः । तत्सर्वं तु त्वदधीनमेव । परन्तु राजा त्वां वक्तुं लज्जते । एतदाकर्ण्य मर्यादापुरुषोत्तमो रामो जगाद । अहोवत ! मदायत्तेऽपि गुरुकार्ये संशयावकाशः ? अहन्त्वस्य शासनाद्दीप्तं दहनं घोरमकरालयं वा प्रविशामि । तच्छ्रुत्वा कीर्तिपराङ्मुखी कैकेयी प्रसन्नचेतसा सत्त्वासिन्धुं रामं जगाद । राघव ! पुरा देवासुरसंग्रामे मयाऽयं राजा रक्षितः । तस्मिन्नवसरे यौ वरौ वितताार । तावद्य मया याचितौ । राम ! तयोरेकेन चतुर्दशसमास्तवारण्ये विवासनं द्वितीयेन च भरतस्य यौवराज्येऽभिषेचनं वांछामि । किम्बहुना । भवान् वल्कलवसनोऽधुनैव वनं गत्वा सत्यपाशान्महीपालं रक्षत्विति मातृवचनं श्रुत्वा प्रहसिताननो रामोऽवदत् । मातः ! योऽनाज्ञप्तोऽपि पितृकार्यं कुरुते स उत्तमः पुत्रः । उक्तः करोति स मध्यमः । किन्तु य उक्तोऽपि न कुरुते । सोऽधमो लोके गण्यते । एषोऽहमविक्रियो विजनं वनं गन्तुं सज्जोऽस्मि । त्वं चिन्तां मा कुरु । मम हृदये तु महतीयमेकैव चिन्ता ज्वलति । यन्मां कृतागसमिव मत्वा स्वयं नृपो न भाषते ? जवशालिभिर्दूतैर्भरतो मातुलगृहादाभिषेकाय तूर्णमित आनीयतामिति ब्रुवाणं रामं निर्लज्जा कैकेयी तूर्णमद्यैव गम्यतामिति पुनः पुनः प्रोवाच । ततो रामो महोत्साहजवं सत्वधवलं सत्यसंकल्पं च हयं समारुह्य वनं गन्तुं निश्चयं चक्रे । सोऽथ यशोनिधिः सवेगवाष्पस्य निःसंज्ञस्य च भूपतेश्चरणौ निपीड्य सहसान्तः पुरान्निश्चक्राम । ततो वनवासाहितधिया कोपाकुलितचक्षुषा च लक्ष्मणेन समेतो रामः सत्वरं कौसल्यामन्दिरं प्रायात् । तत्राभिषेकोत्सुका देवाराधनपरायणा च सा रामेण

निवेदितं तद्वृत्तान्तं श्रुत्वा सहसा मुमोह। अथ प्रतिलभ्य चेतनां सुखदुःखयोश्चक्रभ्रांतिपरावृत्तिं वदन्ती सा विललाप। अहोवत। धर्मधुरंधर!

विपिने क्व जटानिबंधनं, तव चेदं क्व मनोहरं वपुः।
अनयोर्घटनाविधेः स्फुटं, ननु खड्गेन शिरीषकर्तनम् ॥

सौम्य रघुवंशमणे! वत्स। संसारेऽस्मिन् वन्ध्या एव स्त्रियो धन्याः। याः स्वप्नेऽपि पुत्रस्नेहविषव्यथां न जानन्ति। राम! यदि त्वं सत्यमेव वनं यासि। तदा तु मामपि नय। किं गौर्बालवत्सं विहाय कुत्रचित्तिष्ठति? पूर्वपुण्यगुणप्राप्तः पुत्रलाभस्तदैव सुधायते। यदा च तद्वियोगोग्रकालकूटच्छटा नावकाशमेति। विपिने जाता जर्जरी कंटकिनी च लता वरं किन्त्वेकवत्सा सर्वदा दुःखभागिनी जननी न। अहो! क्षीणपुण्याया मम तनयोऽयं लोकाभिरामो रामो विजनं वनं याति। तस्य माता च दुःखेन जीवति। स्त्रीणामीदृशं कष्टप्रदजीवनं धिक्। हा! गुणाढ्यो रामस्तु पित्रा निर्वासितस्तथापि जननी जीवति। मन्ये मातृस्नेहः क्वाऽपि तिरोहितोऽभवत्। एवं प्रलापिनीं भुवि पतितां च मातरं समाश्वास्य धैर्यसिन्धू रामोऽवदत्। देवि! महाकुलप्रसूतोऽहं पितृवचनं पालयिष्यामि। पुराऽपि पितुराज्ञया भार्गवो रेणुकाकण्ठं चिच्छेद। मातः! वात्सल्यविक्लवा त्वं वृथा विषादं मा कृथाः। वनवासावधौ निवृत्ते मां पुनरप्यवलोकयिष्यसि। अत्रान्तरे कोपाकुलो लक्ष्मणो मंथराकृत्यं ज्ञात्वाऽब्रवीत्। धर्मावतार!

अहो खलभुजंगस्य विचित्रोऽयं वधक्रमः।
अन्यस्य दशति श्रोत्र मन्यः प्राणैर्वियुज्यते ॥

अहो दारुणं दुःखमापतितम्। व्यसनाकुलो राजा वार्द्धक्ये स्त्रीवश्यतां गतोऽस्ति। अतो वयमपि तदाज्ञया स्वकीयं पदं न त्यजामः। यद्ययं वक्रो नयक्रमो भरतेन प्रयुक्तः स्यात्। तदा तु ममाप्येतदवक्रतरं धनुर्गुरुतां यातीति लक्ष्मणेनाभिहिते जननी रामं पुनर्वनवासनिषेधाख्यां जीवितदक्षिणां ययाचे। तच्छ्रुत्वा मातरमनुनीय रामोऽब्रवीत्। लक्ष्मण! तव क्षमाभृत्तुल्यं धैर्यं समुद्रसदृशं गांभीर्यं च जाने। सम्प्रति त्वं क्रोधं परित्यज्य क्षमामवलम्बस्व। विमलं चेतः क्रियताम्। शान्त्या च कोपो विनिवार्यताम्। महात्मनां चरित्रं तु सदैवौचित्यचारु भवति। गुरौ भक्तिर्दुःखे धैर्यं कोपे क्षमा कृशे च दया। एतास्ता यशसो विशदाः साम्राज्यविभवस्रजो वर्तन्ते। सन्तः क्व? दौर्जन्यं च क्व? गुणाः क्व? वक्रता च क्व? विवेकः क्व? पारुष्यं च क्व? परस्परमेतद्दूरम्। ततो मातरमपि पुनरुवाच। जननि! मम प्रवासे दैवमेव कारणं विजानीहि। अत्र पौरुषस्य

गतिर्नास्ति । अतो वृथा कोपसम्भ्रमैः किम् ? यत् कुर्वतो विनश्यति अकुर्वतश्च फलति । तदहं त्वदद्भुतशक्के दैवस्यैव सर्वं विजृम्भितं मन्ये । एतदाकर्ण्य सर्वथा सत्यधृतिर्लक्ष्मणो राममुवाच । आर्य ! मां छायानुगामिनमवेहि । पौरुषं पूर्वकर्मेव त्वां कदापि क्वचिन्न त्यक्ष्यामि । तच्छ्रुत्वा रामो लक्ष्मणस्य सुदृढं निश्चयं विज्ञाय तथास्त्विति प्रत्युत्तरं प्रादात् । ततो राघवो मातरमुवाच । अम्ब ! यथा ते भर्ता देववत् पूज्यस् तथा चायं ममाऽपि पिता वर्तते । मातः ! राजा यथा तव मुखात् पुत्रप्रवासकटुकां वाचं न शृणोति तथा कृथा इत्यभिधाय तत्पादयोः पपात । एवमालोक्य गुणवत्पुत्रगौरवयंत्रिता माता यथाकथंचिदाशीर्वादपुरस्सरामाज्ञां प्रादात् । ततो लक्ष्मणानुगो रघुनन्दनो मातृमन्दिराद्विनिर्गत्य धैर्येण सह जनचेतांस्यपाहरन् महोत्कण्ठाकुलाशयां सीतामन्तःपुरे ददर्श । अथ सीता पितुराज्ञया भर्तुर्विप्रवासकथां श्रुत्वा दुःखिताऽपि धैर्यमवाप्य तेन सह गंतुमुद्यता वभूव । ज्ञात्वैतद्रामोऽवदत् । देवि ! मयि काननं याते दुःखविस्मारणैर्नयैर्भवत्या कौसल्या सेव्या । अपरं च मद्विप्रवासयोगेऽपि भरतश्रोत्रगामिन्यः परुषा गिरो न कार्याः । यतः स एव वृत्तिप्रदो राजाऽस्ति । निशम्यैवं भर्तृवचोऽश्रुपूरिताक्षी कोपकंपिता च सीता प्रोवाच । अहोवत ! आर्यपुत्रस्याऽसदृशं वचः श्रूयते । किं कदाचित् प्रणयिनी प्रियाऽपि परित्याज्या भवति ? मे पित्रा कन्यादानसमये वृथैवं हर्षोऽनुभूतः । यत् स्वकीर्तिमिव मां भर्ता पूर्वापरमविचार्यैव त्यक्तुमुद्यतः ? लोके पितृमातृसुतादयः सर्वे स्वभाग्यभागिनो हि भवन्ति । किन्तु पुरुषाणां भार्यैवैका भाग्यभागिनी श्रुता चावलोकिता । पतिर्नारीणां वयोरूपसुखसौभाग्यानामेव स्वामी नास्ति किन्तु स तस्या जीवितस्याऽप्यधिपतिर्वर्तते । प्रभो ! सुखदुःखानुगां स्वैरविहारविस्रंभसाक्षिणीं स्वस्य चेतोवृत्तिमिव मां संत्यक्तुं नार्हसि । यथा त्यागहीना विभूतिः सत्यहीना सरस्वती प्रशम हीना च विद्या न शोभते । तथा पतिं विना भार्याऽपि न प्रकाशत इत्यभिधाय पादयोः पपात ।

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राऽभ्यागतो गुरुः ॥

एवं जाया वचः श्रुत्वा तस्या दृढनिश्चयं च ज्ञात्वा रामोऽब्रवीत् । सुमुखि ! सत्यमुक्तं त्वया । परं वने घोररूपा मानुषभोजिनश्च राक्षसा निवसन्ति । समन्ततः सिंहव्याघ्रवराहाश्च संचरंति । कट्वम्लफलमूलानि भोजनार्थं कुत्र लभ्यंते क्वचिच्च नोपलभ्यंते । सर्वत्र कुशकण्टकाकीर्णश्च मार्गो दृश्यते । अतो बहुविघ्नं वनं मत्वा त्वामहाद्रिसेति पतिवचः श्रुत्वा स्फुरद्वक्त्रा सीता प्रत्युवाच । प्रभो ! त्वत्समीपे स्थिता

मां वने को धर्षयेत् ? फलमूलादिकं च यद्यत्तव भुक्तावशेषितं स्यात् । तदेवामृततुल्यं मत्वा भोक्ष्ये । बाल्ये कश्चिज्ज्योतिःशास्त्रविशारदो ब्राह्मणो मां वीक्ष्य प्रोवाच । वत्से ! तव पत्या सह वने वासो भविष्यति । तद् द्विजवाक्यं सत्यं भवतु । यदि मामत्र त्यक्त्वा वनं गच्छसि । तदातेऽग्रतः प्राणांस्त्यक्ष्यामीति निगद्य सीता विरराम । एवं सीताया दृढनिश्चयं ज्ञात्वा रामोऽब्रवीत् । देवि ! त्वं शीघ्रमेव मया सार्द्धं वनं चल । अथ रामेण प्रतिषिद्धोऽपि लक्ष्मणोऽरण्यगमने यदा निश्चयं न तत्याज तदा राघवोऽवदत् । भ्रातः ! त्वमपि सत्वरमागच्छ । एतदाकर्ण्य प्रहृष्टो लक्ष्मणः स्वशरासनं वरुणदत्तमन्यदक्षय्यमायुधं च नीत्वा समाययौ । ततो रामभद्रः सुयज्ञप्रभृतिभ्यो ब्राह्मणेभ्योऽसंख्यं धनं दत्त्वा त्रिजटादीन् द्विजानपि सकांचनैर्गोसहस्रैः परितोषयामास । अथ रामः सेवकेभ्यः पौरेभ्यश्चापि यथायोग्यं धनं वितताार । अथ सीता मुख्यान्याभरणाण्यरुंधत्यै दत्त्वा दासीगणेभ्योऽपि वसुराशिं प्रादात् । ततो वीरवरो रामः प्रलापमुखरान्तरं पितरं समभ्येत्य प्रणम्य च प्रोवाच । तात ! वनवासार्थं प्रस्तुतोऽस्मि । कृपयाऽनुज्ञापय । एवं प्रजानां मानसैः सह राघवे गंतुं प्रवृत्ते बाष्पाम्बुरुद्धनयनो नरपतिर्जगाद । धनं नानारत्नानि सैन्यं च राममेवानुसरतु । गृहीतकुसुमां लतामिव भरतो राजश्रियं लभतामिति वाक्यं समाकर्ण्य चकिता कैकेयी प्रोवाच । भवता वत सत्योपदिग्धमनृतं भाषितम् । हृतसर्वस्वं राज्यं च नीत्वा भरतः किं करिष्यति ? राजन् ! रामवात्सल्यदोषेण सत्यमनृतं मा कृथाः । किं सगरेण ज्येष्ठपुत्रोऽसमंजसो न त्यक्तः ? एवं नृपः शापाभिभूतायास्तस्या वचो निशम्य रामेणाभ्यर्थितश्च सैन्यरत्नादिदानान्न्यवर्तत । ततोऽतिदुःखितो महामात्यः सिद्धार्थो जगाद । राजन् ! ज्येष्ठपुत्रपरित्यागाद्वः कुलं सर्वथा भग्नम् । असमंजसस्तु पौरदारकान् सरयूमध्ये चिक्षेप । तत्क्रुधा राज्ञा सगरेण स निरस्तोऽभूत् । गुणनिधी रामोऽयं कथं नाम त्यागमर्हतीति कथयित्वा निःश्वसन् मन्त्री विरराम । ततो रामः प्रसन्नमनसा सीतालक्ष्मणाभ्यां सह कैकेय्या स्वयमर्पितं चीराम्बरं जग्राह । अथ श्रीराघवो विलपंतौ मातापितरौ समाश्वास्य पौराणामाक्रन्दनिःस्वनं च शृण्वन् सुमन्त्रप्रेरितरथेन प्रतस्थे । अथ स्यन्दनरेणुना सह रामे दृष्टिनष्टे महीपालश्छिन्नमूल द्रुम इव धरण्यां निपपात । अथ रामोऽपि तमसातटे रजनीमेकामतिवाह्य प्रातर्गोमतीं ततार । ततोऽन्येद्युः प्रियंवदः प्रणयिनः पौरान् सान्त्वैर्विनिवर्त्य कौसलानतिचक्राम । अथ राघवो रम्यं मन्दाकिनीतटमवाप्य तत्रेंगुदीपादपतले निशां निनाय । ततः प्रभाते गुणज्ञेन निषादपतिना गुहेन संपूजितः श्रममपनीय प्रतस्थे ।

अथ धृतिसागरो रामचन्द्रः सुमंत्रं विसृज्य तन्मुखेनैव पितरं समाश्वासयामास ।

संद्यः पुरीपरिसरेऽपिशिरीषमृद्वी, सीताजवात् त्रिचतुराणि पदानि गत्वा ।
गंतव्यमस्ति कियदित्यसकृद् ब्रुवाणा, रामाश्रुणः कृतवती प्रथमावतारम् ॥

ततो न्यग्रोधक्षीरं समानीय लक्ष्मणं पुरस्कृत्य च जटा बवन्ध। अथाऽन्येद्युर्नावा गंगां समुत्तीर्य क्वाऽपि न्यग्रोधमूले रजनीं निनाय। ततो गंगायमुनयोः संगममवाप्य तत्र भरद्वाजेन मुनिना पूजितोऽभवत्। ततस्तद्गिरा चित्रकूटानिकटस्थं पुण्यं तपोवनं प्राप। तत्र लताकुंजमंजुगुंजद्विहंगमं काननं विलोक्य रामो जनकात्मजां जगाद। प्रिये! इमा स्मरसहायस्य मधोरतिरम्या विलासोत्सवभूमयः सन्ति। पश्येमा विकीर्णप्रसूना लताःपल्लवांजलिभिरातिथ्यमिव कुर्वंति। एवं राघवो विविधैर्विनोदवाक्यैः सीतां संतोष्य लक्ष्मणाहृतैर्दारुभिर्वास्तुपूजां विधाय वलिवैश्वदेवविधिमपि व्यधात्। अथाऽन्येद्यू रामो नानामृगद्विजाकीर्णं महामुनेर्वाल्मीकेराश्रमं जगाम। तत्र समासीनं मुनिवरं विलोक्य सीतालक्ष्मणाभ्यां सह प्रणनाम। एतदालोक्य मुनिः सहसोत्थाय समालिङ्ग्य च परमानन्दमवाप। ततो राघवः सत्कारमवाप्य सविनयं प्रोवाच। महामुने! पितुराज्ञां पुरस्कृत्य वयं दण्डकान् समायाताः। अतो यन्मे सुखवासाय स्थानं भवेत्तद्वद। तच्छ्रुत्वा मुनिः सस्मितमवादीत्। सर्वभूतनिवास! ये शान्ताः समदृष्टयश्च महात्मनः सन्ति। तेषां हृदयं तेऽधिमन्दिरमस्ति। राम! त्वन्नाममहिमा केन वा कथं वर्ण्यते! यत्प्रभावादहं ब्रह्मर्षिपदं लब्धवानस्मि। पुराऽहं वने जन्ममात्रद्विजत्वमवाप्य किरातैः सह वर्धितोऽभवम्। तत्र शूद्रायां मे बहवः पुत्राः समुत्पन्नाः। अथैकदा कानने मया सप्तर्षयो दृष्टाः। तानवलोक्य धनुर्बाणधरोऽहं तेषां सर्वपरिच्छदान् ग्रहीतुमधावम्। ज्ञात्वैवं मुनयो मामब्रुवन्। द्विजाधम! किमर्थमस्मान् पीडयसि? ततोऽहं तानवदम्। ब्राह्मणाः! गृहे मे पुत्रदारादयो बुभुक्षिताः सन्ति। तेषां पालनार्थाय किंचिदादातुमिच्छामि। एतदाकर्ण्य ते प्रोचुः। भद्र! पूर्वं त्वं गत्वा स्वकुटुम्बकं तु पृच्छ। मया प्रतिदिनं यो यः पापसंचयः क्रियते। यूयं तद्भागिनो भविष्यथ वा नेति मुनिगणवचनं श्रुत्वाऽहं गृहं गत्वा च तान् पृष्टवान्। तच्छ्रुत्वा ते प्रोचुः। तत् सर्वं पापं तवैव। वयं तु फलभागिनः स्म इत्याकर्ण्य जातनिर्वेदोऽहं सपदि धनुरादीन् परित्यक्तवान्। ततोऽहं मुनिदर्शनाच्छुद्धान्तःकरणो भूत्वा मुनिशरणमुपेयिवान्। अथ ते प्रोचुः। वत्सोत्तिष्ठ। सत्समागमोऽयं सफलो भवत्वित्यभिधाय ते मह्यं तारकसंज्ञकं राममन्त्रं दत्त्वा च यथाभिमतं देशं गताः। ततोऽहमेकाग्रमनसा श्री-

राममन्त्रं जपन् बाह्यं सर्वं विस्मृतवान् । एवं बहुतिथे काले व्यतीते सर्वसंगविहीनस्य ममोपरि वल्मीकोऽभवत् । ततो वर्षशतान्ते मुनिवराः पुनरागत्य बहिर्निष्क्रमस्वेति मां जगदुः । अथाऽहं वल्मीकान्नीहाराद् भास्कर इव निर्गतोऽभूवम् । ततस्ते ममास्थां विज्ञाय प्रोचुः । वल्मीकसंभवात् त्वं वाल्मीकिरिति विश्रुतोभवेति निगद्य स्वाश्रमं गताः । अत्रान्तरे सुमन्त्रो धैर्यशून्येन चेतसा रामरहितेन रथेन हर्षशून्यामयोध्यां विवेश । ततो भग्नमनोरथाः पौरा अरामं रथमालोक्य हा हतभाग्या वयं हा हतभाग्या वयमिति चुक्रुशुः । ततः सुमंत्रो विगतप्रभं नृपमन्दिरं प्रविश्य तत्र शोकविह्वलं राजशशिनं दृष्ट्वाऽतीव दुःखितो बभूव । ततो वधूपरिवृतो दशरथः सुमन्त्रमवलोक्य हा रामं त्यक्त्वाऽऽगतोऽसीत्यभिधाय विलपन् पर्यंकात् क्षितितले निपपात । सोऽथ चेतनां लब्ध्वा गद्गद्गिरा सुमन्त्रं रामवृत्तान्तं पप्रच्छ । तच्छ्रुत्वा कृतांजलिः सुमन्त्रोऽस्मै धैर्यप्रणयनिर्भरं तत्संदेशं निवेदयितुमारेभे । देव ! अयोध्याभिमुखो रामः प्रणतोऽञ्जलिं कृत्वा मद्वक्त्रसंक्रान्तां तव विज्ञप्तिं विदधे । तात ! त्वन्निदेशं मूर्ध्ना चिन्तामणिमिव समुद्वहन् सन्तोषराज्येऽस्मिन् परां प्रीतिं संप्राप्तवानस्मि । धैर्यसिन्धो ! मद्वियोगजः संतापस्त्वया न कार्यः । यतश्चतुर्दशवर्षाण्यहं क्षणवत् क्षपयिष्यामीति ब्रुवाणे काकुत्स्थे किंचिदागतविक्रियः सौमित्रिः निःश्वसन्नूचे । बत ! चिन्तामणिगुणं सुरद्रुमोपमं च पुत्रं परित्यजता भूभुजा स्वव्यसनेनैव कुलं यशश्च दरिद्रितान्नीतम् । एवं लक्ष्मणवचनं श्रुत्वाऽपि सास्रुलोचना जानकी किंचन नोवाच । एतदाकर्ण्य भृशं व्यथितो राजा हा रामेति निगद्य मोहान्निःस्यन्दतामगात् । ततः प्राप्तचेतनो भूपो रामं जटाधरं श्रुत्वा सन्तापादश्रुगद्गदं विललाप । सोऽथ सानुजं रामं विशेषतश्च जानकीं शोचन् प्रोवाच । हा विपरीतो विधिर्विनायकं प्रकुर्वाणो वानरं रचयामास । एवं पंचत्वकांक्षिणस्तस्य पंचैव त्रियामास्सहस्रयामतां प्रयाताः । ततः षष्ठेऽहनि शोकाविष्टो राजा निशीथे कौसल्यामुवाच । देवि !

यश्च रामं न पश्येत यं च रामो न पश्यति ।
निंदितः स भवेल्लोके स्वात्माऽप्येनं विगर्हते ॥
धन्याः खलु वने वाताः काल्हाराः सुखशीतलाः ।
राममिंदीवरश्यामं ये स्पृशंत्यनिवारिताः ॥

बताऽस्मिन् संसारे जंतवः स्वयं प्ररोपितस्यैव कर्मशाखिनः शुभाशुभफलप्राप्तिं भुंजते । पुरा मया यद् दुष्कृतं कृतं तदद्य स्मृतम् । तस्यैवापथ्यस्याऽयं जीवितापहो विपाकः समुपस्थितः । कुमारोऽहमेकदा जलदलांछने काले मृगयाकेलिलालसया सरयूतटं गतवान् ।

तत्र निशायां लक्ष्यज्ञेन मया जलमग्ना महिषक्रोडकुंजरा विद्धाः । ततो निरालोके समये मया निमज्जत्कुंभसम्भवो गजबृंहितगंभीरो ध्वनिः समाकर्णितः । अथाऽहं तं शब्द-मुद्दिश्य तीक्ष्णं शरं प्राहिणवम् । येन सकुम्भो विद्धो मुनिसुतो हा हा वत ! केन नृशंसेन नेत्रहीनयोः पित्रोः पुत्रोऽयं बाणेन हत इति चुक्रोश । मयि हते नूनं तावेव तपस्विनौ हतौ स्तः । यतस्तयोर्विषमेऽध्वनि दृष्टिर्यष्टिश्चाऽहमेव । हा मातः ! क्व ग-मिष्यसि ? हा पितः ! किं करिष्यसि ? विप्रोऽहं शरेण विद्धो निधनं प्राप्तवानस्मीति मुनिपुत्रस्याऽतिकरुणं वचः श्रुत्वा भयसन्त्रस्तोऽहं तत्पार्श्वमगाम् । ततोऽहं तत् पादयोः पतित्वाऽवदम् । स्वामिन् ! दशरथोऽस्म्यहम् । अजानता मया विद्धोऽस्यतो मां कृपया क्षन्तुमर्हसि । एतदाकर्ण्य स मुनिवर सुतो गद्गद्गिरा भूपतिं प्रोवाच । राजन् ! माभैषीः । त्वां ब्रह्महत्या न स्प्रक्ष्यति । यतोऽहं वैश्योऽस्मि । क्षुत्तृड्भ्यां पीडितौ पितरौ मां प्रतीक्षेते । तस्मात् त्वमविचारयन् तयोस्तूर्णमुदकं देहि । नोचेत्पिता कुपितस्त्वां भस्मसात् कुर्यात् । त्वं ताभ्यां पूर्वं जलं दत्वा प्रणम्य च सर्वं वृत्तमावेदय । सम्प्रति मे देहाच्छल्यं समुद्धर । यतोऽहं पीडितः प्राणांस् त्यक्ष्यामि । निशम्यैवं मुनि-सुतवचनं तद्देहतो बाणमुत्पाट्य सजलं कलशं च नीत्वा यत्र दंपत्यास्तां तत्राऽहं गतवान् । ततोऽन्धौ दंपती प्रसर्पतो मे शब्दं श्रुत्वा गद्गदाक्षरं प्रोचतुः । पुत्र ! केलिशालिना त्वया चिरेणागच्छताचाऽऽवयोर्मनो भयसंदेहदोलामारोपितम् । एह्येहि यज्ञदत्त ! शीघ्रमेहि । पाणिनाऽस्मदंगं च स्पृश । न कदाचित् त्वं प्रकोपितः । पुनः कथं चिरादायातोऽसि ? निशम्यैवं तयोर्वचनं कम्पमानकलेवरोऽहं वज्रोपमं तद्वृत्तान्तं न्यवेदयम् । अहं पापात्मा दशरथोऽस्मि । न च तव पवित्रचरितः सुतः । मयैवाऽधुना स ते प्रियपुत्रो गजधिया निहतः । संप्रति क्रोधजो दुःसहशापो मय्येव निपात्यताम् । किम्बहुना । अस्य किल्विषशोकाग्नेरग्रे सोऽतिशीतल इति मन्ये । एवं वाग्वज्रं पतितं ज्ञात्वा स मुनिः सहसा मुमोह । ततो लब्धबोधः क्षणं ध्यात्वा च प्रोवाच । हा भवितव्यता सर्वथैव दुर्लंघ्या । अरे ! निर्दय ! त्वद्बाणमारितः स मम प्रियपुत्रो यत्र शेते तत्र तु मां सत्वरं नय । यतः स एव मम चक्षुः आधारयष्टिश्चाऽस्ति । किंबहुना जीवितं चाऽप्य-स्ति । एषा मम भार्याऽपि मृतवत्सा गौरिव विलपति । सभार्योऽहं क्षतजोक्षितं तं द्रष्टुमिच्छामि । तस्य प्राणास्तु क्वाऽपि संप्रस्थिताः । अतस्तत् संस्पर्शः पुनः कुत इति ब्रुवाणः स जायासखो मया शनैः शनैर्नीतः । सोऽथ तं देशमवाप्य धराशायिनः पुत्रस्य मुखमुन्नम्य भृशमाकुलोऽब्रवीत् । पुत्रैषा जननी त्वामाह्वयति । कर्णसुधां गिरं

किर । अत्रान्तरे मातोवाच । वत्स ! त्वदालंबनजीविताऽहं क्व यास्यामि ? पुत्र ! जीवनपर्यन्तं गुरुजनभक्तिरतोऽभवः । कारणादस्मात् पुण्यात्मनां लोकान् समवाप्नुहि । वत्स ! त्वया सहावयोस्त्रिदशालये संगमोऽस्त्विति सुचिरं विलप्य शरीरमस्य च सत्कृत्य यथोचितां क्रियां चक्रे । ततो दिव्यवपुर्दिव्यं विमानं च समास्थितो मुनिदारको व्योम्नि द्योतयन् पितरौ प्रोवाच । भगवन्तौ युवयोः शुश्रूषयैव परमां गतिं सम्प्राप्तवानस्मि । पितरौ नाऽत्र भूपतेः कश्चिदपराधः । किन्तु भवितव्यतैव खल्वीदृशी । जगत्यस्मिन् जंतुः स्वकृतैः कर्मभिर्जायते, वर्द्धते, जीर्यते नश्यति च । कोऽपि कस्यचित्कर्तानेत्युक्त्वाऽन्तर्हिते तस्मिन् वृद्धो मुनिर्मामवदत् । राजन् ! त्वयाऽप्यस्य पापस्यावश्यं फलं भोक्तव्यम् । यथाऽहं महता पुत्रशोकेन म्रिये तथा त्वमपि ततो जीवितं त्यक्ष्यसीति शप्त्वा सभार्यो मुनिः प्राणांस्तत्याज । कौसल्ये ! सोऽयं शापपादपो ममाद्य फलितः । एषा विहिता कर्मसंततिर्नहि नाम चलति । पुरुषाग्रे सद्भृत्या इव शुभाशुभफलोदया नित्यं सन्निहितास्तिष्ठंति । एते पुत्रवियोगाग्नितापक्लेशासहिष्णवस्तरलसंचाराश्च प्राणा क्वाऽपि गन्तुं समुद्यताः सन्ति । हा कमललोचनो रामो मया न दृष्टः । कुतोऽहं तं विक्रान्तं पुनरागतं द्रक्ष्यामि । संसारे सीतैव धन्या या छायेव राममनुसरति । हा राम ! हा नेत्रसुधासंदोहबांधवेति मुहुर्मुहुर्विलप्य जगतीपतिर्जीवितं तत्याज । अथ शोकतापिता कौसल्या नृपतिं सुप्तं विज्ञाय तन्निद्राभंगभीत्या निःशब्दप्रविलापिनी तस्थौ । अथ प्रभाते सूतमागधवंदिभिः प्रबोध्यमानोऽपि भूपतिर्यदा नाऽबुध्यत । तदा विगतश्वासं प्रशान्तं पावकमिव महिषीजनस्तमपुनर्दर्शनाय ददर्श । ततस्तं रजनीपतिमस्तंगतमवलोक्याऽन्तःपुरे जनः शोकान्धकारसंरुद्धश्चक्रंद । अथ प्रलापमुखराननाः कौसल्याद्या देव्योऽश्रुकणैश्छिन्नहारमुक्ताफलभ्रमं चक्रुः । एवं सवृद्धबाललनागणे शोकव्याकुलिते मार्कण्डेयवशिष्ठप्रभृतयो महामुनयो राजकलेवरं तैलद्रोण्यां संस्थाप्य भरताय शीघ्रगामिनो दूतान् विससृजुः ॥

इति श्रीगद्यरामायणेऽयोध्याकाण्डः समाप्तः ॥



श्रोन्नमःशिवाय ॥

# अथारण्यकाण्डं समारभ्यते ।

———:–o–:———

जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

त्यक्त्वा जीर्णदुकूलवद्वसुमती बद्धोऽम्बुधिर्बिंदुवत् ।
बाणाग्रेण जरत्कपोतक इव व्यापादितो रावणः ॥
लंका काऽपि विभीषणाय सहसा शुद्धेव हस्तेऽर्पिता ।
श्रुत्वैवं रघुनायकस्य चरितं को वा न रोमांचति?

अथ सप्तभिर्दिनैर्दूतेषु कैकेयपुरं यातेषु बन्धुवर्गसमासीनो भरतो वयस्यान् स्वैरं समभ्यधात् । सुहृदः ! मयाऽद्य निशावसानेऽतिदारुणः स्वप्नोऽवलोकितः । यस्य फलं प्राणसंशयादप्यधिकतरं मन्ये । शुष्कं समुद्रं, दिवः पतितं चन्द्रं कीर्णकेशीं सुंदरीमिव तमोरुद्धां चायोध्यामपश्यम् । ततो गुरुः शैलशिखरात्पतित्वांऽजलिना तैलमपिबत् । किम्बहुना । खरयुक्तेन रथेन दक्षिणान्दिशं गच्छन् पुनरालोकितः । सहृदयाः ! स्मारं स्मारं स्वप्नफलं मे चेतो नितरां विषीदति । एष विषमः स्वप्नो न जाने किं करिष्यतीति भरतेनोक्ते चकिताः सखायो धातुविकारेण स्वप्नानामप्रमाणतां बभाषिरे । सोऽथ तद्गिरा कृतजप्यः संपूजितसुरद्विजश्चाऽपि स्वप्नफलं विचिन्तयन् धैर्यं न लेभे । अत्रान्तरे संवृताशयास्ते दूता राजमंदिरं प्रविश्य तस्मै वसिष्ठानुशासनं निवेदयामासुः । पितुः सर्वत्र कुशलमिति तैर्मिथ्यैव निवेदितम् । तच्छ्रुत्वा भरतः सत्वरं मातामहं जगाम । ततो मातुलेन पूजितः ससैन्यो भरतो लक्ष्मणानुजं च पुरस्कृत्य स्वराजधानीं प्रतस्थे । सोऽथ स्वल्पैरेव दिनैः पुण्या नदीः शैलवनानि च समुत्तीर्य ध्वस्तशोभामयोध्यां ददर्श । सोऽथ निरानंदां निर्भूषणां विधवामिव तां पुरीं वीक्ष्य दुःखितचेतसा मातृमंदिरमयासीत् । तत्र पुत्रदर्शननिर्वृतां कैकेयीं विलोक्य प्रणम्य च पप्रच्छ । मातः ! कस्माज्जनोऽयं म्लानमुखस्तीव्रशोकसमाविष्टश्च लक्ष्यते ? मृगाक्षीभिस्तातस्य कर्पूरशुभ्रं मधुरध्वनिपेशलं च यशः किन्न गीयते ? भूपमंदिरे नरनाथान् नामभिः सूचयतां वैत्रिणां किन्नु शब्दो न

श्रूयते ? एवं भरतवचनं समाकर्ण्य कैकेयी प्रोवाच । वत्स ! सत्यव्रतस्ते तातो निशि रामरामेति बहुशो विलप्य तद्दर्शनाशया यशोऽवशेषतां यातः । सलक्ष्मणो रामस्तेन वने विवासितः । अतः सोऽतिधीरोऽपि तद्वियोगविपव्यथां सोढुं न शशाक । एवं तया दुःसहवाग्वज्रताडितो भरतः परशुना मूले कृत्तो बालस्तालतरुरिव भूतले निपपात । सोऽथ लब्धसंज्ञः क्षणं चक्रारूढ इव कष्टमनुभूय हा तात ! हा तातेति मुहुर्मुहुर्विललाप । ततः शोकसागरनिमग्नोऽपि स धैर्यमवलम्ब्य नेत्रे प्रमृज्य च जननीं पप्रच्छ । मातः ! आर्येण किमप्रियं कृतं । येन स्तेन इव स आत्मजो वने परित्यक्तः । किंस्विद् गुरुतरं पातक मार्येण कृतम् ? नहि नहि रामचरिते कलंककलना कुतः ? एवं सानुनयेन भरतेन पृष्टा जननी स्त्रीस्वभावात् तत्त्वं जगाद । वत्स ! मया त्वदर्थं राजा याचितः । स च कृती तत् कृतवान् । तत्रैकेन वरेण रामविवासनं द्वितीयेन च तवाभिषेकमयाचे । नूनं स रामः पितुराज्ञया चतुर्दशसमा वने विचरिष्यति । त्वमस्मिन्नवसरे निष्कंटकं राज्यं कुरु । एवं मात्रा निवेदितं निन्द्याभिप्रायं श्रुत्वा भरतः श्वपाकीगर्भसंभूतमिवात्मानममन्यत । सोऽथ स्वजीवितं निरपेक्षो निःश्वासाऽनिलैश्चिन्ताग्निं ज्वलयन्निव प्रोवाच । बत भवत्या घनेन विसर्पिणा पातकपंकेन कुलं, आत्मा, यशश्च मे लिप्तम् । ज्येष्ठपुत्रो विवासितः, दैवतं पतिर्निहतः, राजधानी च विरूपिताऽहं च श्वभ्रे निपातितः । त्वयैतत् सर्वं युक्तमेव कृतम् ? त्वयाऽहमीदृशः पापो लुब्धश्च कदा कुतश्च ज्ञातः ? यस्मै गुरुवधादिष्टं राज्यमेतद्ददासि ? हा पतितं मान्धिक् । महाशापेन हतोऽस्मि । यस्य ना नापवादजननी त्वमत्रपा जननी जाता । अहो ! एकवत्साया धेनोरिव कौसल्यायाः प्रियपुत्रस्त्वया पुत्रिण्याऽपि रामःस्वयमरण्ये प्रव्राजितः ? पुरा गोमाता सुरभिर्लांगलार्दितौ सुतौ दृष्ट्वा वज्रिणा पृष्टा रुदित्वोवाच । देवराज ! भुवि कार्षिकपीडितौ पुत्राविमौ विलोक्य भृशं सीदामि । लोकेऽस्मिन् देहिनां पुत्रादन्यत्र परमा प्रीतिर्नास्तीत्युक्त्वा यदा बहुपुत्राऽपि सुरभिः शुशोच । तदैकपुत्रा कौसल्या कीदृशं कष्टमनुभवतीति नाऽहं जाने । तव यशोधूलिधूसरोऽहमेव तातस्य क्षये हेतुरस्मि । हा ! कथमार्यस्य वात्सल्याभिमुखमाननं द्रक्ष्यामीत्युक्त्वा तारस्वरेण रुरोद । ततो विदितवृत्तान्तः शत्रुघ्नः कोपं कृत्वा नाग इव श्वसन् भुवि पतितं भरतमुत्थापयामास । अथ सोऽब्रवीत् । सर्वमेतदयुक्तं लक्ष्मणेनैव कृतम् । यो वीरो भूत्वाऽपि राघवविवासनं क्लेशवत्सेहे । योषिज्जननी तु सर्वथैवाऽवध्या । हाऽऽर्यप्रवासस्याऽस्य प्रतिक्रिया नास्तीति कष्टम् ? अत्रान्तरे भरतात्पारितोषिकं गृहीतुकामा मंथरा तत्र समागच्छत् । तां विलोक्य ।पोकुलक्रोऽरिहन्ता

गुल्फदेशे समादाय विकीर्णभूपणां चकर्ष । सोऽथ कोशल्यास्तस्या वदनं पांसुमुष्टिभिः संपूर्य निष्पिष्टतद्भूपणभूतां भुवं चक्रे । सेयं निन्द्यानां किल्विपकन्दानां जन्मदात्रीति कथयित्वा शरणागतां तां चिरेण तत्याज । ततो भरतः शोकाग्निं संस्तभ्य राममातरं च समुपसृत्य वाष्पाम्बुधौततच्चरणाम्बुजो ववन्दे । सोऽथ तया निवेदितं कैकेयीचरितं श्रुत्वा लज्जारजोदूपितमात्मानमात्मना शुशोच । ततः कौसल्या तं वाष्पव्याकुलिताक्षरं जगाद । जगति पूर्णमनोरथा कैकय्येव धन्या । या यौवराज्याभिपिक्तं पुत्रं द्रक्ष्यति । ते जनकः स्वर्गंगतोऽग्रजश्च काननं यातोऽधुना जनन्या समुपार्जितं राज्यं भजताम् । पुत्र ! सुमित्रासहितां मां वनं गन्तुमनुजानीहि । अहन्त्वद्यैव नवीनचन्द्रमिव लक्ष्मणान्वितं रामचन्द्रं विलोकयितुं व्रजामीति शोकविधुरं तद्वचः श्रुत्वा मधुराशयो भरतः स्वात्मनि दोपं शंकमान इव बभाषे । मातः ! कथमंके विवृद्धस्याऽपि ममाशयं न जानीषे ? त्वमपि विचारय । यज्जनापवादनिन्द्या राजलक्ष्मीः कस्य मानसं प्रीणाति ? असत्यः कृतघ्नः, पूज्यावमंता, साधुविद्वेपी, शिशुगोस्त्रीद्विजान्तकः, वयस्यगुरुतल्पगः, भृत्ययाचकवंचकः, भक्तत्यागी, विश्वासघातकः, कन्योपजीवी, स्तब्धश्च स तमसां पदं प्रयातु । यस्यार्यस्य गमनमनुमतम् । भरतेनेत्थमभिहितालज्जिता च कौसल्या प्रोवाच । पुत्र ! ते भावं सम्यगहं जानामि । वृथा शपथं मा कृथाः । विशुद्धसत्त्वस्य विवेकिनश्च तव व्योम्नो दोपपंक इव कदा केनाऽनुमीयते । एवं राममातुर्वचः श्रुत्वा शोकपीडितो भरतो घोरं वियोगं विचिन्तयन् शान्तिं न प्रत्यपद्यत । सोऽथ पितृमरणे भ्रातृवनवासे चात्मानं कारणं ज्ञात्वा मोहात् पीतसुरद्विज इव मुहुर्मुहुः शुशोच । एवं भूमौ शयानस्य लज्जानुशयतप्तस्य च तस्य महता कष्टेन रजनी जगाम । अथ प्रभाते मुनिगणसमेता मंत्रिणस्त माधिदुर्बलं यक्ष्मक्षीयमाणं निशापतिमिव संपरिवार्य तस्थुः । ततो मनीषिमान्यो वसिष्ठोऽतिशोकसंतप्तं तं प्रोवाच । वत्स ! कुलीनानां संपत्सु विवेकिनां च विपत्सु विनयधैर्याभ्यां स्थैर्यं गांभीर्यं च विभाव्यते । मनीपिणो मोहान्धकारं कष्टप्रदं शोकं च धृतिवल्लीकुठारं मत्वा तं न स्पृशंति । इयं शोकोद्गतिः पुरुषस्य हेमंतयामिनीव सततं परिवर्धते । विवेकिनो बलीयसा कालप्रवाहेण सुदयितान् हतान् ज्ञात्वा संसारासारतां न शोचंति । सम्प्रति त्वं धर्मेण पितुर्नैर्याणिकीं क्रियां कर्तुमर्हसि । संसारेऽस्मिन् गच्छन्तीयं जंतुसंततिः केन विधार्यते ? अस्मिल्ललनालोललोचनांचलचंचले भवे सुखयौवनायूंषि च तरलान्येव संति । पुरा भूरिद्युम्नाख्यो नृपो वभूव । पुण्यात्मा दिवंगतोऽपि स बंधुबाष्पौघैः क्षीणपुण्यो भूत्वाऽधो न्यपतत् । एवं वसिष्ठेनाभिहिते भरतः कृच्छ्रादिव पितुरौर्ध्वे-

दैहिकीं क्रियां चक्रे । एवं शास्त्रीयविधिना भूपतिसंस्कारे वृत्ते निखिलमपि पुरं निवृत्तविभवं बभूव । ततो गताशौचं भरतभूपतिं सचिवा राज्याभिषेकार्थमुपतस्थुः । एतदालोक्य विगतस्पृहो भरतोऽभिषेकसमारंभं सर्वं विनिवार्य रामदर्शनलालसया वन-यात्रोत्सुको बभूव । सोऽब्रवीत् । महाशयाः ! भवतामग्रे मयाऽयमंजली रचितः । ममाधिकारस्तु रामपादाब्जसेवारसमहोत्सवोऽस्तु । काकुत्स्थ-एव राज्यमर्हति । वयं तु तस्य दास्योचिताः स्मः । राघवाणां तु लक्ष्मीः सदैव ज्येष्ठानुगामिनी प्रथिता । यत्र रामपादाब्जरजसा शिरो न रंजितम् । तत्र स्थितमैश्वर्यमप्यहं तु व्यसनमेव मन्ये । किम्बहुना । श्रेष्ठगुणयुक्तं विश्वरक्षामणिं च तं ज्येष्ठं श्रीरामचन्द्रं वनं गत्वा निजाश्रिये प्रसाद-यिष्यामीति ब्रुवाणं साश्रुलोचनं भरतं सहमंत्रिभिर्वसिष्ठाद्या मुनयो भूयोभूयः प्रशशंसुः । सोऽथ स्थिरसंकल्पः सर्वाः प्रकृतीः पुरुस्कृत्य वनं प्रतस्थे । तस्मिन्नवसरे वाजिव्रजखुरो-द्धूतधूलीपटच्छलात् स्वर्गे दशरथं द्रष्टुं स्वयं वसुधैवोद्ययौ । एवं रामविनिवर्तने भरतं प्रयांतं दृष्ट्वा तद्दर्शनोत्सुकाः प्रजा अपि प्रीत्या तमेवानुजग्मुः । ततस्सा शस्त्रवीचिनिचया छत्रफेनाट्टहासिनी च भरतवाहिनी शनैःशनैर्भागीरथीकूलमवाप । ततो दिनान्ते तामपारां पताकिनीं दृष्ट्वा निषादपतिर्गुहश्चिन्तयामास । अहो ! भरतानुपालिता तुरंगगजगामिनी चेयं सेना क्व नु सर्पति ? नूनं विभवलुब्धोऽयं रामं हन्तुमायातोऽस्ति । यतो विभूतयस्तु सदा स्वजनस्नेहहारिण्यः कर्कशाश्च भवंति । यद्ययं वक्रसंकल्पः काकुत्स्थमभियाति । तदा तु राजमंत्रिणः स्पष्टमेव व्याहरिष्यंतीति मनसा निश्चित्योपहारं च नीत्वा गुहो भरतान्तिकं ययौ । सोऽथ भरतं दृष्ट्वा प्रणनाम । ततः सत्कारमवाप्यो-पविष्टो रामनिवर्तने तस्य संकल्पं ज्ञात्वाऽतिसंतुष्टोऽभवत् । अथ भरतस्तद्गिरा रामं चीरजटाधरं श्रुत्वा नवीभूतमहाशोकः सहसा क्षितौ निपपात । ततः शोकविह्वलाः कौसल्याद्या मातरस्तं समाश्वास्य निशि सुषुपुः । अथाऽपरेद्युः भरतो गुहोपदिष्टेन वर्त्मना गंगां समुत्तीर्य घनच्छायं प्रयागकाननं विवेश । सोऽथ तपःश्रियो लीलोद्यानं भरद्वाजाश्रमं समवाप्य तत्र षड्रसभोजनेन, गंधर्वगणगीतेन सुरयोषितां नृत्येन च सत्कृतोऽभवत् । अथ प्रभातेऽतिसंतोषमवाप्य रामदर्शनोत्सुको भरतः प्रतस्थे । ततः पश्चाद् व्रजन्तं जननीजनं दृष्ट्वा महर्षिर्भरतमपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । महामुने ! विष्णोरदितिरिवेयमार्यस्य माता कौसल्या । इयमुदारहृदया सुमित्रा । यस्याः प्रताप पुंजौ लक्ष्मणशत्रुघ्नौ सुतौ सुशोभितौ स्तः । प्रभो ! इयं जनापवादजननी मम जननी कैकेयी । ययाऽहं दुस्तरे शोकसागरे निक्षिप्तः । एवं भरतवचनं श्रुत्वा मुनिराजः

प्रोवाच । राजन् ! दैवमेवाऽत्र कारणं । किन्तु न चैवा तत्र माता कैकेयी । ततो भरतो मुनिगिरा चित्रकूटस्थं रामं विज्ञाय तद्दर्शनार्थं प्रतस्थे । सोऽथ भूभृतस्तस्य सर्पतीं धूमालीं दूरादवलोक्य तं प्रदेशं रामाश्रममेव सममन्यत ।

अत्रान्तरे दयितासखो दाशरथिर्वनान्तेषु कान्ततमाः श्रियः पश्यन् विजहार । तत्रैकदा सीतामुवाच । प्रिये ! इमां गिरिराजस्य मनोनयनहारिणीं शोभां पश्य । अत्र विकासितकुसुमरजःपुंजोपजीविनो वायवस्त्वदाननामोदसोदरा वान्ति । इयं शिरीषवल्ली विलोलालिकुलालका पुंनागं समालिङ्ग्य त्वामिव मामुपसेवते । अत्रत्या एते तरवः कौसुमैरजोभिः सच्चरितैः सन्त इव विभान्ति । एषा बालकलिकासक्तशिंजानषट्पदा नवमल्लिका स्मरशासनं गायतीवेति निगद्य शशांकवदनीं जानकीं वामांके विनिवेश्य च चारुतीरशिलातले निषसाद । सोऽथ शिलापार्श्वे कराग्रेण मनःशिलामवघृष्य बालेन्दुसुंदरे सीताललाटे तिलकं चक्रे । ततः स हरिणीदृशः सुचारुतिलकोदारं प्रियाननं निमेष-शून्याभ्यां नेत्राभ्यां चिरमपिवत् । अत्रान्तरे कश्चिन्महाकपिस्तत्र समागच्छत् । तं विलोक्य त्रासलोलाक्षी वैदेही राघवं कण्ठे जग्राह । सोऽथ समुत्थाय बालकेसरदलैः सीतायाः कुटिलामलकावलीं विभूषयामास । एवं तत्र सुचिरं विहृत्य तौ स्वमाश्रमं जग्मतुः । ततो लक्ष्मणेषुभिः क्षतानां कृष्णसाराणां बलिशेषेण मांसेन वैदेही भोज्यं कल्पयामास । साऽथ मांसशेषस्य रक्षायै प्रियेण समादिष्टा पक्षतुंडनखाघातैः काकेन भृशमुद्वेजिताऽऽ-सीत् । ततो ज्ञातवृत्तो रघुनंदनः कोपात् सत्वरमिषीकामभिमंत्र्य यदस्त्रं चिक्षेप । तेना-भिसृतः पक्षी वेगाद् भुवनत्रयं बभ्राम । ततोऽनवाप्तपरित्राणः स तपोवनं गत्वा रामपादाब्जयोश्च पतित्वा शरणमयाचत । एतदालोक्य कृपणवत्सलो रामस्तदस्त्राय लोचनमेकं दापयित्वा काकं ररक्ष । अत्रान्तरे मंथाद्रिजलधिध्वानधीरः पटहनिःस्वनोऽ-भवत् । ततो घनघोषानुकारिणा हयहेषानिनादेन कुपिता मृगेश्वरा उत्पतितुमारेभिरे । किमेतदिति संभ्रान्ताः किन्नर्यो दिशोऽवलोकयामासुः । एवं सैन्यविमर्दपिशुनं शब्दमाकर्ण्य राघवस्तमालमारुह्य पश्येति लक्ष्मणं समादिदेश । ततः सौमित्रिर्बाढमित्युक्त्वा तरुमारुह्य च छत्रचामरच्छन्नां भरतवाहिनीन्ददर्श । सोऽथ वृक्षादवतीर्य रामं प्रोवाच । रघुवर ! विभवमत्तो भरतः प्राज्यं राज्यमवष्टभ्य कंटकोन्मूलनायैव नूनं त्वां योद्धुमागतोऽस्ति । ऐश्वर्यस्थैर्यकामस्याऽस्य मद्विसृष्टाः शरा एवोपदेष्टारो भवंत्विति लक्ष्मणवाक्यं श्रुत्वा दाशरथिः प्रत्यवदत् । सौमित्रे ! भरते वृथा शंकां मा कृथाः । भरतोऽस्मासु नित्यं भक्तिमानासीत् । धीरस्य तस्य सद्वृत्तं न कदापि परिवर्तिता । सत्कुलजा धीमन्तो

लक्ष्मीमवाप्याऽपि गर्विणो न भवंति। निशम्यैतद्रामवाक्यं लक्ष्मणः क्रोधं परित्यज्य धैर्यं दध्रे।

अत्रान्तरे भरतोऽपि यथोचितं सेनां विनिवेश्य सुमंत्रशत्रुघ्नसमेतश्चलितुमारेभे। ततो जननीजनं समाहूय सविनयं प्रोवाच। भवता मम पृष्ठतः समागन्तव्यम्। सोऽथ रुचिरं रामाश्रममवाप्य संतोषं लेभे। ततो दूरात्सानुजं रघुपतिं चीरजटाधरं विलोक्य तत्कारणमात्मानं च मत्वाऽश्रुगद्गदो विललाप। सोऽथ शोकान्मन्दमन्दैरौत्सुक्याच्च त्वरितैः पदैर्भ्रातुरंतिकं प्राप। स ततोऽश्रुसंरुद्धदृष्टिः पृथ्वीलग्नशेखरश्च हे आर्येत्युक्त्वा निपतितः किमपि वक्तुं न शशाक। एवं मूर्छितं तं समादाय महाभुजो रामोऽङ्के समारोप्य च वाष्पदुर्दिनवान् बभूव। ततः स्वच्छमानसो राघवः प्रीत्या मूर्ध्नि समाघ्राय तं पप्रच्छ। वत्स! वात्सल्यप्रणयास्पदं त्वां दिष्ट्याऽद्य पश्यामि। कच्चित् तातमनामंत्र्य तु विजनं वनं नाऽगतोऽसि? जगति यस्य कीर्तिर्व्योममानसहंसीव विराजते। स राजश्रीरजनीविधू राजा तु कच्चित्कुशली? ताः कुलदेवताः कौसल्याद्या जनन्यः कुशलिन्यः कच्चित्? स मैत्रावरुणोमुनिः पुरोहितः कच्चित्कुशली? ये प्रौढराज्यप्रवहणे कर्णधारतां संप्राप्तास्ते मंत्रिणः प्राप्ताभिषेकस्य तव सम्मताः कच्चित्? कच्चिद्गूढमंत्रस्तु रक्ष्यते? यतो भिन्नः स सर्वं भिनत्ति। कच्चित् प्रजाकार्यविचारपरिपंथिनीं विवेकालोकयामिनीं च निन्द्यां निद्रां तु न भजसे? लक्ष्मीरक्षामणिः पण्डित एकोऽपि तव हितैषी कच्चित्? मूर्खसङ्गभरेण तु पृथ्वीयं वृथैव पीड्यते। कच्चिद्विदुषामुपदेशविधेयतां तु प्रयासि! कच्चिद्गुणायुपूर्णेव मूर्खवृता तु ते सभा न? सदैव मित्रपिशुना दोषावलोकिनो राजश्रीरजनीवृकाः खलास्तु ते प्रियाः कच्चिन्न? कच्चित् श्रीसरसीबका धूर्ता मौनव्रतं धृत्वा तु त्वां न मुष्णंति? कच्चिदाखुखुरोत्खात-भुक्तबीजाधरणीव नगरी चौरैरधिकारिगणैस्तु न सुपिरीक्रियते? कच्चिल्ललनावदनाब्ज-विभ्रमभ्रमरावलीसक्ता ते दृष्टिर्नान्यकार्याणि पश्यतीति न? कच्चित्प्रजा अत्युग्रदंडेन तु न बाधसे? चेत्परित्रातैव निहंति तदा लोकेषु शरणं नास्ति? कच्चिद्धर्मे मर्यादामुत्क्रम्य त्वर्थान्न समीहसे? कदर्या एव धनं गणयंति। महान्तस्तु धर्ममेव धनं जानंति? राजन्! मूढव्यसनकारिण्यो विकारवत्यः सविभ्रमाः सुचिरं परिचिता अपि विभूतयो वेश्या इव कस्य प्रियाः संति? बुद्धिमंतो धर्मार्थकामान् सममेव सेवन्ते। दानं, प्रजापालनं, यजनं, धर्मरक्षणं चैता राज्यकल्पद्रुमस्य विपुलाः फलसंपदो भवंति। पराभक्तिर्ब्राह्मणेषु प्रभुशक्तेर्विभूषणमस्ति। सा हि चतुर्वर्गफलप्रदा परममंगलकारिणी च लोके विदिता। निशम्यैतद्राघववचनं विगतस्पृहो भरतो ऽब्रवीत्। प्रभो! धर्महीनस्य मे राज्येन किम्प्रयोजनम्? अहोवत? पापस्य मम

कियती दृढता । यस्त्वं मामेवं विधं दृष्ट्वाऽपि दुःसहं वचो भाषसे ? साम्प्रतं स्वयमयोध्यामभ्येत्य क्रमागतं राज्यं भज । स ते पिता तु निरर्गलं धर्ममार्गं स्वर्गं गतः । अहो लोकेऽस्मिन् किल्बिषकारिणो मम जन्म निन्द्यतरमस्ति । योऽहं नरेन्द्रनिधने त्वत्प्रवासे च कारणमभूवम् । आर्य ! त्वयि वनं याते शोकाग्नितप्तो राजा त्वामेव विलपन् गतासुरभवत् । रघुराज ! भूपतिनिधनेन केवलाऽयोध्यैव विगतप्रभा नाऽभवत् । किन्त्वेषा वसुन्धराऽपि कान्तिहीनतामवाप । सर्वगुणाकरे राज्ञि स्वर्गं गते यद्यार्येण भोगेन्द्रविपुले दोष्णि न धार्यते । तदात्वेषा मेदिनी नूनं मज्जिष्यति । आर्य ! संप्रति सुतवत्सलस्य पितुः क्रिया क्रियताम् । यतः प्रियपाणिच्युतं पानीयं पितरोऽधिकं वांछति । एतद्वज्रपातोपमं वचः श्रुत्वा राघवः कूलंकषैः सलिलैः क्षतःपादप इव धरातले निपपात । सोऽथ संज्ञामवाप्य शुचा शनकैरुवाच । हा नाथ ! क्वाऽस्मान् विहाय यातोऽसि ? प्रतिवचनं तु देहि । आर्य ! अस्मदर्थपरित्यक्तजीवितस्य तव निःसंज्ञोऽयं रामः कथमंजलिं ददातु । हा गुणमहोदधे ! क्व नु ते मुखं द्रक्ष्यामि । क्व वा ते वचः श्रोष्यामि । भो सौमित्रे ! तव पिता देवलोकं गतः । वैदेहि ! तव श्वसुरोऽत्र न विद्यते । हाऽद्य वयं सर्वथाऽनाथा जाताः । एवं धृतिसागरे रामेऽपि प्रलापमुखरे सति सर्वे लोकाः प्रसरद्बाष्पनिर्झरा रुरुदुः । ततः सुमंत्रः सानुजं रामं समाश्वास्य पितुर्जलांजलिं दातुं जान्हवीकूलं निनाय । ततो राघवो बदरेङ्गुदिपिण्याकं दर्भेषु निक्षिप्य प्रोवाच । पृथिवीपते ! इदं ते वन्यमशनं समर्पयामि । प्रसन्नो भूत्वा गृहाण । वयमेतदन्नाः खलु । तस्मादेतेनैव यजामहे । एवं सानुजो रघुनंदनः पितुः सलिलक्रियां कृत्वाऽऽश्रमं च गत्वा पुनरपि पितरं शुशोच । एवं तेषां रुदतां राजपुत्राणां महास्वनं श्रुत्वा ससैनिकाः सर्वे पौरमुख्या अपि तत्र समाययुः । ततो यथोचितेन विधिना राघवेण समभिनंदितास्ते सर्वे निजोचितेषु देशेषु समुपाविशन् । अत्रान्तरे वशिष्ठसहिता राममातरोऽपि तत्र समाययुः । तास्तत्र भागीरथीतीरे रामेण विहितं पितुर्बदरेङ्गुदिपिण्याकं दृष्ट्वा भृशं शुशुचुः । ततः सवशिष्ठं जननीजनं समागतं विलोक्य रामः स्वयं निजं नाम समुदाहरन् प्रणनाम । ततश्चरणालीनजटामंडलं तं विलोक्य समाकुला जनन्यः पाणिकमलैर्ललाटे मुहुर्मुहुर्जगृहुः । एवं दुःखासक्तचेतसां तेषामवश्यायकणोद्बाष्पा यामिनी शनैः शनैः प्रययौ । अथ प्रभाते वशिष्ठप्रमुखैः सह सभार्ये रामे समुपविष्टे वक्तुकामे च भरते पुरःस्थिते किं वक्ष्यतीति सोत्कंठे जने स्तिमिते गगनस्था देवा अपि निश्चलास्तस्थुः । ततो भरतो गंभीरजलधिध्वानधीरया गिरा भ्रातरं सविनयं प्रोवाच । यद्यप्यार्यस्याग्रे मम

वक्तुं प्रगल्भता नास्ति। तथापि सहजप्रणयस्याऽयमुत्सेको भक्तिसंभवो गणनीयः। तात ! निःशेषगुणमण्डने नरपतौ यशःशेषे समग्राऽप्येषा वसुमती त्वां वोढारमभिलषति । यदि योषिद्वशीकृतो राजा मह्यं राज्यं प्रादात्। तर्हि स्वस्थमनसो ममापि मतिविप्लवः कथं स्यात् ? रघुकुलमणे ! राज्यं तु वंशक्रमागतं तवैव। तत्र मादृशां स्पृहा का ? किं कदापि दिक्कुंजरपदे मृगः स्कन्धं समाधत्ते ? विरजसो मम तु त्वत्पादसेवैव राज्यम्। यथा शूद्रोऽध्वरे सोमं नार्हति। तथाऽहमपि सर्वथा राज्यं प्राप्तुमनर्होऽस्मि। आर्य ! तस्मिन् लोकप्रदीपे महीपाले शांते सर्वाः प्रजाः सूर्योदयमिव तवाऽभ्युदयं वांछंति । यदि तातशासनात् त्वया राज्यं परित्यक्तं। तदिदं दासेनोपनीतं तु प्रतिगृह्यताम्। प्रभो ! प्रसीद। नाथहीनामिमां पृथ्वीं-पालय। यतोऽयं लोको राजवियोगजां विपदं विस्मरेत्। एवं भरतेनाभिहिते रामो दन्तत्विषा सत्यसुधां वर्षन् समभ्यधात् । भ्रातः ! संचयानामवश्यं क्षयः, समुन्नतेरवश्यं विनिपातः, संगानामवश्यं विरहः, आयुषश्चावश्यं मृत्युरस्ति। वत्स ! शरीरिणां धनं, विभूतयः, प्रियसंगमाः, भोगाः, आयूंषि च क्षयवक्त्रे निपतन्त्येव। न मे पार्श्वे तु कश्चिदुपायोऽस्ति। येन कालगतिः पावकोद्गतिरिवाऽधो विधीयते ? भावा अभावावधयः, जीवितं निधनावधि, किन्त्वयमविवेकोऽनवधिर्येन सर्वदा भ्रमः संजायते ? स पुण्यात्मा धर्मोपदिष्टपथा दिवं प्रयातः। अतो न शोचनीयः। मयाऽपि सत्यव्रतस्य तस्य शासनं नैव त्याज्यम्। किम्बहुना । को हि सत्यधनः सत्यमुत्सृज्याऽसत्यं परिपालयेत्। निशम्यैवं राघववचनं शोकाक्रांतो भरतो जगाद। आर्य ! कैकेय्या किल्विपकर्दमे क्षिप्तं मां समुद्धर। ते पित्र्यं राज्यं पालय । यतो ज्येष्ठस्त्वं मे पितृतुल्योऽसि। प्रजापालनमेव क्षत्रियाणां परमो धर्मः। पूर्वं बहुविधैर्यज्ञैरिष्ट्वा, वंशरक्षायै पुत्रानुत्पाद्य, राज्ये पुत्रं समारोप्य च ततो वनं गमिष्यसि । महानुभाव ! नाऽयं वनवासकाल इति ब्रुवाणं भरतं सर्वे लोकाः कैकेय्याद्या मातरश्च पुनः पुनः प्रशशंसुः। ततो दृढव्रतो रामोऽब्रवीत् । भ्रातः ! त्वया श्रुताभिजनयोः सदृशं भाषितम्। किन्तु सत्यसंधो राजाऽस्य नियमस्य पालने मया प्रमाणीक्रियते । बन्धो ! यथाऽहं गुरुशासनाद्राज्यं त्यक्त्वा वने स्थितस्तथा त्वयाऽपि ममाज्ञया राज्यं कर्तव्यम्। वत्स ! वृद्धभूपतेर्वरप्रदानसत्येन, तथाऽस्मद्वात्सल्येन च कदाऽपि सत्यविप्लवं मा कृथाः। एतदर्थमेव पितरो बहुपुत्रतां समीहन्ते । यद्येकोऽपि गयां गत्वा तिमिरात्संतारयिष्यति। किम्बहुना। पितुः सत्यं रक्ष। यतः सत्यं हि तीर्थतपोदानयज्ञेभ्योऽपि विशिष्यते । निशम्यैवं रामवचनं प्रजाहितकाम्यया जाबालिमुनिरुवाच। अहोनु ! परतंत्रस्य ते मतिर्नूनं भ्रमति।

यतः शुष्कक्रियामवलम्ब्य सूक्ष्मार्थं नहि पश्यसि । स्वार्थनाशं मा कुरु सांप्रतम् ।

रघुनाथ ! यथा माता जन्मोपकरणम् । तथा पिताऽपि जन्मोपकरणम् । एवं सुहृत्स्वजनबान्धवाश्चाऽपि प्रीतिमात्रोपकरणम् । अत्र ममाऽयमहमस्येति सम्बन्धः सर्वथैव निरर्थकोऽस्ति । राघव ! दशरथांते कथं राज्यं त्यजसि ? तव तस्य च सम्बंधो नेदानीं समवलोक्यते ? अस्मिन्नल्पसुखे बहुदुःखे च जीविते कुशलः किल सुखलेशं समादायैव व्यवहरति । यथा यथा धर्मांशौचशरीराणि निघृष्यंते तथा तथा तेभ्यो भृशं दुःखमेव समुपजायते । यथा पुष्पार्थिना पुष्पितवनात् कंटकशाखादि परित्यज्यते । तथा धर्मार्थिनाऽपि क्लेशविस्तरः संत्याज्यः । धर्मस्कन्धोऽयं कुटिलस्तथाऽतिकर्कशोऽस्ति । ज्ञात्वैवं सन्तस्तस्मिन्हेलया न सज्जंति । ये मूर्खा धर्मतंत्रमविज्ञाय निर्बंधात् क्लेशमेव सहंते । ते पाठमात्ररता न कदाचित् सुखमधिगच्छन्ति । महामते ! कस्मात्समन्युरसि ? मयैतन्नास्तिकमतन्नोक्तम् । कुशलास्तु त एव ये गुरुलाघवं विचिन्त्य धर्मं सेवन्ते । तच्छ्रुत्वा रघुनंदनः कोपं नियम्य प्रोवाच । भगवन् ! भवता यदुक्तं तत्सर्वं वात्सल्यमिश्रितमेव । वस्तुतः सत्यच्युतेन मनुष्येण किम् ? यथा गतायुर्मालया न शोभते । तथा सत्यविहीनो राजाऽपि न राजते । ऋषिराज ! राजाचेद्धर्ममर्यादामतिक्रम्य वर्तते । तदा धर्मोच्छेदेनैताः प्रजाः सर्वथैव निहताः । लोभात्सत्यमुत्स्रष्टुमहन्नोत्सहे । यतः सत्यहीनस्य संपदः प्राप्ता अपि विनश्यंतीति ब्रुवाणं रामं तपोनिधिर्वसिष्ठः प्रोवाच । रघुवीर ! प्रजाहितार्थमेव जाबालिनैवमुक्तम् । मनुवंशक्रमायातं निजं राज्यं त्वया न त्याज्यम् । यतो रघुकुलविभूतयः सर्वदैव ज्येष्ठभागिन्यो भवंति । विप्रा वेदाचारव्रताः साधवः सच्चरित्रव्रताः, नार्यः पतिसेवाव्रता भूपालाश्च प्रजापालनव्रता भवंतीति वसिष्ठवचनं श्रुत्वा दृढनिश्चयो रामः प्रत्यवदत् । आचार्य ! यद्यपि भवद्वचनं प्रामाण्यन्तथाऽपि मयाऽपि तु सत्यं न त्याज्यम् । निशम्यैतद्रामवचनं व्यथितेन्द्रियो भरतः सुमंत्रं जगाद । मंत्रिन् ! यद्यार्यस्तपसैव प्रसीदति । तदा तु ममाऽपि कुशैः शय्यां परिकल्पय । अहमपि यावदार्यः प्रसीदति तावद्वने मौनव्रती भवामि । अथवाऽऽर्यो राज्यं कुलक्रमागतं भजतामहमस्य वनवासव्रतं पालयामीति सुमंत्रमभिधाय स्वयं भरतो भूमौ कुशैरास्तरणं चकार । एतदालोक्याऽग्रजोऽवदत् । अनुज ! नैतत् तव कुलोचितं कर्म । प्रायः शय्याश्रितो हि ब्राह्मणो जगद्दहति । वत्स ! मद्वचसाऽयोध्यां गत्वा धर्मेण प्रजाः परिपालय । रघूणां कुलसंपदः कथाशेषा मा भवन्त्विति रामवचः श्रुत्वा भरतप्रेरिताः सर्वाः प्रजा रामं ययाचिरे । ततो भाविकथाभिज्ञा महर्षयो भरतं प्रोचुः । राजन् ! रामः

सत्यप्रतिज्ञो भवतु । भवानेव राज्यं भजताम् । वत्स ! रघुसंततिः सत्यपरिभ्रष्टा क्व दृष्टा ? एतदाकर्ण्य वज्रताडित इव व्यथितमना भरतो भ्रातुः पादयोरपतत् । एवमालोक्य रामस्तमंकमारोप्य बभाषे । भ्रातः ! शंकां परित्यज्य निष्कण्टकं राज्यं कुरु । ततो गुरुर्माध्यस्थभावमवलम्ब्य प्रोवाच । भरत ! भ्रातुः पादुके समादाय प्रजाः पालय । एवं गुरुवरवचनं श्रुत्वा भरतो रामपादुके शिरसि निधाय जननीभिः सह शनैः शनैः प्रायात् । ततो रामानुजो मुनिगणैः पूज्यमानो जाह्नवीं समुत्तीर्य च त्रिभिर्दिनैः शून्यामयोध्यां प्राप । सोऽथ सुमंत्रं प्रोवाच । मंत्रिन् ! यथा कार्पण्यमलिनी-लक्ष्मीर्मात्सर्यमलिना च धीर्न प्रकाशते । तथेयमयोध्याऽपि रामरहिता न विराजते । एषोऽहं हृदये भूभारचिन्तां पादुके च मस्तके निधाय राघवागमनावधि नंदिग्रामे राज्यं करोमीत्यभिधाय तत्र न गतवान् । ततः स सिंहासने श्रीरामपादुके स्थापयामास । एवं देवबुद्ध्या श्रीरघुवीरपादुके पूजयन् भरतो वसुधामुवाह । अथ सकलं मातृमण्डलं चाऽप्ययोध्यायां निवसन् भगवद्भक्तिपुरस्सरं कालं निनाय ।

अथैकदा रामश्चिरं संचिन्त्य लक्ष्मणमुवाच । भ्रातः ! एतद्वनं तु सर्वं विलोकितम् । सम्प्रति काननान्तरं गच्छामः । निशम्यैवं रामवचनं बाढमित्युक्त्वा लक्ष्मणस्तमनु-ससार । ततः सीतासखो रामः सौमित्रिणा सह पवित्रचरितस्य महामुनेरत्रेराश्रमं जगाम । तत्र तं तपोराशिं प्रणम्य तेन कृतातिथ्यस्तत्रैव तस्थौ । अथ जानकी भर्तृवाक्येन सिद्धमुनिजनवंदितां पातिव्रताग्रगण्यामनसूयां ववन्दे । ततो रामोऽब्रवीत् । महाभागेयं दशवर्षसहस्राणि तपःकृत्वा दुर्भिक्षाल्लोकं ररक्ष जन्हुकन्यां च ससर्ज । सैवैकदा देवहिताय दशरात्रायतां रात्रिं चक्रे । एतदाकर्ण्य जराशुभ्रशिरोरुहां व्रतक्षामां महानुभावां च तां जानकी भूयो भूयः प्रशशंस । ततः प्रणतां पुरःस्थितां च वैदेहीमनसूया जगाद । पुत्रि ! त्वं सतीव्रतं परिपाल्य दिष्ट्या वने पतिसेवया सर्वत्र पूज्यतमा जाताऽसि । यथा युद्धे संमुखं निहताः शूरा योगिनश्च परमपदं प्राप्नुवंति तथा भर्तृव्रतपरायणा नार्योऽपि स्वर्गश्रेष्ठं स्थानं समधिगच्छंति । यथा प्रजानां दैवतं भूपतिः सज्जनानां दैवतं पितरौ, शिष्याणां दैवतं गुरुः, विप्राणां दैवतं च वन्हिस्तथैव नारीणां दैवतं पतिरस्ति । वत्से ! इयं ते सुधामयी कान्तिः, लीलामयं च वचो भर्तृभक्तिप्रणयिना शीलेनाधिकं शोभते । यथा चन्द्रचूडस्य गौरी श्रीपतेः कमलाऽमृतत्विषश्च रोहिणीसम्मताऽ-स्ति । तथा त्वमपि रामस्य प्रियतमाऽसि । इदं देवार्हमपरिम्लानं माल्यं इदं वस्त्रं, इदं विभूषणं, इदं च दिव्यं विलेपनं मत्सकाशाद् गृहाणेत्युक्त्वा मुनिपत्नी तस्यै प्रादात् ।

सीताऽपि प्रणतिपूर्वकं तत्प्रीतिदायं जग्राह । ततो महर्षिप्रियया पृष्टा जानकीस्वजन्मकथामब्रवीत् । महानुभावे ! पुरा जनकराजो नाककामिनीम्मेनकां दृष्ट्वा पुत्रलाभाय तत्संगमे मतिं विदधे । तस्मिन्नेवावसरेऽशरीरिणी वागभूत् । राजन्नचिरात्तेऽयोनिजमपत्यं भविष्यति । ततो भूपतेः क्रतुक्रियारंभे हेमलांगलकृष्टाया भुवः सुताऽहं संजाता । ततः कालेन वर्धमानायां मयि पित्रा राजसमाजे धनुरारोपणपणः स्वयम्बरः प्रकल्पितः । अत्रान्तरे यदृच्छयाप्तेन धनुर्भङ्गकारिणाऽऽर्यपुत्रेण सेवासौभाग्यभागिन्यहं प्राप्ता । एतदाकर्ण्य मुनिपत्नी जानकीमुवाच । पुत्रि ! ते मधुरं वचो मे तृप्तिं न ददाति । किम्बहुना । त्वमिव शशिमुखीयं रात्रिः प्रत्यासन्नाऽतः पत्युरंतिकं गच्छेत्युक्त्वाऽनसूया विरराम । तच्छ्रुत्वा सीताऽपि तां प्रणिपत्य प्रियपार्श्वं जगाम । अथ राघवो दिव्यवस्त्राभरणभूषितां सीतां विलोक्य विस्मयौत्सुक्यहर्षाणां तुल्यं वश्यतां ययौ ।

अथ प्रभाते सानुजो दयितासखो रामोऽत्रिं प्रणम्य तदाज्ञया दण्डकारण्यं विवेश । ततो वासवोपमो मुनिवृन्दैर्विहितातिथ्यश्च स त्रिदिवोपमे तस्मिन्दिव्याश्रमे समुवास । ततो मुनिजनास्तं विश्रुतविक्रमं ज्ञात्वा प्रोचुः । तात ! साम्प्रतं नस्तपस्त्वद्वीर्यगुप्तं जातम् । वर्णाश्रमगुरवस्त्वद्विधा भूमिपालास्तपस्विनां तपस्त्राणात् हेलया तत्फलभागिनो भवंतीत्युक्त्वा रघुनंदनमपूजयन् । ततो रामस्तत्र निशामेकां स्थित्वा प्रातरेव वनं व्यगाहत । अत्रान्तरे ससीतः सलक्ष्मणश्च स वीरः कज्जलश्यामं निशीथमिव राक्षसं ददर्श । ततोऽतिभीता सीता मरुतावर्तवलिता लतेव पतिमैक्षत । अथातिक्रुद्धो राक्षसः शब्देन दिशः पूरयन् दोर्भ्यां वैदेहीं च समादाय प्रोवाच । युवां धन्विनौ च जटिलाविति चित्रम् ? स्त्रीसहायौ च प्रमादिनौ विधिनाऽद्य मे भक्ष्यौ समादिष्टौ । यत्र मुनयो दुर्बला राक्षसाश्च प्रबलास्तत्र धनुषो धारणं वृथैवास्ति । इयं मुनिमानसहारिणी ते योषित् प्रमत्तस्य राजश्रीरिव मया प्रसह्य ह्रियते । अहं विराधनामको राक्षसोऽस्मि । काननेऽस्मिन् स्थित्वा प्रत्यहं मुनिमांसमेवाद्मि । निशम्यैवं विराधवाक्यं प्रियापरिभवार्दितो रामो लक्ष्मणमुवाच । भ्रातः ! पश्य । या जनकराजसुताऽन्तःपुरे विवृद्धा । साऽद्य मे पत्नी वने घोररक्षसाऽऽकृष्यते ? एतदाकर्ण्य सौमित्रिः प्रत्युवाच । रघुराज ! तव पुरःस्थिते दासे कोऽयमार्यस्य संभ्रम इत्यभिधाय यान् कोपाङ्कुराकारान् खरान् वाणान् प्राहिणोत् । ते राक्षसं भित्त्वा क्षितिं विविशुः । एतदालोक्य कोपाकुलो राक्षसः कालानलोल्बणं यच्छूलं लक्ष्मणोरसि चिक्षेप तद्रामो द्विधा चकार । एवं दिवौकसां शूले शूले भिन्ने राघवो द्वाभ्यां शराभ्यां राक्षसं भित्त्वा तृतीयेन चाऽस्य हृदयमपि चिच्छेद । ततो वाणभिन्नहृदयो निशाचरो भुवि पतन्

गद्गद्गिरा प्रोवाच । वीर ! शतह्रदासुतोऽहं विराधस्त्वयाऽद्य तमोमयाच्छापान्मोचितः । पूर्वजन्मन्यहं तुम्बुरुर्नाम गन्धर्वोऽभवम् । रंभासक्तं मां ज्ञात्वा तत्कामुकः कुवेरो मां शशाप । यश्च त्वत्तो वधावधिरासीत् । सोऽद्य मया चापितः । राजन् ! स्वस्तितेऽस्तु । एषोऽहं त्वत्प्रसादतस्त्रिदिवं व्रजामि । मे कायमवटे क्षिप । यतो रक्षसामेष एव संस्कारो विहितः । इतो योजनमुत्क्रम्य शरभंगमुनिं विलोकयेति निगद्य प्राणांस् तत्याज । ततो लक्ष्मणक्षिप्तशरीरः स देवलोकमगात् । एवं काकुत्स्थो विराधं हत्वा सीतां परिष्वज्य च लक्ष्मणसमेतः शरभंगाश्रमं जगाम । अस्मिन्नेवावसरे पावकवर्चसा रथेन शक्रः समेत्य त्रिदशैः सह मुनिं प्रोवाच । भगवन् ! पूततपसस्तव सुकृतिनां लोकास्तु प्रागेव करतलगता आसन् । सम्प्रति ब्रह्मणः पदमवाप्नुहीति निगद्य दूराद्रामं च विलोक्य देवैः सह दिवमाचक्रमे । अथ रामोऽपि सुरवृन्दसमेतं देवराजं प्रणम्य शरभंगाश्रमं प्राप । ततो ब्रह्मसदनं गन्तुं प्रस्थितोऽपि महामुनिः प्रणयाद्राघवायाऽऽतिथ्यं कर्तुं व्यलम्बत । अथ सोऽब्रवीत् । राम ! तपसा मया ये सनातना लोकाः संप्राप्ताः तान् गृहाण । यतः पूज्यत्वात् त्वं सर्वमर्हसीत्युक्ते मुनिना विनयावनतो रामो वभाषे । मुनिराज ! भवतां दर्शनं मम ब्रह्मधाम्नोऽप्यधिकं सुखप्रदमस्ति । अपर्यन्तैस्तपोभिः किम् ? वहुडम्बरैर्यज्ञैः किम् ? त्वादृशां दर्शने सति जलभूतैस्तीर्थैश्च किम् ? कृतोचितोऽहमपि निजपुण्यार्जितांल्लोकान् गमिष्यामीत्युक्त्वा तस्य विश्वकारुण्यपुण्यतामपूजयत् । ततो मुनिरुवाच । राम ! सुतीक्ष्णमुनेराश्रमे तव वासः समुचित इति निगद्य शरभंगो विग्रहं त्यक्तुमुद्यतोऽभवत् । सोऽथ सर्पनिर्मोकवत् सप्तधातुमयं देहं पावके त्यक्त्वाऽग्निवर्णः कुमारः समपद्यत । ततः स शक्रपुरस्सरो दिवमाक्रम्य स्वयं विधात्रा विहितस्वागतो ब्रह्मधाम ययौ । एवं व्योम्ना शरभंगे गते तदाश्रमवासिनः सर्वे मुनयो मिलित्वा राममुपाययुः । तेषु केचिद्वैखानसाः, निराहाराः, मरीचिपाः, वालखिल्याः, अश्मकुट्टाः, मृगाजगरगोव्रताः, पयोभक्षाः, पवनाशिनः, दंतोलूखलिनः, व्योमनिलयाः जलमग्नाः, स्थण्डिलशायिनः, नग्नाः, पंचातपाः, वृक्षशाखावलम्बिनः, फलाशिनः, पादांगुष्ठाधाराश्च वभूवुः । ततस्ते प्रोचुः । एते महात्मानो गुणगौरवात् त्वां वर्णाश्रमगुरुं गणयंति । क्षितिपा दातृयतियज्ञशीलतीर्थसेविनाञ्च रक्षणात् फलषड्भागभागिनो भवंतीति सत्यम् । राजन् ! वनेऽस्मिन् राक्षसैर्वयं स्वल्पावशेषतां नीताः । तपःक्षयभयात्तेष्वस्माभिः शापो नोज्झितः । वीर ! क्षिप्रं राक्षसान् क्षपय । अतएव वयं शरण्यं त्वां शरणं गताः । निशम्यैवं मुनिवृन्दवचनावलीं रचितांजली राघवोऽब्रवीत् ।

महानुभावाः ! लोकेषु भवंत एव शरणार्थिनां शरण्याः। एषोऽहं भवतामर्थे कण्टकशोधने सज्जोऽस्मि । एष मे स्वयमेव निश्चयः । किन्त्वेष शासनानुग्रहोऽधिक इत्युक्त्वा तान् समामंत्र्य च श्यामसुन्दरो रामः सुतीक्ष्णमुनेराश्रमं जगाम । सोऽथ तपोराशिं सुतीक्ष्णं प्रणम्य तस्याज्ञया स्थितिं भेजे । ततस्तेन कृतातिथ्यो विभावरीं सुखं नीत्वा प्रातरेव रम्यासु तत्तपोवनभूमिषु विचचार । अथैकदा सीता सज्जकार्मुकं सायकेष्वधिकादरं च राघवं दृष्ट्वाऽब्रवीत् । आर्यपुत्र ! कथं नाम यत्नेन निशाचरा मृग्यंते ? मुनिसंरक्षयदीक्षितास्ते नाद्याऽपि निकारपदवीं श्रिताः ? इदं तेऽधिज्यं धनुर्युद्धं विना नोपशाम्यति । पुरा कश्चिन्मुनिः केनचिन् न्यासीकृतं कृपाणं हस्ते सुचिरं ररक्ष । स खड्गग्रहणप्रसंगेन कमण्डलुं त्यक्त्वा ब्राह्मणोचितां क्रियां च परित्यज्य मनसि शूरतां दध्रे । सोऽथ काले गते क्रूरतामवाप्य पुण्यान्निजपदादच्यवत । नाथ ! ज्ञात्वैवं सर्वदाऽधिज्यं चापं मा कृथाः । प्रभो ! प्रणयादेवेदमुक्तोऽसि । परिज्ञानगौरवान्नेति जानकीवाक्यं श्रुत्वा प्रहृष्टो रघुनंदनोऽब्रवीत् । प्रिये ! त्वं सर्वमनिन्दितं वक्तुं जानीषे । किंतु राक्षसैरभिभूतानां मुनीनां रक्षायै मया निश्चयः कृतः । यद्यपि प्राणहिंसा महत्पातकं कथ्यते । तथाऽपि दुष्टनिग्रहः क्षत्रियाणां परमोधर्म इत्युक्त्वा मैथिलीसखो रामस्ततो ययौ । सोऽथ दिनांते सतां वृत्तमिव स्वच्छं, प्रफुल्लकमलैर्व्याप्तं, च सरो दृष्ट्वा तन्निकटे विशश्राम । ततः किमेतदिति कुतूहलात् पृष्टो मुनिरुवाच । राम ! शातकर्णमुनेराश्रमोऽयम् । स महाभागोऽत्र वाताशनो वर्षायुतं तपस्तेपे । अथैकदा भयशंकिता देवास्तपोविघ्नं कर्तुं पंच प्रधानाप्सरसो नियोजिताः । ततस्ता नवयौवना हावभावकटाक्षैर्मुनिंवशीकृत्य तस्य पत्नीत्वमगमन् । उक्तं च यथा तरंगिण्यो महागिरिं दारयंति तथा वरांगना महात्मनामपि चित्तमनायासेन पातयंति । सोऽथ मुनिवरो लीलामयं नववयः कृत्वा ताभिः सहाऽत्र रममाणस्तिष्ठति । तस्याऽत्र सरोवरतीरे गीतवाद्यरसोत्सेकः सुगतो ध्वनिः श्रूयते । एतदाकर्ण्य विस्मितो रघुनंदनस्तत्र चिरं स्थित्वा ततः सुतीक्ष्णनिर्दिष्टमगस्त्याश्रमं जगाम । सोऽथ सीतासहितो गच्छन् लक्ष्मणं प्रोवाच । वत्स ! एताः संतोषविशदा दिशः पश्य । नूनं पुण्यात्मनस्तस्य दिव्याश्रमोऽयम् । अत्रैतेऽक्षमालावलया वल्कलिनश्च तरवो मुनय इव भान्ति । किम्बहुना प्रशांतवैराणां सिंहेभफणिबर्हिणां प्रेमप्रणयिनी चेष्टाऽपि निर्विकारैव संलक्ष्यते । यथा शमेन शीलवृत्तिः, दानेन च दयालुता विभाति । तथाऽनेन महामुनिना इयं दक्षिणदिशा विराजते । पुराऽत्रघोराविल्वलवातापी दैत्यौ बभूवतुः । यत्प्रतापेनेयं भुवनत्रयी सातंका बभूव । वहुधेल्वलो भ्रातरं मायामेषाकृतिं कृत्वा

ब्राह्मणेभ्यो वधाय तन्मांसभोजनं प्रादात् । ततो वातापिस्तृप्तानां ब्राह्मणानां कुक्षिं विदार्य निर्गच्छन्नासीत् । येन महान् ब्राह्मणक्षयो बभूव । अथैकदा तेन मुनीन्द्रोऽगस्त्यो निमंत्रितः । सोऽथ वातापिमांसेन सिद्धं भोजनमवाप्य तृप्तोऽभवत् । भ्रातरेहीति भ्रात्राऽऽहूते विहस्य मुनिः प्रोवाच । सखे ! स तव भ्राता तु ममोदरे जीर्णतां यातः । निशम्यैवं मुनिवचनं कोपाकुलो दैत्यो यावन्मुनिं हन्तुं धावति । ततः प्रागेव स सूर्यतेजसा चक्षुषोल्वलं ददाह । एवं कथां कथयतस्तस्य दिवाकरोऽस्तं गतः । ततो रामो भ्रात्रा सह पश्चिमां सन्ध्यामुपास्याश्रमाद्बहिरतिष्ठत् । अथ रामोऽनुजं मुनिसन्निधौ प्रेषयामास । सोऽथ रामशासनात्तत्र गत्वा मुनिं प्रणिपत्य च रामागमनसंदेशं श्रावयामास । अथाऽऽहूतो वैदेहीसखो मुनीन्द्रं नमस्कृत्य तद्विनिर्दिष्टमातिथ्यं प्राप । अथाऽन्येद्युः सुखोपविष्टे काकुत्स्थे मुनिरुवाच । राघव ! त्वं स्वगुणैर्गुरुतां गतः सत्कारार्होऽसि । यस्य गृहादतिथिः पूजां विना विमुखो याति । स तस्मिन् स्वपापं विन्यस्य पुण्यमादाय च गच्छति । राम ! त्वमस्य जगतो राजाऽसि । अतो विश्वकर्मणा रचितं वैष्णवं चापं ब्रह्मदत्तं सायकं अक्षय्यसायकौ तूणं च तुभ्यं ददामि । ततोऽभेद्यं कवचं खड्गं मातलिसमेतं कार्यकालोपयोगिनं च रथमपि प्रादात् । रघुवीर ! इयं सती सीता त्वद्भक्तिपीयूषैः स्नात्वाऽस्मिन् कानने ग्लानिं नायाति । स जनकभूपालो धन्यः । सा साध्वी माताऽपि धन्या । यस्याः इयमात्मजाऽस्ति । प्राय ईदृशाः सत्यव्रताः स्त्रियो लोके दुर्लभा एव । जगति विभवेष्वनुरागिण्यो विपत्सु च विरागिण्यः स्त्रियो मिलंति । एताः सुबद्धा अपि शीर्यंते क्षणेन च म्लानिं यांति । पुष्पमाला इव योषितो दूरत एव शोभंते । यासामोष्ठपुटे तु रागः परन्तु हृदि मलिनता तिष्ठति । अतएव कः सामान्यजनस्तदाशयं ज्ञातुं शक्नोति ? पुरा यदा भार्गवशापेन दण्डभूभुजाऽयं देशः परित्यक्तः । ततोऽयं देशोऽतिभयंकरो बभूव । अत्राऽनावृष्टिं रुद्धां च पवनगतिमालोक्य देवकार्यचिकीर्षया गतोऽहं हिमाद्रिशिखराच्छून्यामिमां श्वेतपुरीं संप्राप्तवान् । ततः कालेन महीयं घोरराक्षसैर्व्याप्ताऽभवत् । तत्र त्वद्दोष्णि संनद्धे मम संरंभो नोचितः । राम ! सृष्टेः प्राक् त्वमेव निर्विकल्पोऽनुपाधिकश्चासीः । त्वदाश्रया त्वद्विषया वा माया ते शक्तिरुच्यते उक्तं । च उपनिषत्सु ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागोजीवस्स विज्ञेयः स चानन्त्वाय कल्पते ॥
नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥

श्रीमद्भगवतो माया द्विविधा । विद्याऽविद्येति भेदात् । तत्र निवृत्तिलक्षणां विद्यां ये वेदान्तोपासकाः परिचरंति । ते त्वद्भक्तिनिरता भूत्वा भवार्णवं संतरन्ति । किं च ये प्रवृत्तिधर्मिणीमविद्यां सेवंते । ते संसारचक्रे पतित्वा भ्राम्यंति । ईश्वरांशोऽयं जीवात्मा साधुसंगतिमवलम्ब्य ज्ञानादेव मोक्षमधिगच्छतीत्युपादिश्य महामुनिरगस्त्यो विरराम ।

ततो रघुनंदनो गोदावरीतीरमुपगम्य तत्र पंचवट्यां निवासार्थमुटजं परिकल्पयामास । अत्रान्तरे तेजोराशिं वृद्धगृध्रं जटायुषं ददर्श । सोऽथ राक्षसोऽयमिति मत्वा सौमित्रिणा सह तमभ्यद्रवत् । विलोक्यैतद् गृध्रराजोऽब्रवीत् । राजन् ! अहं जटायुरितिविश्रुतो गृध्रराजोऽस्मि । राजा दशरथो मम मित्रमासीत् । पुराऽत्र दक्षाख्यः प्रजापतिरभूत् । तस्य कन्यका भूतसंतानमातरो बभूवुः । ततोऽदित्याद्यासु देवीषु कश्यपमुनीश्वरात् समन्ततः सुरासुरमुखे विश्वसर्गे संभूते विनता गरुडारुणौ सुतौ जनयामास । गरुडो विष्णुरथोऽनूरुश्च सूर्यसारथिर्बभूव । अरुणस्य तनयोऽहमस्मि । संपाती च ममाग्रजो वर्तते । निशम्यैवं गृध्रराजवचनं श्रीरामलक्ष्मणौ तं परिष्वज्य पितृसखं पूजयामासतुः । ततो रामः प्रसन्नमधुरा वनस्थलीर्विलोक्य लक्ष्मणमुवाच । वत्स ! एते स्तब्धकर्णाः कुरंजकाः किन्नरयोषितां केलिगीतं शृण्वंति । ससौरभाः शीता वाता वान्ति । मंजुगुंजाद्विहंगेषु काननेषु समन्ततः स्वान्तसंतोषसंपदो विश्राम्यंतीत्युक्त्वा मनोहरे पल्लवगृहे रजनीं निनाय । अथैकदा हेमन्तमालोक्य रामो जगाद । भ्रातः ! एतास्तुहिनम्लानपंकजाः पद्मिन्यो वरांगना जरयैव विभांति । दिवाकरः शीलभ्रष्टनृप इव निष्प्रतापतां यातः । मुग्धानां दुराशा इव रजन्यो दीर्घतां याताः । यांचयाऽभिमाना इव वासराश्च क्षीणतां प्राप्ताः । तच्छ्रुत्वा लक्ष्मणोऽब्रवीत् । रघुराज ! हिमशीतास्वेतासु रात्रिषु त्वद्भक्त्या भरतो भुवि शेते । त्रयोदश समास्तु याताः । सम्प्रति वर्षशेषव्रतो भरतो मयूरः पर्जन्यमिव त्वां प्रतीक्षते । निशम्यैवं भ्रातृवचनं स्नेहविक्लवो रामो गोदावरीतटे स्नात्वा स्वमाश्रमं ययौ ।

अथ कदाचिद्यदृच्छया गता शूर्पणखा नाम रावणस्वसा सिंहस्कन्धं, महाबाहुं,

कमललोचनं मदनद्युतिं सवधूकं चापि राममवलोक्य कामातुरा बभूव । साऽथ राममुपसृत्य बभाषे । को भवान् ? कथं च स्त्रीसमेतोऽत्र समायातः ? जटाभिस्तापसो धनुषा च क्षत्रियो दृश्यसे । सर्वथाऽयं विपरीताचारो यद्वने स्त्रीसहायता वल्कलधारणं चेति तया पृष्टः स्वभावसरलाशयो रामो निजजन्मकथां वनवासकारणं च कथितवान् । तच्छ्रुत्वा पुष्पेषुशरपीडिता सा प्रोवाच । राजन् ! अहमस्मि शूर्पणखा नाम खरदूषणस्वसा । दशग्रीवकुंभकर्णविभीषणा अपि संति मे भ्रातरः । इमां मंदसंचारां मानुषीं त्यज । यतोऽस्याः संभोगे निर्दयोत्सवो न भवति । ज्ञात्वैतन्निर्माल्यमालामिव परित्यज्यैनां हेमपद्ममयीं मालामिव मां कण्ठे कुरुष्व । किम्बहुना । देशेष्वमर्त्यसेव्येषु मया सह रमस्व । गुल्फरज्जुरियं योषा तु धीमता त्वया त्याज्यैव । निशम्यैतद्राक्षसीवचनं रघुनंदनो विहस्य समीपस्थं लक्ष्मणं च निर्दिश्य प्रोवाच । सुमुखि ! मेऽयं भ्राता युवाऽप्यकृतदारविधी रतिशून्यः स्मर इव त्वादृशीं वधूमभिलषति । एतदाकर्ण्य सा लक्ष्मणं बभाषे । वीर ! दिव्यसंभोगसुभगो भूत्वा मां भजस्व । तच्छ्रुत्वा सौमित्रिः प्रत्यभाषत । सुंदरि ! वनवासिनोऽस्य राजर्षेरहं तु दासोऽस्मि । रूपेणानेन त्वं कथं दासपत्नी भविष्यसि ? सुभ्रु ! भवादृशी सौभाग्यभागिनी भार्या त्वार्यस्यैव समुचिता । यतो जगत्त्रये भवती स्मरविजयवैजयन्तीव विराजते । निशम्यैतत्सा लक्ष्मणलक्ष्यं विहाय राममुपासरत् । तस्मिन् समये स्मरानिलालोला सा दोलेव गतागतं चक्रे । ततः स्मरमोहिता सा तत्संगमे सीतामेव विघ्नं मत्वा क्रुधा तामभ्याद्रवत् । एवं राहुच्छायाग्रस्तां शशिकलामिव सीतां दृष्ट्वा तूर्णं राघवो राक्षसीमाचकर्ष । ततः क्रुधा लक्ष्मणं प्रोवाच । वत्स ! परिहासेनालम् । यतो हिंस्राः केलिभाजनं नेति मयाऽद्य स्पष्टमनुभूतम् । सर्पैः संगः, पिशुनैर्मंत्रः, खलैश्च परिहासोऽवश्यं भयमादत्ते । पश्य पश्य । अस्या अशनितुल्यैः स्वनैस्तर्जितेयं सीता सहसा मोहमुपागतेति रघुनाथेनोक्तो लक्ष्मणः सपदि करवालेन तस्या राक्षस्याः कर्णनासिकं चिच्छेद । ततः कोपाकुला रुधिरक्लिन्नमुखी च सा भ्रातुः खरस्य गृहमेत्याऽखिलवृत्तान्तं निवेदयामास । ततो ज्ञातवृत्तः खरो राघवौ निहन्तुं चतुर्दशनिशाचरानादिदेश । अथैवमस्त्विति व्याहृत्य प्रस्थिताः प्रहारिणस्ते शूर्पणखादिष्टवर्त्मना पंचवटीमभ्येत्य तत्र च सुखासीनं सीतासखं राघवं ददृशुः । अथ रामोऽपि शूर्पणखाग्रगान् राक्षसान् दृष्ट्वा लीलयैव चापमारोप्य च तत्क्षणे समरोन्मुखो बभूव । ततस्तैः क्षिप्तामायुधपरंपरां चित्रलाघवो दाशरथिः सहसा चिच्छेद । अथावसरज्ञो रामो यान् संतप्तकनकोक्षितान् बाणान् प्राहिणोत् । तैर्दिशः क्षिप्रं विद्युत्परिचिता इव बभुः । ततस्ते राक्षसान् विनिर्भिद्य

वसुधां विविशुः । एवं तान्निपतितान्वीक्ष्य भीत्या क्रन्दन्ती राक्षसी सत्वरं पलायिता । अथ खरोऽपि तद्गिरा राघवाग्निपतंगतां यातान् निशाचरान् ज्ञात्वा स्वयं योद्धुं द्रुतं प्रययौ । अस्मिन्नवसरे तस्याग्रे भीमकर्मणां रक्षसां चतुर्दशसहस्राणि निर्ययुः । एवं राक्षससंभारान्महीतले कंपमाने, रक्षःसैन्यसमुद्भूतधूलिग्रस्ते च नभस्तले रामो लक्ष्मणे सीतां विन्यस्य सन्नद्धकवचो वभूव । सोऽथ धनुः संधाय सुरद्विषां पुरोऽपरो धूर्जटिरिवाऽतिष्ठत् । ततः क्षणेन रक्षोभी राघवाश्रमे पूरिते घोरगंभीरः समरारंभदुंदुभिरध्वनत् । तेन महाशब्देन त्रस्ता मृगपक्षिणोऽपलायन्त । तापसाश्च तूर्णमपुनर्वलिताननां दुद्रुवुः । तस्मिन्नवसरे राक्षसाः पुरःस्थितं तेजोराशिं राघवं दृष्ट्वा चित्रार्पिता इव तस्थुः । अथ सैन्यं निश्चलमालोक्य खरो दूषणं प्रोवाच भ्रातः! परसैन्यं तु न दृश्यते पुनः कथमेवंविधागतिर्जाता ? निशम्यैतद् भ्रातृवचनं दूषणः पृथुवेगेन रथेन सैन्यमध्याद्विनिर्गत्याऽग्रतः स्थितं चण्डांशुमिव दुर्धर्षं रामं ददर्श । सोऽथ तूर्णं परावृत्य खरं प्रत्यब्रवीत् । एष धनुर्धरो रामो रक्षसां गतिं निरुन्धानस्तिष्ठति । एतदाकर्ण्य कोपकम्पितः खरो रथमारुह्य स्वयं राममभ्याद्रवत् । ततः सर्वे क्षपाचराः समंततः परिवार्य प्रदीप्तायुधवर्षणे राममदृश्यं चक्रिरे । एवं घोराभिः शस्त्रवृष्टिभिर्निर्भिद्यमानस्य तस्य वपुः शोणितेन किंशुकाशोकसंकाशं वभूव । ततः क्रुद्धो दाशरथिः शितशरासारैः केषांचिच्छिरांसि, केषांचिदश्वान्, केषांचिद् गजान्, केषांचित् सारथीन्, केषांचिच्च रथान् संचूर्णयामास । ततः सकोदण्डैर्भुजैः सतोमरकरैः शरैश्छिन्नैश्छत्रैर्ध्वस्तैश्चध्वजैराच्छादिता मेदिनी बभूव । इत्थं रक्षसां सैन्ये भग्ने दूषणो राममभ्येत्य निर्विवरैः शरैस्तं समाच्छादयत् । एतदालोक्य धैर्याद्रीरामोऽस्त्रशस्त्राण्यपवार्याऽस्य दूषणस्य रथं चूर्णयामास । ततः क्रुद्धो राक्षसोऽस्मै घोरं गदापरिघपट्टिशं प्राहिणोत् । ज्ञात्वैतद्रामः प्रहारं विनिवार्य भल्लाभ्यामस्य सभूषणौ भुजौ चकर्त । येन कृत्तबाहुः पृथूरस्कः स सहसा भूमौ निपपात । एवं दूषणे निहते कोपं कृत्वा प्रमाथिस्थूलाक्षमहाकपालाख्यादानवा युद्धार्थमाजग्मुः । ततस्ते सूर्याग्रे मेघलीलामिव रामस्य पुरतः शूलपट्टिशप्रासदिवृष्टिं चक्रुः । एतदालोक्य राघव सायकशतैः सहस्रैश्च पिशिताशिनां शतानि सहस्राणि च जघान । तस्मिन् क्षणे राक्षसास्तमेकमप्यनेकतां प्राप्तं विश्वसंहारदीक्षितमन्तकमिव मेनिरे । अत्रान्तरे त्रिशिरा योद्धुमुद्यतं खरं निवार्य स्वयं रामं दुद्राव । सोऽथ यैस्त्रिभिर्वाणैर्ललाटे राघवं विव्याध । प्रभाजटिला अपि ते तस्य हेममालातुलां प्रापुः । ततो दाशरथिः शरैर्मनोरथमिव रथं छित्त्वा गिरिशिखराणीव तस्य शिरांस्यप्यपाहरत् । एवमाश्चर्यकारिणा रामेण क्रूरे त्रिशिरसि हते

पलायमानान् स्वसैनिकान् विलोक्य च स्वयं खरो योद्धुमागतोऽभूत् । ततः खरशरासारपूरिते लोके सर्वभूतानां संहाररजनीभ्रमो बभूव । ततः खरो बाणै रामचापं खण्डयित्वा तस्य कनकप्रभं कवचमपि चिच्छेद । एतदालोक्य रघुपतिरन्यं वैष्णवं चापमादाय तस्य रक्षसोध्वजं छित्त्वा सारथिसमेतं रथमप्युन्ममाथ । ततो निहताशेषसैनिको राक्षसो हताश्वं स्यंदनं समुत्सृज्य पदातिरेव युयुधे । एवं विषमस्थं तं विहस्य राघवोऽब्रवीत् । ते विभूतिस्तु क्षयं याता किन्तु पापक्षयो न जातः । किं त्वं न जानीषे । यद्वाताकुलाश्वत्थदललोलाः खलश्रियो भवंति । पर्यन्ते सुकृतादृते न रथो नाश्वो न गजो न मित्राणि न मंत्रिणो नः च बांधवास्तिष्ठंति । यावत्सर्वसंमार्जिनी कलुषामतिर्नोदेति तावदेव नानैश्वर्यकुसुमप्रकराः पुनः पुनः प्रस्फुरंति । त्वामेकाकिनं त्यक्त्वा ते पदानुगाः क्व गताः ? लोके स्वार्जितान्येव कर्माणि सहायतां प्रयांति पाप ! यत्त्वया मुनयो भक्षितास्तदेवाऽद्य पातकं तव पुरो धावति । निशम्यैतद्रामवचनं कोपाकुलः खरोऽब्रवीत् । रे मिथ्याधर्मध्वज ! प्राकृतान् राक्षसान्हत्वा किं वृथा प्रगल्भसे ? किं त्वं नावगच्छसि ! यत् संपत्तयो विपत्तयश्च महतामेव भवंति न क्षुद्राणामित्युक्त्वाऽस्मै घोरां गदां प्राहिणोत् । एतदालोक्य लघुहस्तो रामः सायकैस्तां कणशो व्यधात् । ततोऽसुरो वृक्षमुन्मूल्य क्रुधा-राममभ्याद्रवत् । ज्ञात्वैवं रामो बाणेन तस्य हस्तगतं तरुं तिलशश्चकार । ततः कोपकंपितो निशाचरो यावद् द्वितीयं तरुमुन्मूलयति । तावद्रामभद्रोऽर्धचन्द्रेण तस्य रक्षसः शिरश्चिच्छेद । एवं तस्मिन नक्तंचरे हते महर्षयः प्राहृष्यन् । सिद्धगणैश्च सह देवा अपि राममभ्येत्य पुनःपुनरपूजयन् । एवं शूर्पणखाऽहचे राक्षसक्षयं दृष्ट्वा व्योम्नाऽब्धिं समुत्तीर्य च लंकां जगाम । साऽथ सभातले क्रूरसचिवैः सेव्यमानं, दशाननं विलोक्य छिन्ननासा निशाचरी प्रोवाच । अहोवत ! संपदां दुरारोहं शृंगं समासाद्याऽपि प्रसुप्तः समीपस्थं दुःखं नावगच्छसि ? यथा विदग्धनारी ग्राम्यं प्रतिं न भजते तथा राजलक्ष्मीरपि विभवक्षीवमविज्ञातक्षयोदयं चाऽपि भूपतिं नोपसेवते । यो राजा सुखमनुभवन् भविष्यं न चिंतयति स राजसंपत्तिं स्वयं दुःखाग्नौ जुहोति । यथा नवयौवनाः कामिन्यो वृद्धपतिन्नाभिवाछंति । तथा व्यसनासक्तं महीपतिं प्रजा अपि नाभिलपंति । यथा कवीनां चक्षुः प्रतिभा, पण्डितानां चक्षुः शास्त्रं, महर्षीणां चक्षुर्ज्ञानं चास्ति तथा भूभुजां चक्षुश्चाराः । कथं नामघोरं समीपस्थमपि व्यसनं न जानीषे ? तवेयं श्रीलताप्रत्याऽऽसन्नक्रकचाग्रेण लूना । ये खरमुख्या राक्षसा जनस्थाने आसंस्ते सर्वे हि रणकुशलेन रामेण दयिताश्चाप्यशेषतान्नीताः । जगति यस्य प्रभविष्णुताऽनुद्योगहतारंभा भवति । तस्य तेजां-

सि यशांसि च शनैः शनैर्नाशमुपयांति । लोकपालान् विजित्य त्रिलोकीनाथस्त्वं मनुष्येण हतानप्यनुजान् न वेत्सीति चित्रम् ? अल्पप्रदोऽतिक्रोधी, कृतवैरः पुरुषार्थरहितः, निर्धनश्च वेश्यारागी यथाऽवज्ञां सहते तथाऽलसभूपोऽपि न सम्मानं लभते । दाशरथी रामो भ्रात्रा लक्ष्मणेन सह दण्डकारण्ये रक्षसां काल एव समुपस्थित इति मन्ये । तस्य सीतेति विख्याता वनिता मयाऽवलोकिता । किम्बहुना । तस्या नवयौवनं युवतीनामपि विलोभनमस्ति । यावदहं त्वदर्थं तां चारुलोचनां हर्तुमिच्छामि । तावन्मया रामानुजादयं पराभवः प्राप्त इति निगद्य शूर्पणखा विरराम । एतदाकर्ण्य शूर्पणखावाक्यं दशाननो दशाभिर्भ्रूभंगैर्दशापि दिशः कम्पलोलाः कुर्वन् प्रोवाच । भागिनि ! कोऽयं रामः ? किं रूपः, किम्पराक्रमश्चाऽस्ति ? तच्छ्रुत्वा सा तस्मै सर्वं रामवृत्तान्तं निवेदयामास । ततः स कोपं कृत्वा सर्वान् सचिवान् विसृज्य च सहसा रथशालां जगाम । सोऽथ खरयुक्तं रथं समारुह्य क्षणादाकाशं व्यगाहत । यद्यपि स क्रोधातुरो बभूव तथापि मनसा सीतामेव चिन्तयामास । उक्तं च मदनो मृत्युस्थानेऽपि मूर्खाणां पदं करोति । ततः स तमालतालहिंतालश्यामले जलधितटे रथादवतीर्य सुचन्द्रं नाम न्यग्रोधं ददर्श । सोऽथ तं दिव्यतरुमारुह्य नानातरुविभूषितं विविधमुनिजनसेवितं च तपोवनं विलोकयामास । ततः सोऽवतीर्य तत्र गत्वा च पुराणसचिवं मारीचं नाम राक्षसं प्राप । अथ तेन पूजितो दशाननो विनयात्तमुवाच । सखे ! त्वमेव सदास्माकं श्रीरक्षापरिवाचलोऽभूः । अस्मिंस्त्रिभुवनविजयोत्सवे पूर्वं तु त्वद्बुद्धिविभवः पश्चाच्च मम पराक्रमोऽभवत् । प्रियवर ! यत्र तव मायागंभीरं मंत्रं मम खड्गव्यग्रभुजोऽनुसरति । तत्राऽसाध्यं किमपि नास्ति । योऽद्य मम पराभवो जातस्तस्य कथां शृणु । पुराऽस्मिन् जनस्थाने मया ये महाशूरा भ्रातरो धृतास्तेऽद्य खरादयो मानुषेण पदातिना निहताः । केनचिद्रामाख्यराजपुत्रेण रक्षसां चतुर्दशसहस्राणि हतानि । मम भगिनीचाऽपि विरूपिता श्रूयते तस्य सितस्मिता सीतानाम दयिताऽस्ति । यस्या मुखाऽग्रे पूर्णचन्द्रोऽपि महिमानं न लभते । तया विरहितः स क्रियाहीनद्विज इव लुप्तशक्तिर्भूत्वा मम सुखच्छेद्यो भविष्यति । निशम्यैतद्रावणवचनं शुष्कास्यो मारीचस्तमुवाच । बत लंकेश ! कोऽयं ते मतिविप्लवो जातः । नूनमनेन कुसाहसेन त्वं कुलविभवयोरन्तं प्राप्स्यसीति मन्ये । धूर्ताः सदैव प्रियमेव वदंति । मूर्खा नित्यं प्रियमेव शृण्वंति । किन्तु साधवोऽप्रियं नहि वदंति न च शृण्वंति । धूर्तवाणी यथा मधुरा तथा न शशी न शशिमुखी न मदिरा न च वल्लर्क्यपि

विद्यते । विधौ विनाशाय समुद्यते सति जनस्य मतिर्हितोपदेशविमुखा भवति । प्रायेण राज्ञां दुर्णयोऽयं महतो राज्यवृक्षस्य मालघाती परशुरस्ति । वेश्या, चित्रद्युतिः, मालाराजलक्ष्मीश्चैतादूरमनोहराः संति । क्षिप्रभोगेन निस्सारा भूत्वा म्लायंति । दुःसहोऽयं मोहविभ्रमस्ते केनोपदिष्टः । येन शीघ्रमेव त्वं संपत्क्षयमवाप्स्यसि । अहोवत चारहीनः प्रमादी च त्वं महावीरस्य रामस्य त्रैलोक्यविश्रुतं यशो न जानीषे । अतएव एवं भाषसे । स विश्वामित्रमखत्राणे मयि शरं प्राहिणोत् । यत्पक्षपवनैः क्षिप्तोऽहं क्षणाज्जलधिपारमयासिषम् । कथं नु तस्य दयितां सीतां पावकशिखामिव मोहादादातुमिच्छसि ? स महाभागः पितृशासनं चूडामणिमिव शिरसा समादाय घोरराक्षसान् क्षपयन्वने विचरति । मया दुरंतमृत्युचरणे मैथिलीहरणे नवातंकहर्त्तां लंका विधवामिव मा कृथाः । ये मर्यादामतिक्रम्य हितैषिणां वचो न शृण्वंति तेषां मृत्युमुखप्रविष्टानां पुनः श्रिया संगमो न भवति । अहमेकदा मुनिमांस लुब्धो दण्डकारण्ये विचरन् राक्षसाभ्यां सह राघवाश्रमं प्राप्तवान् । मुनिरक्षाकृतक्षणः स सानुगं मां समालोक्य धनुराकृष्य च यां सायकत्रयीं प्राहिणोत् । तया तौ तु रात्रिंचरौ हतौ । जवादहं मुक्तिमवाप्य गृहमगाम् । सत्यमेतत् । यदायुःशेषे कृतान्तोऽपि नूनं वयस्यतां याति । ततः प्रभृत्यहं शस्त्रं त्यक्त्वा त्रासात् तापसतामगच्छम् । अन्यथा रक्षसां तु वैराग्यं कुतः ? किम्बहुना । तपोवनेऽस्मिन् वृक्षानपि स शिलीमुखान् राघवान् पश्यामि । दिवि दिक्षु पृथिव्यां स्वप्ने सजने विजनेऽपि भयाद्रामसहस्राणि विलोक्य चकितो भवामि । राक्षसराज ! राजा, रात्रिः, रामा, राज्यं, रत्नमित्यादयो रामनामाद्यवर्णा अपि मे त्रासं संजनयंति । यदि ते राजलक्ष्मीरत्याज्या जीवितं च यदि वल्लभं तदा तु मद्वचनं प्रमाणीकृत्य रामवैरेच्छां मुंच । निशम्यैतन्मारीचवचनं लङ्केशोऽब्रवीत् । अहो नीतिज्ञस्त्वं वीरव्रतं धृत्वाऽप्येवमसदृशं भाषसे ? कालजीर्णं सर्वं विपर्य्ययमेतीति मयाऽद्य सत्यमनुभूतम् । प्रतिपक्षपदे मनुजस्तत्राऽपि पूर्वापरचिन्तनमेतदस्माभिः सीतालोभेन श्रुतम् ? वृद्ध ! पुनर्न कदाऽप्येवंविधं वचस्त्वया वक्तव्यम् । भक्तियोगान्ममाऽप्सितं त्वया कर्त्तव्यमेव । यदि रामबाणाद्भयमीक्षसे ? तदा ममाऽपि प्रियमकृत्वा ते जीविताशा कुत इति दशकंठवचः श्रुत्वा निश्वसन् मारीचो दैवाज्ञामकुंठितां च मत्वा प्रोवाच । अहोवत ! दुरन्तोऽयं तव दुराग्रहः । यः सर्वैश्वर्यसुखादिभिः सह शमं यास्यतीति व्यक्तम् । उक्तं च । प्रायेण प्रत्यासन्ननाशानां हितविद्वेषिणां च रोगिणामिव कुपथ्य एवाधिका रुचिर्भवति ।

घताऽद्य सुचिरात्ते शत्रूणां मनोरथः फलितः । यत् स्वयं महैश्वर्यशृंगाग्रात् पतितोऽसि । रामः साक्षाद्रामः शत्रुसंपदां च विरामोऽस्ति । तस्य विप्रियं कृत्वा कोऽत्र जीवितुमर्हति । एवं ज्ञात्वाऽपि प्राणपणेन तवाऽभिमतं करोमीत्युवाच । लंकेश ! इतो रघुपतिबाण इतश्च कालचोदितस्त्वम् । उभयतो वद्धस्य मे त्वदर्थं रामाद्वधो वर इति निश्चित्य स करोमीति प्रतिजज्ञे । ततो राक्षसेश्वरो मारीचं रथमारोप्य निजव्यसनमिव विस्तीर्णं वनं विवेश । ततः पुंनागवकुलाशोककर्णिकारशोभितं, निषण्णनिर्भयमृगाकीर्णं, फेनपटलीदुकूलधवलापगम्, दण्डकारण्यं च विलोक्य क्षपाचरपतिर्मारीचं प्रोवाच । सखेऽयं स रुचिरो रामाश्रमः । यत्र सा मन्मथमही मैथिली निवसति । निशम्यैतद्रावणवचनं मायासागरो मारीचः सपदि रत्नहरिणो भूत्वाऽऽश्रमसन्निधौ विचरितुमारेभे । अत्रान्तरे कुसुमावचयार्थं समायाता जनकात्मजा तं विलोक्य संसारवैचित्र्यकृतो विधातुर्नैपुण्यं पुनः पुनः प्राशंसत् । अथाश्चर्यचकिता सीता राममभ्येत्य प्रोवाच । आर्यपुत्र ! विचित्रोऽयं हेमहरिणो मे नयनानंदं जनयति । अस्य चित्रचर्मणा कान्तमासनं परिकल्प्य त्वत्सनाथाया ममेप्सितं शयनं समुचितमिति सीतावचनं श्रुत्वा हेममयं मृगं ददर्श । सोऽथ लक्ष्मणमाहूय प्रोवाच । सौमित्रे ! पश्य । एष चित्रांगः सारंगस्त्वचिलुब्धाया जानक्याः कौतुकोत्सवं करोति । एषोऽहं कार्मुकमाकृष्याऽस्य पदवीमनुसरामि । भवताऽप्रमत्तेनैषा जनकनंदिनी संरक्ष्येति समादिश्य चापमाकृष्य च रघुवीरः प्रतस्थे । हेमहरिणः क्व दृष्टः ? तस्य चर्मणि च का स्पृहा ? प्रायेण कर्मणा महतामपि मोहश्चादीयते । स मृगो मेघपुंजावृते गगने शशीव क्वचित् प्रकटविग्रहः क्वचिच्च क्षिप्रमन्तर्हितोऽभवत् । ततो रामश्चित्रमायाप्रसंगेन संसारेण सक्तधीरिव मायाविना तेन समाकृष्टः सुदूरमगमत् । अथावसरज्ञो राघवो तस्मै ब्रह्मनिर्मितं सायकं मुमोच । येन निर्भिन्नहृदयो मृगः सहसा क्षणदाचरो बभूव । ततः शरार्दितः स तालमात्रं समुत्प्लुत्य करालवदनाद्रुधिरमुद्वमन् धरातले निपपात । तस्मिन्नवसरे स मायां समालंब्य रामसदृशस्वरेण हा लक्ष्मण ! हतोऽस्मि । हा लक्ष्मण ! हतोऽस्मि । त्रायस्वेति चुक्रोश । भ्रातुराक्रन्दनं श्रुत्वा नूनं लक्ष्मणः समुपेष्यति । अत्रान्तरे रावणस्तत्र गत्वा सीतामेकाकिनीं समवाप्स्यतीति मनसा ध्यायन् मारीचः स्वप्रभुकार्ये प्राणांस्तत्याज । एवं रामस्तं हत्वा यावत् तत्पार्श्वमुपगच्छति । तावत्तं निशाचरं समवलोक्य मुहुर्मुहुरनिष्टमचिन्तयत् । उक्तं च । प्रायः पुंसो मनः पूर्वमेव शुभाशुभं कथयति । एतस्मिन्नेवावसरे मैथिली पत्युरार्तस्वरं श्रुत्वा रामसहायार्थं लक्ष्मणं प्रोवाच ।

सौमित्रे ! तूर्णं गच्छ । नूनं तव भ्राता कस्याचिन्मायाविनो मायाजाले निपतितः । स ते भ्रातैव नास्ति । किन्तु गुरुःसखा चाऽपि विद्यते । अस्मिन्नरण्येऽसहायोऽरिपराभवं नार्हतीति । जानकीवाक्यं श्रुत्वा धैर्यसागरो लक्ष्मणः प्रत्यभाषत । देवि ! मिथ्यैवार्यपराक्रमे शंकां मा कृथाः । रणेषु तस्याभिमुखो न जातो न वा जनिष्यते । ललनासुलभं वैक्लव्यं समालम्ब्य मामन्यत्र मा प्रेषय। किन्त्वं भर्तुः पराक्रमं न जानीषे ? त्रायस्वेति दीनं वचः कथं तस्य मुखे प्रस्फुरेत् ? कृष्णस.रानुसारिणाऽऽर्येण तव रक्षायै धृतोऽहं कथमन्यत्रव्रजामि । यतो राक्षसा हि बहुच्छला भवंतीति लक्ष्मणेनाऽभिहिते जनकात्मजा कोपं कृत्वोवाच लक्ष्मण ! संग्रामे महावीरस्याऽपि जयाजयौ न निश्चितौ । पुरा वज्रधरोऽपि देवराजः किं वृत्रेण न निगीर्णः ? हा भ्रातुराक्रन्दनं श्रुत्वाऽपि भवान् निःस्संभ्रमः ? नूनं पुंसामेकार्थभागिनो भ्रातरः शत्रवो भवंतीति सत्यम् । स्वजनाद्भयमुपजायत इति तत्वज्ञानामनुभवोऽप्यक्षरशः सत्यः । क्षयक्षणेष्वेव निजपरयोः परीक्षा भवति । किमधिकेन । यत् प्रियोऽपि भ्राता भ्रातुर्विनिपातं प्रतीक्षते ? ते काऽपि पापादनुचिता मतिः स्फुरतीति व्यक्तम् । येन मां भर्तृजीवितामपि जानन् बिमुह्यसि । निशम्यैतत् सीतावचनं लक्ष्मणो वज्रताडित इव भीतो बभूव । सोऽथ करौ संयोज्य प्रोवाच । मातः ! त्वं तु मम परमदैवतमसि । अत एवंविधं वाक्यं वक्तुन्नार्हसि । एता दृढग्रहा अप्यबलाः, पेशला अपि कुटिलाशयाः किंबहुना । मित्रभ्रातृविभेदिन्यः स्त्रियः सर्वथैव कुटिलाः । जनापवादान्ता गुणाः, कुपुत्रान्तं कुलं, कुवाक्यान्तं सौहृदं, दुर्णयान्तं च राज्यं भवति । मातः ! त्वयाऽस्मिन्दुरुक्ते वनेचरा हि साक्षिणः । अहमिदानीं राघवं द्रष्टुं यामि । एता वनदेवता एव त्वां रक्षन्त्वित्युक्त्वा लक्ष्मणः खिन्नमनसा क्ष्मां विलोकयन् रामपदवीं जगाम । अत्रान्तरे दशग्रीवे काननं प्रविष्टे वृक्षाश्चकंपिरे मारुतो न ववौ तरंगिण्यश्च मूकसारसनूपुरा भीत्या शनैः शनैर्ययुः । ततो दशकन्धरो विपुलं विग्रहं पिधाय स्नायुशेषतनुर्वृद्धाभिक्षुको बभूव । सोऽथ दण्डकमण्डलुछत्राङ्कोयोगीव ध्यानलोलाश्च सीतामन्तर्विचिन्तयन्नासत् । ततः स नलिनाननां फुल्लपलाशाक्षीं पीतकौशीयकांशुकां च तां संवीक्ष्य वशीकृतजगत्त्रयोऽप्यनंगवशं जगाम । सोऽथ सकम्पविकलाक्षरां गद्गदां गिरं समाश्रित्य पप्रच्छ । सुभ्रु । लावण्यनलिनी मलिनीकृतचंद्रिका च त्वं का ? क्षयक्षीणस्य शशिनः किंवा दग्धस्य मनोभुवश्च काचित्संजीवनौषधिस्त्वं धात्रा विनिर्मिताऽसि ? नेदमप्सरसां स्वरूपं, गन्धर्वीणां तु कथैव वृथा । विद्याधरस्त्रीचर्चाऽपि दूरे तिष्ठतु । त्वं का ? कस्य चाऽसि ? कुत-

आऽत्राऽऽयाता ? अस्मिन् घोरव्यालरक्षः पक्षिगणे वने दिवः सुता शशिकलेव कथमेकैव वससि ? निशम्यैतद् वृद्धयतिवचनं जानकी निर्व्याजमुनिगौरवात् तस्याऽऽतिथ्यं विधाय स्वकुलं रामवृत्तान्तं चाऽपि श्रावयामास । ततः सा प्रोवाच यतिराज ! क्षणं प्रतीक्षस्व । मद्भर्ताऽपि ते पूजां विधास्यतीत्यभिधाय सीता विरराम । एवं जानकीवचनं समाकर्ण्य प्रसह्य हरणोत्सुको राक्षसेश्वरः प्रोवाच । सोऽहं विश्वविजेता, सर्वसम्पदां वसतिः सुरेश्वरस्याऽपि द्रावणो, लोकरावणो रावणो नाम निशाचराधिपतिरस्मि । श्रीमती रत्नांशुकवती लंका च मम राजधानी वर्तते । मया वैश्रवणात् सकलैश्वर्यसम्पन्नं पुष्पकविमानं नीतम् । सुंदरि ! सुरस्त्रैणं तृणं मन्ये । विद्याधरीष्वपि मे रुचिर्नास्ति । किन्तु त्वां वीक्ष्याऽन्यस्त्रीक्षपितं वयः पुनः पुनरनुशोचामि । वरवर्णिनि ! त्वद्विहीनानां सुखं धिक् । त्वया विना विभूतिर्निरर्थका । यस्य त्वं नावलंबनं स कामोऽप्यकाम एव । हरिणाक्षि ! मया सह लंकोपवनभूमिषु तव विहारो भवत्विति वांछामि । कृपां कृत्वा पूरय मे मनोरथम् । किम्बहुना । देवगन्धर्वकिन्नरा अपि यत्प्रसादं सदा प्रतीक्षंते । सोऽयं जनः स्वदारेषु निरादरो भूत्वा त्वामभ्यर्थयते । निशम्यैतद् वज्रपातोपमं वचः कोपाकुला जानकी जगाद । अहोवत ! त्वमतिविषमं विषं पातुं वांछसि । यस्यामोदेन सहसा सानुगो न चिरं स्थास्यसि । अरे ! मे पतिर्विश्वरक्षामणिः श्रेष्ठधनुर्धरश्चास्ति । यस्याग्रे सगरभगीरथादीनामपि तेजांसि तपांसि च न प्रकाशन्ते । अहमस्मि सहचारिणी प्रतापधाम्नः श्रीरघुकुलपुंगवस्य रामचन्द्रस्य । जम्बुकोपमस्त्वं जृंभमाणस्य गजारातेर्जिह्वामिव मां कथं स्प्रष्टुमिच्छसि । यथा गर्दभो गजं, शशकः शार्दूलं, वायसश्च सुपर्णं जेतुं न शक्नोति तथा त्वमपि रामम् जेतुं सर्वथैवाऽसमर्थोऽसि । तेऽयं मोहः किंवा कुकृतस्य विपाके यत् स्वयमेव त्वं कुलमात्मानं प्रभुत्वं चाऽपि हन्तुमिच्छसि ? एवं सीतावचनमाकर्ण्य कुपितोऽपि राक्षसेश्वरः कंदर्पकारुण्यान् मधुराक्षरं जगाद । शुचिस्मिते ! नार्हसि मामेवं प्रत्याख्यातुम् । यतो यस्याज्ञां महेन्द्राद्या लोकपाला अपि नाऽवमन्यंते । मद्भयान्नोष्णांशुस्तापयति । मारुताश्चापि विनीतास्सेवका इव नोद्धतं परिसर्पन्ति । मत्परिग्रहात् त्रैलोक्यलक्ष्मीरियं ते सपत्नी भवतु । तथा मम सर्वसम्पदस्त्वत्संगमसुधासिक्ता भवंतु । अल्पायुषा मनुष्येण च रामेण किम् ? यथा भुजंगी कंचुकं त्यजति तथा तं त्यक्त्वा सुखभागिनी भव । एतदाकर्ण्य कोपताम्राक्षी जनकात्मजा जगाद । नूनं सर्वे वराका राक्षसा विनष्टाः । येषां परोक्षे त्वद्दोषात् सर्वनाशोऽयं समुपस्थितः । लोके नृपदुराचारप्रथां धिक् । यया सुप्ता अपि सेवका

दृष्टैव क्षयमायान्ति। अरे ! परदारेच्छां त्यज । मुधा प्रलयं मा गमः। किन्त्वं रामदर्शन-पर्यन्तं स्वजीवितं न शोचसि ? श्रीरामचापच्युतसायकैः खगादिषु निरुद्धासु मातुरुदरेऽपि ते स्थानं न भविष्यतीति रामपत्न्या परुषं प्रोक्तो राक्षसेश्वरः पाणिना पाणिं निष्पिष्य घोरं स्वकीयं वपुः समाददे । ततो दशास्यो विंशतिभुजो रावणो रुषाऽब्रवीत् । मूढे ! हितमपि न जानीषे । मया यदभिहितं तत् सत्यमेव । स्त्रियः प्रायोऽसत्यप्रणयाः सत्यशंकिन्यश्च भवंति । अहं भ्रूक्षेपमात्रेण स्वर्गं पातालं पातालं च स्वर्गं करोमि । नद्यो निम्नगाः श्रियः कदर्यगा, बुद्धयो धूर्तगा नार्यश्च नीचानुगा एव भवंति । प्रायोऽबलानां बालानां च प्रीतिर्नित्याभ्यासेन निर्गुणविल्लाधमेष्वेव जायते । हृदि लालिता योषितः सान्त्विता अपि प्रियं न ब्रुवते । प्रणयं च नाभिमन्यंते किन्तु दर्पात् परिभवन्त्येव । एषोऽहं स्वयं प्रसह्य क्षुद्रानुरागिणीन्त्वां हरामीत्युक्त्वा उर्वोः केशेषु चाकृष्य करेण कदलीमिव तां क्रोधान्धो राक्षसाधिपो जग्राह । एवमंजनशैलाभं बलाज्जानकीं हरंतं तं दृष्ट्वा सर्वा वनदेवता अपि सत्रासं दुद्रुवुः । ततः स वैदेहीं समादाय खरयुक्तरथेन भयोद्भ्रान्तां स्वर्णदीं दर्शयन्निव गगनं विवेश । तस्मिन्नवसरे भयमीलितलोचना सा किमेतदिति नाऽज्ञासीत् । ततः सा कृच्छ्रेण संज्ञामासाद्य करुणं विललाप । हा लक्ष्मण ! विमूढाऽहं ते भ्रातृपत्नी त्वद्वाक्यविमुखी भूता रक्षसाऽपहृता । हा नाथ ! बलीयसा राक्षसेन ह्रियमाणां मां कथमुपेक्षसे ? हेहे कर्णिकारचूतपल्लवकेसराः ! वः स्वस्त्यस्तु । रामरहिता रामाऽहं बलात् क्षपाचरेण गृहीता । गोदावरि ! त्वां प्रणमामि । पर्वताः ! युष्मान् वंदे । तव वल्लभा रावणेन हृतेति सर्वे रामाय शंसत । सत्त्वेभ्यो मुनिभ्यश्च नमस्कारोऽस्तु । वः कीर्तिस्त्रस्तजनत्राणपवित्रकथां प्रयातु । श्रुत्वाऽप्येतज्जानकीवाक्यं सत्रासा देवा अपि किंचिन्नोचिरे । तस्मिन्रावणोदग्रदहने स्वयं पतितुं क ईश्वरः ? एवं तस्याः क्रंदितं समाकर्ण्य गृध्रराजो जटायुः पादपस्थोऽपि दूराद्रावणं जगाद । रावण ! समुन्नतं पौलस्त्यकुलं जनापवादकलिले कथं पातयसि । लोभः, परस्त्रीरुचिः, नृशंसत्वं, सत्यत्यागश्चैते पुरुषाणां शुद्धजन्मपटे कर्दमबिन्दवः संति । यदि भूपालः परदारान् परामृशेत्तदा नाऽयं धर्मः । किन्तु लज्जैषा । यत्र त्रातार एव हन्तारो भवेयुस्तत्र रक्षितारः के ? पौलस्त्य ! शुद्धयशसः कौसलेन्द्रस्य पत्नीं हरतस्तव वक्त्राणि परस्परं किं न लज्जन्ते ? मामरुणपुत्रं गृध्रराजं जटायुमवेहि । मयि जीवति त्वयैषा जानकी हर्तुं न शक्या । अहो नु मदनांधेन रामप्रियां हरता च त्वया हारधिया कालव्यालः कंठे कृतः ? दूरदर्शिनः साधवः परिणामार्हं भुंजते शक्यमेव

कुर्वते फलोचितं च जल्पंति । पापमलिनं, जीवितान्तकरं, संपदुन्मूलनक्षमं च कर्म मा कृथाः । ममायुषः षष्टिर्वर्षसहस्राणि प्रयातानि किन्तु मयाऽद्यैव परस्त्रीहरणं श्रुतं चावलोकितम् । अरे ! पञ्चमति मम वचोऽवधीर्य कथं धावसि । नभश्चरा इमे मया भग्नं त्वामधुनैव पश्यन्तु । निशम्यैवं गृध्रपतिवचनं कोपाकुलो रावणोऽब्रवीत् । खेचर ! नूनं कालेन चिरादन्विष्य लब्धोऽसि । यत् निर्भयो भूत्वा ममाऽप्यग्रे प्रतिभान्वितं वाक्यं भाषसे । अरे ! वृद्धोऽपि त्वं लोकविश्रुतम्मां न जानासि ? अथवा खिन्नस्त्वं जीर्णशरीरं संत्यक्तुमिच्छसीत्युक्त्वा राक्षसः कर्णिनालिनाराचैः पक्षिप्रवरं क्षिप्रमपूरयत् । एतदालोक्य कोपाकुलः पक्षी पक्षाभ्यां राक्षसराजस्य सशरं धनुश्छित्वा तस्य मनोरथमिवायतं सछत्रं रथमपि जघान । ततो विहंगमश्छिन्नायुधं हतरथं च तमुवाच । मंदबुद्धे ! अधुनापि रामपत्नीं परित्यज्य सह श्रिया प्राणान् रक्ष । एष निष्कलंको यशःशशी तेषामेव विभाति । येषां विभूषणं शीलं दया प्रियतमा धर्मश्च बन्धुरस्ति । साधूनां जीवितं यद्यशोऽस्ति । तत्कृतान्तस्याऽनायत्तम् ।

उक्तं च—

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्याद्धि गच्छति ॥
शरीरस्य गुणानां च दृश्यते महदन्तरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥

शीलत्यागो देहिनां सश्वासमेव मरणं न चिरं कथितम् । पौलस्त्य ! त्यक्तसद्वृत्तस्त्वं जीविष्यसि । यतः प्रत्यासन्नमरणानामेव मलिनामतिरुपजायत इत्युक्त्वा वज्रनखः खगोऽस्य पृष्ठे निपपात । येन स क्षितिकम्पेऽचल इव चिरं चकम्पे । ततस्तं शिरोरुहैः समाकृष्य प्रपीडयामास । एतदालोक्य दशाननो वामांकेन वैदेहीमवष्टभ्य तलाघातेन मुष्टिभ्यां पदाभ्यां च तन्निजघान । ततो रावणकराघातैरप्यकंपितविग्रहो खगस्तं संभ्रमादद्भुतरूपां विधेयं विदधे । अथ दशकन्धरः कोपं कृत्वा सीतां विसृज्य च महासिनाऽस्य तुंडाग्रपक्षचरणांश्चिच्छेद । एवमालोक्य वैदेही कृपाणकृत्तसर्वांगं भुवि निपतितं च तं परिष्वज्य पुनः पुनरशोचत् । एवं सीतार्थं शरीरं त्यक्त्वा गृध्रपतिरक्षयां कीर्तिं लेभे । ततः क्षपाचरः कराभ्यान्तस्या भुजंगकुटिलं केशपाशं गृहीत्वा तां रथे समारोप्य च व्योम्ना जगाम । अत्रान्तरे चतुर्मुखप्रमुखाः सुरा रावणेन बलाद्रामदयितां हृतां श्रुत्वा देवकार्यसिद्धमित्यमन्यन्त । ततो

मैथिलीचरणान्मुखरो मणिनूपुरो राक्षसत्रासभुक्ताक्रंद इव क्षितौ निपपात । तदाऽस्या यानि हारमुक्ताफलानि पतितानि तानि दिवः प्रक्षीणपुण्यानि नक्षत्राणीव भूतले चकाशिरे । तस्मिन्नवसरे समुद्भ्रान्तभृंगभ्रूभंगा वृक्षाः पक्षिरुतैरिव न भेतव्यमिति प्राहुः । अथावसरज्ञा सीता गिरिशृंगे साधुरूपान् प्लवंगमान् दृष्ट्वोपलब्धये भूषणानि तत्याज । ततो दशाननः सागरं समुल्लंघ्य स्वराजधानीं लंकां विवेश । अथ दर्पमोहितः स हेमहर्म्यां पुरीं प्रदर्श्य तस्या रक्षायै राक्षसीर्विधाय सतीमपि तां स्ववशवर्तिनीं मेने । ततः सोऽब्रवीत् । शशिमुखि ! इयं मणिमयी लंका यस्याधीनाऽस्ति । इदं पुष्पकविमानं च यस्य वशवर्ति । सोऽहं त्वदालोकनजीवितोऽस्मि । सुभगे ! मया सहाऽस्मिन् कल्पलतोद्याने रमस्व । पीनस्तनोद्गमिदं यौवनं न चिरं तिष्ठति । संप्रति रामगतामाशां त्यज । नेयं पुरी परैः प्राप्या । यत्र संकल्पा अपि पंगवो भवंति तत्र वराकाणां मरुतां गतिः का ? सितस्मिते । लोकलोचनानंदबान्धवस्तेऽयं वदनेन्दुर्विषादजलदो न शोभते । सुमुखि ! प्रसीद । मयैतास्त्वत्पादनखकान्तयः प्रणतौ मौलिमालावतंसतान्नीताः । सुश्रोणि ! अशिक्षितनमस्काराणां, मानोन्नतिभृतां च मम शिरसां प्रथमोऽयं विनयक्रमोऽस्तीति दशकण्ठस्य दुःसहं वचः श्रुत्वा निर्भया वैदेही तृणं मध्ये धृत्वोवाच । दुर्वृत्त ! काकुत्स्थोऽचिरात् तवैतेषां दर्पदुर्णयविभवानामवश्यं क्षयदीक्षां विधास्यति उक्तं च ।

नाऽधर्मश्चारितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृंतति ॥

मूढ ! वध्यभूमिं गतस्य चौरस्येव तेऽयं प्रलापः । क्षिप्रं सुहृद्भिःसह विहर । कुपितं च तूर्णं प्रसादय । यतो रामभ्रूभंगदष्टानां शत्रूणां लोके जीवनं कठिनम् । मंदमते ! मण्डलीकृतचापस्य रामदिवाकरस्य शरांशुभिस्तमसामिव रक्षसां क्षयोऽवश्यं भविष्यति । संप्रति तपःक्लेशार्जितां राक्षसदुर्लभां लक्ष्मीं रक्ष । यतो दुर्णयश्चित्रं धूम इव विभवं विनाशयति । जगति दुराचारः श्रीलतामूलपरशुर्यशःशशिनो वारिदो विभवजलधेर्वौर्वः कस्य क्षेमाय भवति ? नक्तंचर ! कोपमवाप्य मां क्षिप्रं भक्षय । किन्तु श्वपाकेन यज्ञभूरिव त्वयाऽहं सर्वथा न प्राप्या । निशम्यैतत्सीतावचनं दशाननः प्रत्युवाच । वैदेहि ! अद्याऽपि रावणस्तव परुषं वचः सहते । यदि संवत्सरेण मे वश्यतां न समेष्यसि । तदा मम सूदा महानसे त्वां दारयिष्यन्तीत्युक्त्वाऽशोकवनिकान्तरे व्याघ्रीणां मध्ये हरिणीव राक्षसीनां हस्ते तां चिक्षेप । ततो घोराभी राक्षसीभिस्तर्ज्यमाना सा देवी दुस्तरे व्यसनार्णवे निमग्नेव बभूव । अत्रान्तरे ब्रह्मवाक्यात् स्वयं देवराजो निद्रया

मोहं विधाय गुप्तरीत्या तामभ्युपेत्य च प्रोवाच। पुत्रि! त्वं शुचिचारित्रभूषणाऽसि अतः।

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं स्मर दुःखं गमिष्यति ॥

ततो रामेण सार्धं तवाऽचिरात्संगमो भविष्यतीति तां समाश्वासयामास । ततस्तृष्णा-क्षुत्क्षमापहं दिव्यहव्यं तस्मै दत्त्वा च तूर्णं तिरोदधे । अथ रामोऽपि स्वर्णमृगा-कारं क्षपाचरं हत्वा समुत्कण्ठया सीतां द्रष्टुं महसा न्यवर्तत । सोऽथ मार्गे गोमायुप-क्षिणां विपरीतस्वनं श्रुत्वा वधूवृत्तमज्ञात्वाऽपि हा सीतेति मुहुर्मुहुरशोचत् । ततो दूरात् समायातं लक्ष्मणं विलोक्य राक्षसैर्भक्षितां सीतां निस्संशयं मेने । अथ पार्श्वमुपगतं भ्रातरं पप्रच्छ । सौमित्रे! विजने वनेऽस्मिन् वैदेहीं त्यक्त्वा कथमायातोऽसि । नूनं त्वया मम जीवितं हृतमिति ब्रुवाणः शंकादिष्टेन वर्त्मना समुपसृत्याशु सीतारहितमाश्रमं ददर्श । ततः स श्वभ्रपतित इव भूत्वा न किंचिद् बुबुधे । सोऽथ शनकैः संज्ञामवाप्य लक्ष्मणं च सबाष्पं समालोक्य प्रोवाच । त्वया कथमेकाकिनी प्रिया मम त्यक्ता ? नूनं तस्याः कुसु-मकोमलं वपुः क्रूरकर्मभीराक्षसैर्भक्षितम् । ते प्रमादितां पुनः पुनर्धिक् । निशम्यैतद्रामव-चनं दुःखवैलक्ष्यदैन्यानां वशमागतो लक्ष्मणः प्रोवाच । प्रभो ! सा मायामृगस्य त्वत्तु-ल्यस्वरमाक्रंदं श्रुत्वा दैवमोहिताऽभूत् । साऽथ शंकितमतिः सत्वरं रामसाहाय्यार्थं व्रजेति समादिदेश । अथार्यविक्रमज्ञेन मयाऽसकृद्वारिताऽपि सा परुषमेवोवाच । येन मामपि तमः समाविशत् । अथ तद्वाक्यशरदारिते त्वत्पदवीं च याते मयि भवन्तम-न्वेष्टुं स्वयं सापि गतेति मन्ये । तच्छ्रुत्वा शोकविषाकुलो रामश्चक्रारूढ इव क्षणमाकाशं क्षणं दिशश्चैक्षत । ततो रामः सम्यगाश्रमं विलोक्य परितो महीरुहांश्च समीक्ष्य क्वापि सीतामदृष्ट्वाऽश्रुगद्गदो विललाप । अयि प्रिये ! त्वया कदा नामेदृशो मन्युर्मयि गृहीतो येन लताजालैस्तिरोहिताऽसि । अयं ते नर्मसचिवः शुकस्त्वद्विरहान् मूढसभां श्रितो विद्वानिव विकलास्तिष्ठति । इमं त्वत्केलिनर्तकं शिखण्डिनं तु पश्य । यस्त्वां विना सहसैव स्तिमि-ततां यातः । अयं ते विलासगतिशिष्यो राजहंसस्त्वामनालोक्य दिवसधूसरशशीव न राजते । इमं संत्यक्तशष्पकवलं क्रीडाकुरंगकं तु समाश्वासय । यः साश्रुर्ग्रीवावलन-विभ्रमैस्त्वामीक्षते । कठिने ! कोऽयं ते मयि कठोरो मानग्रहाग्रहो येन नाद्याऽपि मौनं न मुंचसि ? अयि सरले ! प्रसीद । कर्णसुधां गिरञ्च किरेति शोकानलाक्रान्ते तार-प्रलापिनि च रामे प्रतिशब्दैर्गिरिगुहा अपि चक्रुशुः । एवं स वल्लीनिकुंजगहने वने प्रियां विचिन्वन्नितस्ततो वभ्राम । हा प्रिये ! कुत्र गताऽसि ? त्वया सह नः संगमः

क्व कदा च भविता ? त्वां विनैते मम सरलाः प्राणाः क्वाऽपि गंतुमुद्यताः संति। हा विलासवल्लोनिर्लूना विभ्रमपादपोऽपि हतः। हरिणीक्षणां हरता धात्रा मम किन्नाम न हृतम्। यस्या विलोकने नेत्रस्पन्दनमपि विघ्नोऽभवत्। सा मनोरथपथं गता कान्ता कथं सह्यते ? एवं विलप्य धृतिसागरोऽपि रामस्सहसा मुमोह। सत्यमुक्तं मुनिभिर्यद् वियोगसारे संसारे स्नेह एव विपाशनमस्ति। ततः स शनकैः संज्ञामवाप्य दयितां पुरो नापश्यन् दिवाऽपि निखिलं लोकं निरालोकं मेने। सोऽथ परिम्लानमुखद्युतिः सौमित्रिं प्रोवाच। भ्रातः ! सा मे प्रिया क्व गता ? तया हीनं माम्मणिरहितं भाण्डमवेहि। ततः क्वाऽपि स्रस्तं विभूषणं दृष्ट्वा लक्ष्मणं प्रोवाच। नूनमत्र सीताहेतोर्युद्धमभूत्। इहैव राक्षसाभ्यां मृगेक्षणा भक्षितेति निश्चिनोमि। अत्र स्रस्तं छत्रं पश्य। इदं भग्नं धनुरालोकय। तत्र विशीर्णं कवचमीक्षस्व। लक्ष्मण ! कदाचिज्जीविता जानकी जलजाहरणार्थं गता जाह्नवीपुलिने मिलेत्। शीघ्रं गत्वा जानीहीति तारप्रलापस्य तस्य शासनाल्लक्ष्मणो मंदाकिनीकूले भ्रान्त्वा न सा दृष्टेति प्रत्यागत्य तमुवाच। अत्रान्तरे रावणेन हृतां सीतामस्मै शंसेति खेचरैः प्रेरिताऽपि सुरापगा पौलस्त्यभयान्न किमप्यूचे। ततो राघवो महीतले महतीं पादमुद्रां दृष्ट्वोवाच। वत्स ! वृथैव मया गिरिगुहा दृष्टा। मुधैव त्वया च कल्लोलिनी विलोकिता। मन्ये कोऽपि राक्षसः सीतामादाय खमितो गतः। यद् द्वितीयं पदमत्र नास्ति। यमश्चेत्तमपि हतं विद्धि। रक्षसां वधे तु श्लाघा का ? किम्मे विशिखाः कालस्याऽपि कालतां न प्रयान्तीति ब्रुवाणं धैर्यसिन्धुर्लक्ष्मणः प्रोवाच। तात ! तुल्यजन्मन्यस्मिञ्जगति सतामिदमेव वैलक्षण्यं यदेषां धीर्दुःखेऽपि मोहतमसा न स्पृश्यते। सज्जनानां कृच्छ्रेष्वद्रव्यं भेषजं पाण्डित्यमेव। तत् सुखे विहारे किंवा विभवे नोपयुज्यते। असाधवो गुरवोऽपि व्यसनाब्धौ पाषाणवन्निमज्जंति। किन्तु साधवो लघुत्वमापन्ना अप्यलाबुवदुपरि संतरति। यदि दुःखेषु धैर्यं सुखेषु चार्जवं न स्यात्तदाऽयं शिक्षितो विवेकः क्वोपयुज्यते ? दुःखे धृतिर्मोहे मतिः कोपे क्षांतिः गुणे च नतिर्महतां सततं सहचारिणी भवति। आर्य ! शोकं वैक्लव्यं च निरस्य जनकजाऽन्विष्यताम्। विधिः शीघ्रमेव सिद्धिं विधास्यतीति सौमित्रिणा प्रबोधितोऽपि रघुपतिः सीताविरहव्यथां न तत्याज। कथितं च प्रौढशोकाग्निः रिक्ताम्बुशीकरैर्नोपशाम्यति। अथ रामो ब्रवीत्। भ्रातर्यदि धर्ममार्गानुगस्येष्टं विपद्यते नाम। तेन विदुषामपि नास्तिक्यशंका समुपजायते। विधिरद्य सकामो भवतु। शिवश्च मम वामोऽस्तु धैर्ये सीतामनुगते मम जीवितमपि गंतुमुद्यतमस्ति। एषोऽहं मर्यादां त्यक्त्वाऽदेवमराक्षसमगन्धर्वमकिन्नरमपिशाचमपन्नगं च

विश्वं करोमीति ब्रुवाणो राघवः शरं सन्धाय सृष्टिसंहाराय सज्जो बभूव । एतदालोक्य लक्ष्मणोऽब्रवीत् । आर्य ! कोपाग्निं संहर । धीरा भवितव्यं न तिरस्कुर्वन्ति । अथ प्रबोधितो रामोऽग्रे गत्वा भूधराकारं गृध्रं च दृष्ट्वाऽब्रवीत् । लक्ष्मण ! नूनमनेन गृध्राकारेण सा तन्वी भक्षितेत्युक्त्वा शरासनं संधाय स गृध्रमाहुद्राव । एवमालोक्य स्वल्पावशेषजीवोऽपि स विहंगमो राममुवाच । वत्स ! नाऽहं पापकर्मा निशाचरः । किन्तु तव पितृमित्रं सूर्यसूतसुतो जटायुर्नाम गृध्रोऽस्मि । या तव नयनानन्दकौमुदी प्रिया सा सीता दशास्येन हृता । तां त्रातुं समुद्यतं च मां रणे निपात्य विध्वस्तरथसारथिकार्मुकोऽपि स क्वाऽपि जगाम । निशम्यैतज्जटायुवचनं रामो वज्रेणेव विदारितोऽभवत् । सोऽथ सीतार्थे क्षपितायुषं तं परिष्वज्य मुहुर्मुहुः पितृमित्रदशां च शोचन् रुरोद । तात ! पूर्वं वनवासस्ततः प्रियादुःखं, तत्राऽपि त्वद्वधश्रवणम् । अहो मंदभाग्यस्य मे वज्रपातपरम्परेति निगद्य रामो मुमोह । अथ लक्ष्मणेन प्रबोधितः स सीताहरणवृत्तान्तं खगशेखरं पप्रच्छ । ततस्तेन पृष्टः स गृध्रपतिः स्वविषमव्यथां संस्तभ्य प्रोवाच । राम ! रावणस्तव भार्यां विहायसा हृतवान् । यस्मिन्मुहूर्ते तेन सा हृता स वृन्दो नाम मुहूर्तः । तस्मिन् हृतं वस्तु पुनरासाद्यते हर्ता च विनश्यति । त्वं युधि राक्षसान् निहत्य सत्वरं विजयमवाप्स्यसि । नाऽतःपरं किमपि वक्तुं शक्नोमीत्यभिधाय क्षितिसंलीनग्रीवो जटायुः प्राणानुत्ससर्ज । एवं तस्मिन्वीरे त्रिदिवं याते सुरसिद्धविद्याधरा अपि तस्य पुण्यपण्यार्जितां शरण्यतां भूयो भूयः प्रशशंसुः । अस्मिन्नसारे संसारे पुण्यभाजामेव परार्थे जीवितव्ययो भवति । ततः शोकविह्वलौ रामलक्ष्मणौ तस्य शरीरं संस्कृत्य तस्मै जन्हुकन्याजलांजलिं प्रायच्छताम् । अथ सीताविरहमोहितो रामो वनाद्वनान्तरं जगाम । तत्रैकदा मार्गमावृत्य तिष्ठन्तं पर्वताकारं च राक्षसं ददर्श । ततस्तेन राक्षसेन बलादाकृष्टावपि भूधराविव निष्कम्पौ तौ तस्यान्तिकं न जग्मतुः । एतदालोक्य स कौ युवामिति पप्रच्छ । तच्छ्रुत्वा तौ नामजातिकुलोपेतं निजवृत्तान्तं कथयामासतुः । निशम्यैतत्सोऽब्रवीत् । श्लाघनीया युवयोरविवेकता । लोके स्त्रीसमेतो यो निर्जने वने भ्राम्यति । स एवं विधमेव फलं लभते । दिष्ट्या मयाऽद्य वने युवां पशुतुल्यौ मूर्खौ प्राप्तौ । भोजनादन्यत्र भवद्विधौ नोपयुक्ताविति सत्यम् । एवमाकर्ण्य रामलक्ष्मणौ कृपाणेन युगपत्तस्य भुजौ चिच्छिदतुः । ततः कृत्तबाहुः स धरण्यां पतित्वोवाच । राम ! त्वत्प्रसादादहं शापजनितवैरूप्याद्विमुक्तोऽस्मि । पुराऽहं दनुर्नाम राक्षसोऽभवम् । युधि देवान् विजित्य तद्दर्पान्मुनीनामपि त्रासमकरवम् । अथै-

कदा स्थूलशिरा नाम मुनिः कोपात् कबन्धोभवेति मामशपत्। ततो लब्धावसरः शक्रोऽपि कुलिशेन मां जघान। येनाऽहं विशिराः कबंधतांचेमां प्राप्तवानास्मि। राघव। सोऽहं कृत्तभुजस्त्वयाऽद्य शापान्मोचितः। अथ शरीरसंस्कारे वृत्ते निजं वपुः प्राप्स्यामि। रघुनंदन ! एतदाकर्ण्य मुनिवरवचनम्।

अभिमानं सुरापानं गौरवं घोररौरवम्।
प्रतिष्ठा शूकरी-विष्टा त्रयं त्यक्त्वा सुखी भवेत् ॥

रामोऽब्रवीन्। सत्यमुक्तं महर्षिभिः सहसा वह्निमादाय तं दाहय। अत्रान्तरे चितामध्यात्कमललोचनः पूर्णचन्द्रनिभाननः स उदतिष्ठत्। ततोऽर्कवर्णेन विमानेन गगनं गाहमानः स रघुनंदनं जगाद। रघुवीर! ऋष्यमूकगिरेः शृंगे यत्र मतंगमुनेराश्रमोऽस्ति। तत्र वालिना निरस्तः सुग्रीवो नाम वानरेश्वरो निवसति। त्वं तेन सार्द्धं सख्यं विधाय सीतामधिगमिष्यसि। एष ते दक्षिणः पंथा यत्र पंपाख्यः सरोवरोऽस्ति। पुरा दुर्भिक्षे गुर्वर्थं फलहारिणां मतंगशिष्याणां यत्र स्वेदबिन्दवो न्यपतन्। तत्र ते लताजालेष्वपरिम्लानपुष्पतां याताः। अयश्च सा सिद्धवसतिरतीव सुखप्रदाऽस्ति। तं गिरिं शिशुमाराख्यो दैत्यो बदरीफलैर्जीवन् रक्षति। मुनिप्रभावात्तत्र न कश्चित्पापकर्मा नास्तिकश्च प्रवेशं लभते। रात्रौ स्वप्नं दृष्ट्वा प्रातः प्रत्यक्षं तत्फलं समवाप्स्यासि। ते स्वस्त्यस्तु। क्षिप्रं व्रजेत्युक्त्वा स लक्ष्मीपुत्रः स्वप्रकाशेन दिशः प्रसादयन् गगनमाविवेश।

ततो रमणीविरहध्यानविधुरो रामः क्षीणकलः शशीव तनुतां जगाम। सोऽथ श्रीसुतोपदिष्टेन वर्त्मना शनैर्व्रजन् वल्कलवतीं भस्मरुद्राक्षधारिणीं मूर्त्तामिव तपःश्रियं सिद्धशवरीं च दृष्ट्वा क्लमं तत्याज। ततः पूज्याऽपि सानुजं रामं विलोक्य प्रणनाम। यतो वैराग्यधूतरजसामभिमानरजः कुतः? अथ परमकारुणिको राघवः प्रह्वां तामब्रवीत्। भद्रे! विमलं ते तपो हर्षसंतोपस्तवकितं मनः करोति। इदं ते प्रसन्नमधुरं वपू रागद्वेषविषोज्झितां मोहविहीनां मनोवृत्तिं कथयत्येव। पुण्यचेतसां दर्शनं हृदि वैषद्यं लोचने वैमल्यं तनौ च पुण्यप्ररोहं च विधत्ते। परिपूर्णतपःसिद्धिर्मम्बुना मे कथिताऽस्ति। यस्यास्ते मोक्षगामिनो मुनयो गुरवः संति। निशम्यैवं रामवचनं शवरी प्रत्युवाच। साधो! ममेयं तपःसिद्धिस्त्वद्दर्शनफलास्ति। साधुसमागमोऽजलं तीर्थं अकायक्लेशादं तपोऽजीवितान्ता च स्वगतिरिति सत्यम्। महानुभाव!

तीर्थस्नानं व्रतं, दानं, तपो यज्ञसमाधयः।
पुनंत्येतेऽतिकालेन सद्यः साधु कृपाकणाः ॥

असौ मतंगाश्रमः । यत्र ते मम गुरवो हुतानला ज्ञानपूताश्च परमां सिद्धिं प्रयाताः । किम्बहुना । तत्प्रसादेन देशोऽयं प्रत्यग्रकुशपादपोऽपरिम्लानकुसुमश्च सततं विलोक्यते । अत्र सप्तसागरा निखिलतीर्थसरितास्तदाज्ञया निवसंति । स्वस्ति तेऽस्तु । त्वाम्पुनः पुनः प्रणमामि । संप्रति त्वदाज्ञयाऽहं ज्ञानानिले तनुं हुत्वा स्वोचितं धाम व्रजामीत्युक्त्वा सिद्धशबरी रामशासनं शिरसा समादाय तनुमग्नौ हुत्वा च तेजोमयं पदं प्रययौ । अथाऽन्येद्युः पंपाभिमुखं गच्छन् राघवः सौमित्रिमुवाच । लक्ष्मण ! पुण्येऽस्मिन् प्रदेशे सा मम दुर्दशा परिक्षीणा । प्रसन्नतां प्राप्तमिदं मे मनः सीतासमागमं शंसति । निशम्यैतद्वचनं लक्ष्मणोऽब्रवीत् । तथाऽस्तु । अथोभावपि पम्पाभिधं सरः प्राप्य तत्तीरे स्थितिं चक्रतुः । ततो रामः सरोवरशोभां निरीक्ष्य प्रोवाच । भ्रातः ! पश्यैतत्सरो यत् सज्जनचित्तवत् स्वच्छं, साधुसंगमिव स्थिरम्, धर्ममार्गमिवानन्तम् । मनोरथमिव सुविस्तीर्णम्, विवेकमिव श्लाघ्यम्, संभोगमिव बल्लभम्, संसारमिव सकुतूहलम्, स्त्रीचित्तमिव चंचलं चाऽस्ति । ततो रामोऽब्रवीत् । लक्ष्मण ! सीताविरहोऽत्रापि मां पीडयति । चंद्रादि रमणीयानां रम्यता स्वस्थचित्तायैव रोचत इति सत्यम् । सुखिनामचारु चारु भवति । दुःखिनां चार्वपि दुःखाय प्रभवति । भावानां भव्योऽयं स्वभावस्तत्त्वेन न हि समुपलभ्यते । अत्रान्तरे मधुपोत्सवः कुसुमलांछनः कालः समायातः । तस्मिन्नवसरे कान्ताकटाक्षतरलाः कुसुमरेणुभिश्च मत्ताःस्मरवसन्तयोः समं शिलीमुखाश्चेरुः । ततो रामाहृताशयो रामो लक्ष्मणमवादीत् । भ्रातः ! लता सालमालिंगति । नदी च भूधरं श्लिष्यति । चैत्रोऽयमचेतसामपि नवोत्सुक्यमादत्त इति चित्रम् ? हा प्रिये ! वसन्ते कुसुमामोदमंदिरा अप्येते तरवो मम विचारे तु विषपादपा एव संति । एवं बहुविधैर्विलापैः प्रियतमां शोचन्रामो वनेषु गिरिसानुषु च बभ्राम । ततो लक्ष्मणेन समाश्वासितो रामो यथाकथंचिद् धैर्यमवाप्य क्वाऽपि शीतलच्छायायां विशश्राम ।

इति श्रीगद्यरामायणेऽरण्यकाण्डं समाप्तम् ॥



|| ओं नमः शिवाय ||

# अथ किष्किन्धा काण्डं समारभ्यते

जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

अथ प्रभाते ऋष्यमूकस्थः सुग्रीवः सानुजं धनुष्पाणिं च तं विलोक्य शंकित-हृदयो बभूव । ततस्तदनुगास्सर्वे वानरा अपि सहसोत्प्लुत्योत्प्लुत्य शिखराच्छिखरं जग्मुः । अथ देशकालज्ञः सुग्रीवो हनुमत्प्रमुखान् सचिवान्प्रोवाच । महाशयाः ! एतौ कमललोचनौ शौर्याभरणौ च नूनं वालिना प्रेरितावत्र समायातौ । अन्यथाऽस्मिन् पुण्यप्रदेशे सायुधयोः संचारः कथम् ? छिद्रान्वेषणतत्परो वाली नास्मासु निश्चिन्तस्तिष्ठति । यतः श्रीरक्षणार्थं राजानो विचित्रं हि नयक्रमं रक्षन्ति । मारुते ! त्वमितो गत्वा सर्वमिङ्गितं जानीहि । अथ वृत्तान्तज्ञानानन्तरं यत् कर्तव्यं तत् कुरुष्वेति निगद्य वानरेश्वरो विचारमग्नो बभूव । निशम्यैतद्राजशासनं पावनिर्ब्राह्मणवेशं विधाय सत्वरं यत्र रामलक्ष्मणावतिष्ठतान्तत्र ययौ । सोऽथ कौ युवाम् ? किमत्रागमनकारणं ? कृपया वदतम् । यथा व्योम्नि सूर्याचन्द्रमसौ त्रिविष्टपे शक्रोपेन्द्रौ वने च नरनारायणौ तथा भुवि युवां स्थः । अहं हनुमान्नाम वानरपतेः सुग्रीवस्य सचिवोऽस्मि प्रीत्यर्थमत्र समायातः । एतदाकर्ण्य प्रियवचनं हनूमतो राघवो दनुवाक्यं च स्मृत्वा सीतां करतलस्थां सममन्यत । ततो लक्ष्मणो रामशासनात् कुलं नाम तथा वैदेहीहरणं चापि पवनात्मजाय निवेदयामास । दनुना ह्यस्य कार्यसिद्धये सुग्रीवः कथितः । सोऽयं लोकशरण्योऽपि सुग्रीवं नाथमभिवांछति । किम्बहुना । यस्य भुजबलं समाश्रित्य शचीपतिरपि सुखं शेते । स एव सीताविरहितो रामः संश्रयमभिलषति । लक्ष्मणेनेतिकथितं निशम्य मारुतिः प्रसन्नो भूत्वा ताभ्यां सहैव स्वालयं प्रायात् । ततो हनूमान् सालस्य सुपुष्पितां पर्णबहुलां च शाखां छित्त्वा तस्या उपरि च राघवौ संस्थाप्य सुग्रीवमप्याजुहाव । अथोपविष्टेषु तेषु हनूमान् सर्वं राघववृत्तान्तं प्लवगाधिपाय निवेदयांबभूव । ततस्तद्गिरा विदिताऽभिप्रायो वानरेश्वरः फणीव जीर्णं वल्कलं वालिजं भयं तत्याज । अथ प्रीतिपुरस्सरः

सुग्रीवो रामं समुपसृत्य सविनयं प्रोवाच । रघुराज ! तव सर्वा गुणाभरणता हनूमता मे कथिता । त्वत्समागमादहमात्मानं सर्वथैव सफलं मन्ये । अहोनु ! ममेदं जीवितं श्लाघ्यं यद्भवान् मयाऽभिगम्योऽपि स्वयमभिगम्य सख्यं समीहते । अधुना प्रसृतोऽयं मे पाणिस्तव पाणिमालम्बते । पूर्वं दृशोः परिणतं सौगन्धं संप्रवर्ततामिति सुग्रीववचसा प्रीतिशालिना रामेण पाणिना पाणौ पीडिते हनूमान् पावकं समादधे । ततो रामसुग्रीवौ पावकसाक्षिकं सख्यं कृत्वा मित्रलाभेन संतुष्टौ सुखेन तत्र तस्थतुः । अथाऽन्येद्युः प्लवगपुंगवो राघवं प्रोवाच । सखे ! प्रियावियोगतप्तस्य तव दुःसहं दुःखं ममाऽपि हृदये पदं करोति । यदि मद्गिरां प्रत्ययस्तदात्वधुना शोकस्त्यज्यताम् । विपुलेऽस्मिन् मे स्कन्धपीठे भारो निधीयताम् । तव गिराऽहं शत्रुं निहत्य सीतां वराहो रसातलगतां मेदिनीमिव समुद्धरामि । दशास्येन विहायसा नीता सीता राम रामेति क्रोशंती लक्ष्मण-लक्ष्मणेति च विलपन्ती दृष्टाऽस्माभिः । मनस्विनी सा गिरौ चतुर्भिः सचिवैः सार्धं स्थितं मां वीक्ष्य रुचिरं वासो माल्यमाभरणानि च मुमोचेत्यभिधाय रामाय वानर-पतिश्चारुवस्त्रं मणिभास्वरं भूषणं गुहान्यस्तं च प्रादर्शयत् । ततो राघवोऽपि तदादाय हृदि विन्यस्य क्व प्रियेति मुहुर्मुहुर्विलप्य च महीतले निपपात । सोऽथ चिरेण संज्ञामवाप्य वाष्परुद्धलोचनो घननीहारपटच्छन्न प्रभाकर इव बभूव । अथ रामे-णाऽभिज्ञानार्थं पृष्टो लक्ष्मणः प्रत्यवदत् ।

कुंडले नैव जानामि नैव जानामि कंकणे ।
नूपुरावेव जानामि नित्यं पादाभिवंदनात् ॥

ततो रामः सुग्रीवं प्रोवाच । सखे ! स दशकंधरः कां दिशं गतः ? एतदाकर्ण्य सुग्रीवः प्रत्यवदत् । नाऽहं तस्य दुरात्मनः स्थानं दिशं वा जाने । किन्तु तमन्वेष्टु-मश्रान्तः परिश्रमं विदधास्ये । किम्बहुना ।

गगने मेदिन्यां पाताले जले चाऽपि स्थितस्य दशास्यस्य मत्सेना पृष्ठपातिनी भविष्यति । काकुत्स्थ ! विक्रमकालोऽयम् । शोकावसरोऽत्र कः ! यदि त्वद्विधा एव शोचन्ति । तर्हि मादृशस्य धृतेर्गतिः क्व ? रघुपते ! विपन्निम्नगावेगनिष्कम्पाः साधुभूधराःक्व ! वैक्लव्यकुटुम्बिन्यो मोहध्वान्तनिशाः शुचश्च क्व ? विवेकविषदालोकमतयो बुधा मूढसुल-भस्य शोकस्यायतनं न । किम्बहुना । पौरुषोत्साहे स्वाधीने रिपुक्षये त्वदधीने सेवाधीने षु चास्मासु तेऽयं चित्तविपर्ययःकः ! निशम्यैतत् सुग्रीववचनं रघुनंदनो वस्त्रेण मुखं

धैर्येण च मनोमणिमुन्मृज्य प्रोवाच । सखे ! बन्धुना सुहृदा च त्वया यथार्थमभिहितम् । दुःखे पथप्रदर्शकाः सुखे च विनयवादिनः पुण्यभाजामेव सुहृदो भवंति । प्रणयवत्सल ! मे कार्यमधुना त्वदधीनम् । सुररिपोरन्वेषणे तूर्णमेव यत्नो विधीयताम् । निकृतिचेतसा भ्रात्रा यत्तव राज्यं हृतं तदहं जाने । एभिः कार्तिकेयवनजातैः शिखरिभेदनैः शरैस्तवाऽरिमण्डलं छेत्स्यामीति रामवचः श्रुत्वा सुग्रीवो हर्षनिर्भरो बभूव । ततः सोऽब्रवीत् । महात्मन् ! अहं तु तदैव संपदां भाजनतां यातो यदैव गुणोदारो भवान्मे प्रसादाभिमुखोऽभवः । गुणैकग्राहिणी सज्जनमैत्री तु गिरिशिलेव निश्चला । किन्तु दोषसाराणां खलानां प्रीतिर्लेदमीव चंचलस्वभावास्ति । परोपकारदत्ता महात्मानः परार्थे धनं परिच्छदं भोगान् किम्बहुना जीवितमपि परित्यजंति । आर्य ! यथा सुधाकरस्य कान्तिर्दिनमणेश्च प्रभा सहजा तथैव तवाऽपि प्रणयिवत्सलता स्वाभाविकी । रघुराज ! जगत्यभग्नविक्रमो वाली विश्रुतः । यज्जये जयिनामपि संकल्पा विफला जायन्ते किल । स महाबली स्वबलजिज्ञासया महाशैलानपि भिनत्ति । मुहूर्तेन सप्तसागरान् परिक्रम्य संध्यायां स्वनगरीं निवर्तते । पुराऽत्र दुंदुभिर्नाम दैत्योऽभूत् । स युद्धेच्छया यत्र तत्र बभ्राम । परं कुत्राऽपि प्रतिद्वंद्विनं नाससाद । अथैकदा स महोदधिमभ्येत्य युद्धं ययाचे । सोऽब्रवीत् । ते युद्धार्हस्तु हिमालयोऽस्ति । तच्छ्रुत्वा महिषाकृतिः स तुषाराचलं गत्वा शृंगपातैः खुरांचनैश्च तं व्याकुलशेखरं चकार । ततोऽतिभीतः शैलेन्द्रः क्षणं ध्यात्वा तमुवाच । दुंदुभे ! नाऽहं ते नियुद्धे क्षमः । अस्ति ते समकक्षः किष्किन्धाधिपतिर्वाली । सोऽवश्यं ते युद्धश्रद्धां क्षणेन क्षपयिष्यतीति शैलराजेनोक्तो दुंदुभिः किष्किन्धामभ्येत्य हरेरुपवनं भग्नद्रुमं व्यधात् । ततः कोपाकुलो वाली तमाकृष्य सत्वरं गतचेतनं चकार । यस्यैतन् कंकालमिहावलोक्यते । अथैकदा दुंदुभेः पूर्वजः पुत्रो मायावी नाम दानवः स्त्रीहेतोर्वालिना सह वैरमापेदे । सोऽथ युद्धलालसया रजन्यां किंष्किन्धां समभ्येत्य जगर्ज । तच्छ्रुत्वा कोपाविष्टो ममाग्रजः सहसा मया सह तं समाद्रवत् । ततश्चन्द्रालोके प्लवगेन्द्रं समालोक्य त्रस्तो दैत्यपतिः पलायांचक्रे । अथ मया सह वेगाद्वालिनाऽभिसृतः स तृणजालवृतं वनं विविश्याऽन्तर्हितोऽभवत् । एतदालोक्य वाली मां बिलद्वारे निधाय स्वयं तत्र विवेश । एवं तस्मिन् विवरं प्रविष्टे यदा साग्रः संवत्सरो जगाम । तदाऽहं भ्रातृवियोगव्यथितो बिलान्निर्गतं सफेनं रुधिरावेगमपश्यम् । ततः शंकितहृदयोऽहं भ्रातरं निहतं मत्वा शोकसागरे निमग्नोऽभवम् । अत्रान्तरे स्थितिविप्लवशंकितैः सचिवैरेत्य राज्येऽहमभिषिक्तः । ततोऽहं भ्रातृवधव्यथां मुक्त्वा राजकार्ये दत्तादरोऽभवम् । अथ

गच्छता कालेन वाली रणे पातालस्थं मायाविनं हत्वा राजधानीं समाजगाम । तत्र मां राज्यस्थितं विलोक्य कोपानलाकुलो वभूव । यद्यपि स मया पूर्ववत् सत्कृतोऽभूत् । तथापि कलुषाशयः स मे प्रणयं सर्वथा न जग्राह । तात ! त्वमेव राजाऽसि । अहं तु तव दासोऽस्मि । मे स्पृहा तु न राज्येऽभूत् । न चाऽद्याऽपि वर्तते । क्षमस्वापराधम् । एवं वहुविधैर्वाक्यैरनुनीतोऽपि स मयि प्रसादं नाययौ । जगति दैवविहितां मिथ्यापवादकलिलां लीलां न कोऽपि वारयितुं शक्तः ? एतदाकर्ण्य सचिवान् सोऽब्रवीत् । दुरात्मनाऽनेन भ्रात्रा रिपुवधे सक्तस्य मे शिलया बिलं पिहितम् । एवं साधुमध्ये मिथ्यैव विगर्हितोऽहं विक्रीत इव मूकत्वमवलम्ब्य स्थितवान् । ततोऽहमेकवसनो हृतदारधनश्च चतुर्भिः सचिवैः सह पुरान्निर्वासितः । सोऽहं वालिना मिथ्यानिकारेण निरस्तोऽस्मिन् मतंगाश्रमकानने निवसामि । पुरा विजयोर्जितः स दुंदुभिं निहत्य पादांगुष्ठेन रुधिरार्द्रं यत्कलेवरं चिक्षेप । तन्मुखनिसृताः पवनावर्तनर्तिता रक्तविन्दवो मतंगाश्रमे न्यपतन् । तच्छापाद्वानराधिपतेरगम्योऽयं पर्वतः । येन वयमत्र विगताशंकास्तिष्ठामः । स एवाऽयं शुष्कास्थिनिचयो दुंदुभिकायो विभ्रष्टो गिरिशिखर इव दूरादेव समवलोक्यते । पुरा प्रवृद्धवयसा वालिना शरैरेकेनैव सप्तताला विद्धा निस्साराश्च कृताः । स्वयं तुष्टेन पित्रा शतक्रतुना तस्मै या हेममयी माला दत्ता । तस्याः प्रभावादेव स युद्धेषु गतक्लमस्तिष्ठति । सखे ! नाऽन्यथा मन्तव्यम् । स भवता कथं युद्धे जेतुं शक्य इति सुग्रीवेण कथिते रामोऽपि पादांगुष्ठेन शुष्कं तद् दुंदुभिविग्रहं दशयोजनं चिक्षेप । एतदालोक्य चकितोऽपि वानरः प्रोवाच । सखे ! प्रणयाद् ब्रवीमि । दोषशंकाऽत्र न कर्तव्या । वालिनात्वार्द्रोऽयं प्रक्षिप्तः शुष्कत्वेऽस्य तुल्यता का ? त्वयाऽप्येकेन शरेण सप्तसु तालेषु विद्धेषु छिन्नसंशयोऽहं त्वां सर्वथा वालिहन्तारं जान इति कथयित्वा सुग्रीवो विरराम । निशम्यैतत्सुग्रीववचनं राघवश्चापमाकृष्य यं शरं चिक्षेप । स सप्ततालान् विनिर्भिद्य गिरिं भित्वा च क्षितितलं विवेश । किम्बहुना । स कौतुककरः शरो राममेवाशु प्रत्याजगाम । एतदालोक्य लज्जितो वानरेश्वरो राममुवाच । रघुवंशमणे ! अनेन सप्ततालभिदाऽशुगामिना च विशिखेन तव यशः सप्तलोककर्णावतंसतांनीतम् । प्रभो ! सोदरव्यंजनः स मे शत्रुरधुनैव हतः । परीक्षालाघवकृतं मन्युं मे मा कृथाः । यतः साधवो व्यसनार्तेषु प्रीतिमेव प्रदर्शयन्ति । त्वयाऽद्य मे पराभवोद्धृतौ यत्नः क्रियताम् । येन वालिसुहृदो विपन्नविभवोत्सवा भवंत्विति ब्रुवाणं जयोत्सुकं सुग्रीवं काकुत्स्थः परिष्वज्य सितांशुशुभ्रां वाचं समाददे । सखे ! अधुनैव किष्किन्ध्यां गत्वा

नादेन वालिनं समाहूय च मे कर्णान्ताकृष्टचापस्य दृष्टिगोचरं कुरु । सखे ! ऽयं मे बहिर्दीप्तः शरस्त्वत् प्रियाऽऽचरणाय समुद्यतः । शीघ्रमितो गत्वा वालित्रधूवाष्पैर्दिने घारुणास्रतां प्रयात्विति राघवेणोक्ते सुग्रीवः सत्वरं किष्किन्धां ययौ । रामोऽपि च तमनुजगाम । ततः सुग्रीवो जगर्ज । तं शब्दं श्रुत्वा वाली महोरगो बिलादिव राजमंदिराद्बहिराजगाम । सोऽथ सुग्रीवं पुरो दृष्ट्वा कोपकम्पितो भुजाभ्यां गाढं जग्राह । ततस्तयोर्जानुबन्धभुजाकर्षकरास्फालनकर्कशं घोरयुद्धमभूत् । तस्मिन्नवसरे रामस्तौ प्रमाणाकृतिविक्रमैर्निर्विशेषौ समालोक्य सुहृद्वधभयाच्छिलीमुखं न मुमोच । ततः प्रहारभग्नांगः सुग्रीवो वालिभयात् त्वरितं निजकाननं जगाम । सोऽथ शिलामध्यास्य क्षितिमवलोकयन् हनुमत्प्रमुखैः सह समायातं सानुजं रामं जगाद । अहो मे मंदभाग्यस्य त्वत्समाश्रयो विफलोऽभवत् । किम्बहुना । पीयूषाद्विषमिव विपरीतमद्य जातम् ? स्वयं त्वया मिथ्या वालिवधोद्यमः किं गृहीतः ? प्रतिश्रुतेविपर्ययो हृदये शूलमादत्ते । हा मृत्युमुखे न्यस्तस्त्वयाऽहं कथमुपेक्षितः ? किं कूपे विश्वस्तमवतार्य रज्जुच्छेदो योग्य इति ब्रुवाणं सुग्रीवं लज्जानताननो रामः प्रत्यवदत् । सखे ! कोपमुत्सार्य कारणं शृणु । मया युद्धे युवां सदृशाभरणाम्बरौ दृष्टौ । अतस्तद्वधभयान्मया प्राणहरः शरो न त्यक्तः । अधुना प्रत्यभिज्ञायै पुंनागकुसुमोज्ज्वलां मालां कुरु । एषोऽहमेतद्धनुरयं च मृत्युकरः शरः पुनर्वालिनो निधने किं काठिन्यमस्तीति रामवचसा लक्ष्मणः सुग्रीवोरसि नागपुष्पमयीं मालां चक्रे । तस्मिन्नवसरे स तया विभूषितः सुराचल इव व्यराजत । ततो हरीश्वरो राघवं पुरस्कृत्य नलनीलवज्रांगैश्च सह किष्किन्धां प्रतस्थे । ततस्ते सरिद्गिरिवनावनिं समुत्तीर्य नीलजीमूतश्यामलं कदलीवनं दृष्ट्वा प्राहृष्यन् । अथ रामेण पृष्टः कपिपतिर्जगाद । रघुवीर ! अत्र सप्तजना नाम मुनयोऽन्तर्जलव्रताः सप्तभिर्वत्सरशतैः स शरीरा दिवमगच्छन् । सोऽयं पुण्याश्रमः पक्षिणामप्यगम्योऽस्ति । किम्बहुनाऽत्र होमधूमोऽवलोक्यते दिव्यध्वनिश्चाऽप्याकर्ण्यते । एतच्छ्रुत्वा राघवो मनसा सतपोवनं तन्मुनिचक्रं ववंदे । ततः सुग्रीवः कांचनाट्टालमालिनीं किष्किन्धां समवाप्य घनवद् घोरं ननाद । तं शब्दं श्रुत्वा वाली ललनाकेलिं परित्यज्य च कोपेन क्षिप्रं कल्पान्तदहनोपमो बभूव । एतदालोक्य तारापतिमुखी तारा प्राणपतिं परिष्वज्योवाच । स्वामिन् ! साम्प्रतं कोपं विहाय केवलं धैर्यमवलम्ब्यैव कर्तुमर्हसि कार्यम् । दूरदर्शिनो लोका अपरीक्षितं न शृण्वंति न जल्पंति न च कुर्वन्ति । गतेऽह्नि यस्तवानुजः संयुगे पलायितः । सोऽधुना केन दर्पेणाऽत्र पुनर्योद्धुं समुपागतोऽस्ति ? नीतिज्ञेन तेनाऽवश्यं

कोऽपि स्थिरसंश्रयः संप्राप्तः । येन प्रसह्य स नवं जयोद्यमं कर्तुं समीहते । सुग्रीवेण दयासागरो दाशरथिः समाश्रित इति मामंगदोऽधुनैव प्रोक्तवान् । प्राणनाथ ! श्रीकामा विजिगीषवो बलिना संधिमिच्छंति । हीनशक्तिना सह युध्यंते । तुल्यं च सदोपेक्षंते । यो जितोऽपि सत्वरं पुनरायातोऽतो जीवितनिःस्पृहः इति मन्ये । सहसाऽऽपातिनापतंगेनाऽपि दीपो निहन्यते । एष भ्राता संभाव्यताम् । एष रघुनाथश्च प्रसाद्यताम् । यतो नीतिमंतो महीपालाः प्रणामेनाऽपि स्वविभवरक्षणं कुर्वन्ति । एवं प्रियावचनं समाकर्ण्य विगत-साध्वसो वाली प्रोवाच । प्रिये ! यदा भग्नग्रीवोऽपि सुग्रीवः पुनरायातस्तदा शौर्यशाली वाली कथं स्वपराभवं सहते ? निधनं नाम दुःखं न । लोके यो जातः सोऽवश्यं विपद्यते । मानिनां मानभंगो हि सजीवमरणमस्ति । ये शूराः शत्रुयशः शुभ्रकर्मपाटन-लंपटास्संति । ते परप्रणाममलिनं विभवं कथं भुंजते ? रामेण सह मे युद्धं नास्तीत्यु-क्त्वा वाली प्रियामामंत्र्यं च युद्धार्थं निश्चक्राम । सोऽथ सुग्रीवं तेजसा निष्कम्पमवलोक्य विस्मितोऽपि मुष्टिना जघान । ततोऽवसरज्ञः सुग्रीवः सालेन वालिनमताडयत् । येन स शैल इव धरण्यामपतत् । अथ बलोत्कटो वाली तूर्णमुत्थाय सुग्रीवं दोर्भ्या-मादाय च तं मृत्युकवलनोचितं विदधे । एवं संकटपतितं सुग्रीवं विलोक्य राघवो मृत्युदंष्ट्रोत्कटमुखं, स्वर्गारोहणसोपानं च बाणं सन्धाय वालिने विससर्ज । ततस्तेना-ऽभिहतः स वेगान्महीतले निपपात । ततो वानरराजो जीवितच्छेदिनीं व्यथां संस्तभ्य गद्गद्गिरा प्रोवाच । हा राम ! यशस्विना त्वयाऽन्यरणसंसक्तं मां निहत्याऽऽर्यवृत्तं त्यक्तम् । सुकृतस्थाने दुष्कृतं च समुपार्जितम् । तव यत्कार्यं कर्तुं सुग्रीवोऽपि क्षमस्तत् कर्तुं किमहं न क्षमः ? पुनः कथमपराधं विनाऽहं त्वया हतः ? नाऽहमात्मानमनुशोचामि । न चारुलोचनान्तारां च चिन्तयामि । किन्तु मयि हते मे प्रियपुत्रोंऽगदो हत इति मन्ये । अत्रान्तरे लक्ष्मणेन सह रामः शनैः शनैस्तत्राऽऽययौ । ततो वाली लोचने किंचिदुन्मील्य रामं जगाद । राघव ! महाकुलप्रसूतस्य सत्त्वशा-लिनश्च तव धर्मध्वंसिनीमतिः कथं जाता ? राम एव सदाचारसम्पन्नः सर्वभूतहिते च रतोऽस्तीत्यहं श्रुतवान् । किन्तु ते विशदं यशः कथमेकपदे नष्टम् ? लोकेषु यथा तव कीर्तिरुचिरा । तथाऽऽचारो नास्ति । अहो ! दंभध्वजानां मिथ्याविनीततां को नु जानाति ? राम ! भवता यदि पातकं मैथिलीलाभलोभने कृतं तथाऽपि श्रूयताम् । यो रावणस्तव सीताञ्जहार । स सप्ताब्धिचारिणा मया कक्षायां बहुशो निक्षिप्तः । सुग्रीवसेवारजसा मिथ्यैव कलंकितोऽसि । किमहं रावणं बद्ध्वा तव प्रियामानेतुं समर्थो नास्मि ? सुग्रीवो

यन्निजभ्रातुः श्रियमश्नुते । तत्तु समुचितम् । परन्तु प्रीत्या सन्मार्गात्परिच्युतो रामो नोचितम्। कृतवान् एतद्वालिवचनं निशम्य किंचिदधोमुखो रामोऽब्रवीत् । अहोवत वानर ! त्वमेव धर्मगतिं जानासि । यद्भ्रातृजायारतोऽपि साधुरिव भाषसे ! मलिना जना अतिसूक्ष्ममपि परदोषं पश्यंति । परन्तु स्वनेत्रमिव निजापराधं नेक्षंते । भ्रातृजायारतस्य वधः समुचित एव । राजदण्डविशुद्धस्त्वं सम्प्रति सद्गतिं समवाप्स्यसीति सत्यमवगच्छ । राजानस्तु बहुधा मृगयाशीला भवंति । त्वं च शाखामृगोऽसि । अतः कानने यदि हिंस्रो हतस्तत्र को नाम दोषः ? राघवेणेत्यभिहिते भवितव्यतां चिन्तयित्वा विगलितक्रोधो वाली क्षम्यतामिति तमुवाच । ततस्तारा वीर्यवन्तं वालिनं हतं श्रुत्वांऽगदंचाग्रे कृत्वा तूर्णं तत्र समाययौ । साऽथ दयितं परिष्वज्य दुःखाब्धिमग्ना प्रोवाच । अहोनु रामबाणेन तव जीवितं हरता दूरान्मम हृदयमपि दारितम् । नाथ ! नयने समुन्मील्य सुतमंगदं तु पश्य । यतो दीर्घप्रवासिनस्ते पुत्रदर्शनं कुतः ? प्राणपते ! सततं कंठलग्नां हेममालामिमां मामिव स्वर्गस्त्रीसंगमव्यग्रः कथं नेक्षसे ? त्वंतु सुग्रीवप्रियां रुमां हृत्वा प्राणैः शुद्धिं कृतवान् । परं निर्दोषाऽहं कथमाहता ? वीरसुग्रीव ! पूर्वं मामपि पावके निवेश्य भ्रातृशोणितसंसिक्तां राजलक्ष्मीं भजस्व । हा ! समस्तसंकल्पकल्पवृक्षे पत्यौ तिरोहिते योषितां मातृपितृसुतादयो निष्फलाः किल । राम ! यदि सर्वैरेव सुरासुरैः सीताऽपहृता । तर्हि तत्प्राप्तिप्रवरो वाली त्वया कथं नाश्रितः ? राम ! वैदेहीविरहे तु शापं न वितरामि । किन्तु सीतां समवाप्य न चिरं तां समुपभोक्ष्यस इति शशाप । अहो ! रामस्य मोहः किंवा वालिनो दैवविपर्ययः । यत्र चूतच्छिन्नो निम्बश्च परिरक्षितः एवं बहुविधं विलप्य गगनच्युता तारेव तारा क्षितौ निपपात । एतदालोक्य वृद्धोऽन्तः पुराधिपस्तां प्रोवाच । मुग्धे ! चिन्तां त्यज । शक्रसुतो वाली रणे वीरगतिं प्राप्तवान् । अतो मारुदिहि । धात्रा केऽपि देहिनः स्थिरा न कृता । अस्मिन्नविच्छिन्ने संसारवर्त्मनि गच्छन् प्रियः प्रियस्याऽपि मुहूर्तं न प्रतीक्षते । पुत्रि ! सर्वेषामेव पदार्थानामवश्यं क्षयं ज्ञात्वा त्वं शोकं कर्तुं नार्हसि । भोगास्तरंगभंगुरा विभूतयो दृष्टनष्टा विचिन्त्यैवं तत्वज्ञा शोकग्रस्ता न भवंतीति वृद्धेवदत्यस्याः शोकस्तनुतां न ययौ । उक्तं च वियोगहृतचित्ता नामुपदेशो भेषजं क्वाऽस्ति । ततो वाली लोचनमुन्मील्याऽग्रताऽङ्गदमागतमकर्ण्य च रामसुग्रीव मुख्यानां पुरः शनैरुवाच । मे मानो जीवितपरित्यागदुःखं न स्पृशति । किन्तु शोकोऽयमेव यदन्धश्चन्द्रमिवतनयं न पश्यामि । भ्रातः सुग्रीव ! कारुण्यात्पुरातनं मन्युं निरस्य मे पुत्रोंऽगदः प्रतिपाल्यः ।

यद्यधुनाऽयं तव भृत्योऽस्ति । पुत्र ! त्वमप्यधुना कृपावतः सुग्रीवस्य चरणयोर्मस्तकं क्षिप । यतोऽस्य क्षितिपतेर्विनयेनैव जीवसि । भ्रातः ! पौरजनरक्षा, देशग्रामनगरगुप्तिः, योधसंग्रहः, तुलया मानस्थापनम्, लिंगिषु साम्यं, दानप्रबंधः, शत्रुनिग्रहः समानेऽचैन-मेतानि राज्ये कार्याणि । किम्बहुना । शक्रदत्तामिमां स्वर्णमालां गृहाणेत्युक्त्वा तस्मै तां दिव्यमालां प्रादात् । ततः प्रियाप्रलपितं श्रुत्वांऽगदन्यस्तलोचनो वाली पृथ्वी-मालिंग्य च जीवितं तत्याज । अथ स सुग्रीवो वालितनयोऽन्यैर्वानरैः सह पितुरग्निसंस्कारं कृत्वा सलिलक्रियां चकार । अथ रामाज्ञया तूर्णं सुग्रीवस्य छत्रव्यजनलांछनो राज्या-भिषेकोत्सवः सज्जोऽभवत् । अथ जाम्बुवत्प्रमुखैः सुग्रीवेऽभिषिक्ते राघवगिरांऽगदोऽपि यौवराज्यपदं लेभे । ततो रामः समुपस्थितां प्रावृषमालोक्य सुग्रीवमुवाच । सखे ! कालोऽयमसंचारोचितः । तस्मादहं तु वर्षावसानसमयं प्रतीक्षमाणो माल्यवतस्तटे निव-सामि । त्वमपि कार्यकाले समुपस्थिते स्वयमागमिष्यसीत्यभिधाय सीताविरहतो रामो लक्ष्मणेन सार्द्धं प्रस्रवणं गिरिं गत्वा कस्यांचिद्रम्यगुहायां निवासं चक्रे । अथैकदा रामः कदंबकुसुमितां पीनपयोधरां च प्रावृषमवलोक्य जानकीकमनीयतामनुस्मृत्य च प्रोवाच । प्रिये ! यत् त्वन्नेत्रसमानकांतिकमलं तत्तु सलिले मग्नम् । तवमुखच्छायानुकारी शशी मेघैरंतरितः । ये च त्वद् गमनानुकारिगतयो राजहंसास्तेऽपि मानसं गताः । किं बहुना । दैवेन त्वत्सादृश्यविनोदमात्रमपि न सह्यते । एतद्वचनमाकर्ण्य लक्ष्मणोऽब्रवीत् । रघुपते ! विषादेनालम् । शोकं समुन्मूलय । व्यवसायं च स्थिरी कुरु । प्रतीक्षस्व शरत्कालम् । ततः सराष्ट्रं सगणं च रावणं हनिष्यसि । निशम्यैतद् भ्रातृवचनं रामोऽ-ब्रवीत् । वत्स ! सर्वमहं जानामि किन्तु सीताया अलौकिका गुणा एव मां पुनःपुनर्मोहयन्ति । ततोऽवहेलितहरिदेहदीप्तिसंपत्तिभिरंभोधरैर्व्याप्ते नभसि समन्तात्पतति धारासारसलिले, वसुमतीतरुस्तनंधयधात्र्यामिव पयःपूर्णपयोधराभोगसुभगायां दिवि, चिरतरातपसंताप-दुःस्थितायाः क्षितेर्यंत्रधारागारलीलामिव विभ्राति गगनमण्डले, निर्भरांभः संभृतेषु सरस्सु, स्फुरंतीषु च तडित्सु वर्षश्रिय मनुभवन्नपि रामः सीताविरहादप्रसन्नचित्त एव तस्थौ । अथैकदा रामोऽब्रवीत् । लक्ष्मण ! यो विगतत्रप उपकारफलं तुल्यं मे प्रयच्छेति वक्ति स स्वकरेणैव निजमौचित्यं लुनीते । कृते प्रत्युपकारो हि वणिग्धर्मोऽस्ति साधुता न । य तत्राऽपि न कुर्वन्ति ते पशव एव न मनुष्याः । अनुज ! वनवासपरिक्लिष्टं चिरावाप्तवल्लभंच सुग्रीवसमयं विनाऽहं स्वकार्यं वक्तुं कथमुत्सहे ? यथोक्तकारी स प्रियावियुक्तस्य मे जीवितसंशयं ज्ञात्वा प्रियस्य सुहृदः स्वयमेव प्रियं करिष्यतीत्यभिधाय विरराम ।

निशम्यैवं रघुपतिवचनं लक्ष्मणस्तथेति प्रत्यपद्यत । एवं निःसपत्नं राज्यं समवाप्य प्लवगपुंगवो मंत्रिषु च तद्भारं निक्षिप्य वल्लभासक्तो बभूव। अथैकदा हनूमान् दयितारतिलालसं विस्मृतसुहृत्कार्यं च तं समुपेत्य प्रोवाच । किष्किन्धेश ! महाशया विपुलं पदं समासाद्य संपदं मित्रोच्छिष्टसुखोत्सवां मन्यन्ते । जगति रत्नभूम्यादिलाभेभ्योऽपि मित्रलाभः श्रेष्ठोऽस्ति । य आत्मकार्यादपि मित्रकार्यं गुरुतरं मन्यते स उत्तमः सुहृदस्ति । यः स्वकार्यं साधयन् मित्रकार्यमपि करोति स मध्यमश्रेण्याः सखाऽस्ति । यश्च न स्वार्थं साधयति न च परमार्थं तस्य गणना मनुष्येषु न विद्यते । सज्जना व्यवहारे सदाचारं विभवे मित्रं शक्तौ च परोपकारं न विस्मरंति । यथोत्तमक्षेत्रे बीजमुप्तं बहुगुणं फलति तथा कृतज्ञे उपकारः । जगति त एव धन्या ये स्वल्पमप्युपकारं मेरुतुल्यं गणयित्वाऽपकारं च न मन्यन्ते । राजन् ! राघवेण यत्ते कृतं तत्कार्यकाल एष याति । यद्यपि स महानुभावो महतीं विरहवेदनां सहते । तथापि स्वयं त्वान्न प्रेरयति । प्रायो महाशयास्तु दुष्करेष्वपि परकार्येषु सततोदिता भवंति । किन्तु स्वकार्यसमये प्रार्थनाभंगभयान्मौनमेवावलंबंते । एषा निःसंख्या हरिवाहिनी रामकार्यार्थं समुद्यताऽस्ति। वयं विधेयास्त्वं च नाथः पुनः कथं सुयशोदुर्लभम् ? निशम्यैतद्धनुमद्वचनं कपीश्वरो बाढमित्युक्त्वा सपदि सेनानायकं नीलं समाजुहाव । ततः समायाते सेनापतौ कपीश्वरः प्रोवाच । सेनाध्यक्ष ! शैलद्वीपान्तचारिणां कपीनां निःशेषं कपिसैन्यमत्र समायातु । पूर्णमासी परोऽवधिरस्ति। यो ममाज्ञां न प्रतिपालयिष्यति । स चौरवद्दण्ड्यो भविष्यतीत्यादिश्य कान्तासंगमोत्सुको हरीश्वरोऽन्तःपुरं विवेश । अथ गौरीपतिगलश्यामले जलदागमे व्यतीते रामस्य विरहशोकदा शरत् प्रादुर्बभूव । ततो वृष्टिच्छेदविभक्तासु दिक्षु नीले नभस्तले च संजाते जनतानयनानंददायिनी कान्तिराजगाम । तस्मिन्नवसरे हंसकाशकुमुदसप्तच्छदचन्द्ररश्मिभिः शुभ्रीकृता अपि दिशः काकुत्स्थस्यैव कालतां ययुः । ततो विबोधितेषु कमलेषु भ्रमरस्तुतिपाठकैः शिंजानकलहंसनूपुरा लक्ष्मीः संचचार । वने शिखण्डिनः संसाराऽसारतां विचार्यैव मौनव्रतास्तस्थुः । एवं हंसहासां शशिवदनां शरदं च समालोक्य रामः सौमित्रिं जगाद । भ्रातरियं शरत् साधुसेवेव सम्पूर्णफलशालिनी सज्जनमैत्रीव च विमलमानसा विभाति । अगस्त्योदयेनैषा विषं निर्विषं कुरुते । किञ्च दुःखिते मयि तु विषं वर्षति । वत्स ! यथा प्रावृट् तथा शरत् । नाऽत्र भेदं पश्यामि । सर्वमार्तस्य दुःसहमिति कविजनवचनमक्षरशः सत्यम् । कर्णे गेयं मालां गलेऽङ्के प्रियां मुखे च सुरां कृत्वा स सखाऽपि सुग्रीवो सत्कार्यपराङ्मुखोऽभवत् । संसारेऽस्मिन्

सविभवं ललनाभोगसौभाग्यं परकार्यानुरोधेन कोनु त्यक्तुमुत्सहते ? स्वकार्यतात्पर्यवतां परोपकारश्लथचेतसां दुरात्मनां च जन्म धिक् । अयाचितोपकाराणां प्राणैरप्युपकारिणां महात्मनामेव परचिन्ताकुलं मनो भवति । ये पापाः परोपकारिणां सुहृदां पराङ्मुखा भवन्ति तेषां मांसं क्रव्यादा अपि न खादंति । लक्ष्मण ! त्वमितः किष्किन्धां गत्वा सुग्रीवं वद । वियोगिनो मम चत्वारो वार्षिका मासा याताः । कथमद्याऽपि तव स्मृतिपथं वयं नायाताः ? तदेवेदं दीप्तं धनुः स एवाऽयं बाणः । यदि ते वालिनं द्रष्टुं मतिर्जाता तदा तु समुच्यताम् । निशम्यैतद् भ्रातृवचनं तप्तमानसो लक्ष्मणः प्रोवाच । आर्य ! एषोऽहं चपलस्य कपेः पुरीं व्रजामि । प्रभो ! त्यक्तमर्यादं सौजन्यव्यंजनं च तं शठं ममैते तीक्ष्णशरा एव तव संदेशं कथयिष्यंति । एवं क्रुद्धस्य लक्ष्मणस्य वचः श्रुत्वा विचारव्यस्तमानसो रामस्तमवदत् । सौमित्रे ! तस्मै मा क्रुधः । स एवापवादभागस्तु । यतः सन्तः कृतापराधेऽपि प्रसादमधुराशयास्तिष्ठंति । साधवोऽनार्यवृत्तमार्यवृत्तेन, मिथ्याभाषिणं सत्यभाषणेन रिपुमपि च महोपकारेण वशीकुर्वंति । तच्छ्रुत्वा बाढमित्युक्त्वा च लक्ष्मणो वानरगणरक्षितां किष्किन्धां जगाम । सोऽथ निशानाथकांतिसंतानतस्करं सुग्रीवमंदिरं समवाप्य किन्नरयोषितां गीतं शुश्राव । ततो लक्ष्मणः सुग्रीवस्य विलासितां रामस्य विरहव्यथां च संस्मृत्य रुषा जज्वाल । अथ सज्जकार्मुकं ताम्रलोचनं च तं दृष्ट्वा सहसा कपयस्तं पर्यवारयन् । ततो वानरसैन्यै राजवर्त्मनि निरुद्धे ज्याघोषं सिंहनादं च श्रुत्वा युवराजोऽङ्गदस्तत्राऽऽजगाम । सोऽथ सहसा बोद्धुमुद्यतं लक्ष्मणं दृष्ट्वा तूर्णं सुग्रीवाय वृत्तान्तं निवेदयामास । अत्रान्तरे व्योमसर्पिणा शब्देन चकिता तारा सुखासक्तं सुग्रीवं विबोधयामास । ततः प्रत्युत्पन्नमतिः सुग्रीवो नलनील सुषेणहनूमद्भिर्मंत्रिभिः । सह भविष्यं चिन्तयामास । अथ वायुतनयः संदेहान्दोलिताशयं तमुवाच । वानरराज ! सर्वथैव राघवानुजः प्रणिपत्यैव प्रसाद्यः । उक्तं च । कान्ताप्रणयकोपे मित्रप्रसादने च महतामपि विनयावनतः शिरः शोभते । राजन् ! पूर्वोपकारिणा रामेण यत्ते कृतम् । तदर्थे तव जीवितव्ययोऽपि स्वल्प एव । किं बहुना । उपकारकणस्तावत् सतां भारायते । यावत् प्रत्युपकारेण तेनैव तारितो न स्यात् । निशम्यैतत्पवननंदनवचनं सूर्यसुतः सत्यमुक्तं भवतेति प्रत्यवदत् । लक्ष्मणः केन कारणेन कुपितः इत्यहं न जानामि । सखे ! सौमित्रेः कोपनिदानमान्विष्यताम् । नह्यविज्ञातविषये प्रतिक्रिया प्रवर्तते । रामात्तदनुजाद्वापि मम भयन्न हि । विद्यते । यतोऽदोषे कुपितः सुहृत् किं करिष्यति ? संसारे मित्राणि च धनानि महता कष्टेन लभ्यन्तेऽ-

तिप्रयत्नतो रक्ष्यन्ते च । अवज्ञोपेक्षिते प्रेम्णि पुनः सन्धानं दुष्करम् । स्फुटिते मणौ जतुलेशेन संश्लेषः कथं तु जायते ? किंतु मृणालीनालपेशलं सौहार्दमतिशयाकृष्टं त्रुट्यति हठाश्लिष्टे च विपद्यते । इदं मे चेतो दहति । यदसामान्योपकारिणो रामस्य जीवताऽपि मया नोपकृतम् ? निशम्यैतत्सुग्रीववचनं मारुतिः प्रोवाच । कपिपते ! मित्रोपकारविरह-व्याकुलस्य तव यशः प्रणयदूतिकैषा चिन्ताऽतिशयेन शोभते । सखे ! श्लथाम्बुदस्तनी शरत्तु दृश्यते । किन्तु यात्राकालेऽपि तवोद्यमो नाऽवलोक्यते ? प्रियाविरहतप्तेन रामेण विसृष्टोऽयं लक्ष्मणोऽत्र समायातः । तमनुनयेन तूर्णं प्रसादयेति निगद्य पावनिर्विरराम । एवं मंत्रिमण्डलमध्ये मंत्रज्ञेन हनुमता प्रोक्तो हरीश्वरस्तथेत्युक्त्वा कालातिक्रमादतीव लज्जितोऽभूत् । अत्रान्तरे लक्ष्मणोऽन्तःपुरं प्रविश्य तत्र रम्यपर्यंके दयितासखं सुग्रीवं च समालोक्य भूयोऽति कोपात् कालाग्नितुल्यतां जगाम । ततः सुग्रीवः पुरो-धसा कृतातिथ्यं तं दृष्ट्वा संरंभगलितांशुकः सहसा समुत्तस्थौ । सोऽथ संवित्कालव्य-तिक्रमात् त्रपामेत्य तारारुमाभ्यां सह पुनः पुनः प्रणनाम । ततोऽवसरज्ञो हरीश्वरो गृह्यतामासनमिति प्रोवाच । तच्छ्रुत्वा लक्ष्मणोऽब्रवीत् । कपिपते ! दूताः कृतार्था एव सत्कृतिं भजन्ते । त्वमेव चिन्तय । यत् कार्यनिष्फलैर्दूतैः किम् ? हरीश्वर ! प्रियावि-रहार्दितो रघुपतिस्त्वां यदाह तत्तावच्छृणु । शाखामृग ! संविद्व्यतिक्रमं कृत्वा या कृत-घ्नता त्वया कृता सा किं समुचिता ? सन्मित्रं तदेव यन्निजसुखार्थं सखायं न वंचयति । यदसत्यं कुलं, स्वजनं, सुकृतं किं बहुना स्वात्मानमपि निहन्ति । तत् त्वया कथमंगी-कृतम् ? अहो ! विभवविषमूर्छिता जनाः सुहृत्स्वजनबान्धवानपि न पश्यंतीति महद्वैचित्र्यम् ? विप्रवधादीनां महापापानां निष्कृतिरस्ति । किंतु कृतघ्नस्य निस्तारो-नास्तीति प्रजापतिः स्वयं जगाद । एषा हरजटाजूटभ्रष्टगंगाजलैरपि धौता मही कृत-घ्नधारणमलं न मुंचतीति मन्ये । येन बाणेन बाली हतः स पंथाः संकुचितो नास्ति । संसारे-ऽस्मिन् प्रशांततेजसां परित्यक्तसर्वकार्याणां स्त्रीजितानां च जन्म धिक् । यथा कुरंगस्य गीतेन पतंगस्य च तेजसा नाशस्तथा तवाऽपि स्त्रीसंगेन प्रणाशः समुपस्थितः । सर्वे-षामेव योषितः संति । कस्य भोगा न वल्लभाः? किन्तु त्वत्सदृशो लम्पटः कोऽस्ति ? यो यातं कालमपि न वेत्ति ? एवं कोपाकुलालापे राघवानुजे ब्रुवाणे ताराधिपमुखी तारा लक्ष्मणं जगाद । रामानुज ! नाऽयं कपिपतिः परुषवचनार्हः । किन्तु सर्वथा तव प्रणयवानस्ति । रामभ्रातः ! अस्मादिन्दुसुंदरात्तव मुखाद्ये वचः स्फुलिंगाः पतितास्तेऽस्माकं कर्मविलम्बादित्यत्र नास्ति कश्चित्संदेहाऽवसरः ? नाऽयं सुग्रीवोऽसत्य-

वादी न शठो न कृतघ्नो न च दुष्टात्माऽस्ति किंतु रामकार्येषु योगीव ध्याननिश्चलो वर्तते । किम्बहुना । चंद्रिकाभरणे हर्म्येऽप्ययं काकुत्स्थचिन्तया सुखं न शेते । दाशरथे ! किं त्वं न जानासि । यत्पुरा जितेन्द्रियोऽपि विश्वामित्रो मेनकारतो भूत्वा प्रयान्तमपि विपुलं कालं न मेने । यत्र त्रिदशा अपि विवशा महामुनयोऽपि विमोहितास्तत्र प्रिया समागमे कस्य मनो न हि लीयते ? सुमित्रानंदन ! ते भ्रातुरयं दयितः सुहृत् खल-दलदहने सहायोऽस्ति । यथारामस्तथैवाऽयं कपीश्वरः पूज्यः । किम्बहुना । एष समरे दशास्यं हत्वा दुर्लभां सीतां समाहृत्य रामस्य क्षिप्रं प्रीत्युपायनं दास्यतीत्यत्र संदेहो नास्ति । यद्यपि रामस्य पुरः कः साहाय्ये समुपयुज्यते ? तथाऽपि प्रणयस्यैषा वचसि प्रभाविष्णुता ज्ञातव्येति मधुरं तारावचः श्रुत्वा कोमलस्वभावो लक्ष्मणः सहसैव प्रसादं जगाम । एवं ललनावदनांभोजानिर्गतेन मधुना प्रीतं लक्ष्मणमालोक्य सुग्रीवो भयं चिन्तां च तत्याज । सोऽथ रतिसंभोगलक्षणं कंठसक्तं माल्यं छित्वा सौमित्रं जगाद । सखे ! मे यशो नष्टम् । पुनराहृतं राज्यं गतम् । यदद्याऽपि मित्रकार्यं न कृतम् । हा निष्फलजीवितम्मान्धिक् । यस्य महानुभावस्य सप्तार्णवव्यापि यशोऽस्ति तस्य प्रतिक्रियां कर्तुमहं पामरः कथं शक्तः ? रघुवीर ! यश्च मोहाद् व्यतिक्रमो-ऽभवत् । तं ममाऽपराधं क्षमस्व । जगति कस्यानेकदोषदुष्टोऽपि काय इव सुहृत् प्रियो नास्ति । एवं कपिपतिवचनं श्रुत्वा राघवानुजः प्रोवाच । हरीश्वर ! सत्त्वसा-रस्य तव सर्वमेतत् समुचितम् । ममाऽपि शोकतप्तस्य परुषवचनं त्वया क्षन्तव्यम् । लोके व्यसनार्तस्य पादप्रहारमपि सज्जनाः सहंते । त्वमप्यार्यस्य दैवनिर्दिष्टः सखाऽसि । नूनं त्वया सहायेन हताराती रघुनाथः प्रियां कीर्तिमिव सीतां समवाप्स्यति । सखे ! त्वमितस्तूर्णमेव गत्वा प्रौढकोपानलाकुलमार्यं प्रसादय । यतस्त्वां विलोक्य समाश्वस्तः स मनाग्ग्लानिं त्यक्ष्यत्येव । एवं सुमित्रानंदनस्य वाक्यं श्रुत्वा तथेत्युक्त्वा च कपीश्वरः पवनात्मजं जगाद । महामते ! सर्वेषु कुलाचलेषु सागरेषु वनेषु निर्जनेषु द्वीपेषु च ये ये हरियूथपा निवसंति । ते ते त्वद्विसृष्टैर्दूतै-र्मदाज्ञया तूर्णमायान्तु । य कोऽपि मदमोहितो राजाज्ञामुल्लंघ्य नागच्छेत् । तस्मिन् क्षिप्रं दण्डो निनिपात्यताम् । इति कपीश्वरेणोक्ते हनूमद्वचनप्रेरिता दूतास्तूर्णं दिशः प्रदिशश्च ययुः । ततो विन्ध्याचलात् तिस्रः कोट्यः समाययुः । उदयाद्रेः कोटीनां शतानि समाजग्मुः । क्षीरोदकच्छकूलेभ्योऽपि निःसंख्याः कपिवाहिन्यः संप्राप्ताः । एतस्मिन्नेवान्तरे केचिन्माहेश्वरयज्ञभूमिं गताः । तत्र क्षुत्क्षमापहराणि सुधास्वादूनि च

फलानि दृष्ट्वाऽतीव प्रसन्ना बभूवुः । ततस्ते तानि समादाय वानरेन्द्राय समर्पयामासुः । अथ प्लवगेश्वरो महासैन्यं पुरस्कृत्य शिविकामारुह्य च राघवाचलं प्रतस्थे । सोऽथ माल्यवंतमासाद्य शिविकातोऽवतीर्य च पद्भ्यामेव रामचन्द्राभिमुखं ससर्प । अथ लक्ष्मणागमनं प्रतीक्षमाणो रामो हनुमत्प्रमुखैः सह ससौमित्रं ससैन्यं च सुग्रीवं दृष्ट्वा मानसीं विक्रियां तत्याज । उक्तं च । कृतागसि पुरः प्राप्ते सति सतां मन्युः सहसैव विलयमेति । महतां प्रियेषु कलुशं मनो दर्शनान्तं हि तिष्ठति । अथ रामो दूरविश्रान्तछत्रं बद्धाञ्जलिं च सुहृदं दोर्भ्यां गाढं परिष्वज्य प्रोवाच । स्वागतम् युष्माकम् । कृपया विश्रम्यताम् । राघवस्ततो सुखोपविष्टं तं जगाद । अपि विस्मृतमित्रस्य तव कुशलम् ? त्यक्तस्वपरकार्याणां केवलं च भोगाभिभूतानां राज्ञां विभूतयश्चिरसक्ता न भवंति । सखे ! प्रणयेनैवमुक्तोऽसि । अधुना यथोचितं क्रियताम् । वचसाऽनुद्गीर्णो हि मन्युर्न कथंचिदुपशाम्यतीति रघुपतिवचनं निशम्याऽपि सुग्रीवो रुषं परित्यज्य नम्राननो बभूव । ततोऽवसरज्ञः कपीश्वरोऽवदत् । मानद ! सर्वदस्य भवतो महिमाऽवर्णनीयोऽस्ति । संप्रति तव भृत्यस्य कार्यगौरवं दृश्यताम् । इदम्मे प्लवगसैन्यं सहसैव समायातम् । अतोऽप्यधिकतरं पुनः समुपैष्यति । भवान् प्रभुर्वयं च भृत्या दशास्यं हत्वा त्रैलोक्यमपि जेतुं शक्ताः । निशम्यैतत्सुग्रीववचनं काकुत्स्थस्तं समाश्लिष्य प्रोवाच । सखे ! सत्त्वशालिनस्तव नैतच्चित्रम् ? यतः सतां विभूतयः परोपकारायैव भवंति । यथा भास्करस्य प्रभा चन्द्रमसः कान्तिः पावकस्य दीप्तिः पृथिव्याश्च धृतिः परहिताय तथैव सतां प्रकृतिरपि परहितनिरता भवति । किम्बहुना । मया तु तदैव जानकी लब्धा शत्रवश्च निहताः । यदैव दक्षिणेन धात्रा त्वं सुहृन् मम समर्पितः । अत्रान्तरे तारापिता सुषेणः शतबलिः हनुमज्जनकः केसरी गवाक्षः पनसः सन्नादः शरभः विनतः गजः रुमण्वान् ऋषभः गवयः गंधमादनः मैन्दः द्विविदः तारः इन्द्रजानुः दधिमुखः कुमुदः दरीमुख विजयः दुंदुभिः रंभः संपाती जाम्बवान् नलः शतार्चिः शरगुल्मः वेगदर्शी महाहनुः सुनेत्रः उल्कामुखः अंगदः हनूमांश्च सर्वे एते ससैन्याः समागत्य सुग्रीवं प्रणम्य च तदादिष्टेषु देशेषु समुपाविशन् । अथ हरीश्वरो रामशासनमवाप्य विनतं नाम वानरयूथपं प्रोवाच । वीर ! त्वमितो गत्वाऽऽखण्डलमंडितां दिशं विचिन्त्य च रावणहृतां जनकात्मजां जानीहि । मार्गे गंगायमुनागोमतीकौशिकीतमसाश्चतीर्त्वा विदेहपुण्ड्रवंगांगकिरातादीन् देशांश्चापि विलोक्य ततः सुवर्णकुड्यपर्यन्तं जम्बूद्वीपस्य भूधरान् समीक्ष्य समुद्रद्वीपसंश्रयान्घोरान् सलिलचरानपि चिनुहि । अथ कालोदकं रक्तजलं च सागरं विलोक्य

तत्रत्यान् क्षपाचरानपि पश्य । ततोऽब्धिमध्यात् समुत्थितं महानीलं गोशृंगं च प्राप्य मंदेहानाम राक्षसा द्रष्टव्याः । ये प्रातः सूर्यार्घजलाद् भयमवाप्य जले पतंति । ततः शशांकधवलं क्षीरोदं पश्य । यत्रांशुमान्नाम रजताद्री रजतपादपो रजतांभोजनलिनी च विराजते । अथ घृतोदधिं गत्वा वडवानलं विलोकय । यः क्रोशतां जलवासिनामविरतं पयः प्राश्नाति । तत उदयाद्रिमवाप्य सौमनसं शृंगं समालोकय । यत्र वालखिल्या वसंति। भवद्भिस्तत्राऽपि सती सीता विदित्वा दृश्यताम् । ततस्तिमिरावृता प्राचीदिगगम्या । मयाऽस्मिन् सीतान्वेषणे परमावधिर्मासो नियतीकृतः । अतिक्रमणकारिणां परमो दण्डः शरीरमित्युक्त्वा तं विससर्ज । सोऽथ जाम्बवन्नीलांगदवायुजान् समाहूय प्रोवाच । भवद्भिर्दक्षिणाशा दृश्यताम् । नर्मदालिङ्गितो विन्ध्याचलोऽन्वेष्टव्यः । ततो वेगवती कृष्णा कावेरी वेत्रवती वायुमती देविकाऽपि च द्रष्टव्या । दशार्णनिषधपुण्ड्रकाद्या देशा अपि विलोकनीयाः । ततः श्रीखण्डमलयमहेन्द्रपर्वतानवलोक्य महोदधिरपि प्रेक्षणीयः । अथ समुद्रादुद्गतोऽन्यो गिरिर्वर्तते । यस्य रौप्यं शृंगमिन्दुर्हैमं च भास्करः सेवते । पारेसमुद्रं विद्युत्वान् नाम पर्वतोऽस्ति । तत उशीरभोजनामकः शैलोऽग्रे च कांचनद्रुमोऽस्ति । सर्वजन्तवो देहान्तकाले तत्रत्यान् वृक्षान् पश्यंति । ततः पितृलोकस्तस्याऽग्रे च यमपुरी विराजते । श्रीमान् धर्मराजो यत्र कनकवैडूर्यस्तंभभूरिप्रभां सभामध्यास्ते । ततः पुण्यतपसस्तृणाङ्गिराश्रमोऽस्ति । यस्मिन्ननेके कल्पवृक्षाः कल्पलताश्च प्रतिष्ठिताः संति । एतेषु प्रदेशेष्वपि तूर्णं विचित्य मैथिली ज्ञायताम् । अतः परमनालोकं जगद्वर्तते । कार्येऽस्मिन् मासोऽवधिः । तद्व्यतिक्रमी मे वध्यः । इदं महत्कार्यं हनुमत्स्कन्धविन्यस्तमास्ति । नूनं सुयशसा सह सफलतां यास्यति । निशम्यैवं सुग्रीवादेशं रामः प्रियालाभे हनूमत्येव शुभाशां बबंध । ततो रघुवरो मीनाद्याः प्रत्ययाय तस्मै निजनामाङ्कितमङ्गुलीयकं प्रादात् । ततो वायुनंदनोऽगदपुरःसरैर्वानरयूथाधिपैः सह रामसुग्रीवौ प्रणम्य दक्षिणां दिशं प्रतस्थे । ततः सुग्रीवः सुषेणमाहूय प्रोवाच । यत् त्वया सीतार्थे पश्चिमाशाऽन्वेष्टव्या । सिन्धुसौराष्ट्रबाल्हीककैकयकाश्मीरकाम्बोजपंचनदमरुदेशेषु चाऽन्विष्य सुमेरुकन्दरास्वपि विलोकनीया । ततः सिन्धुसागरसंगमेऽन्विष्य पुंनागकेतकवने शंखतालीवने चाऽपि सीता विचेतव्या । अथ तक्षशिलायां शाकले नगरे प्राग्ज्योतिषे पुरे चाऽपि दर्शनीया । ततो वराहशैलं समालोक्य सहस्रधाराख्यं गिरिमप्यवलोकय । अथ वरुणेन कृतास्पदे कनकाद्रिशृंगेऽस्ताचले चाऽप्यन्वेष्टव्या । ततः परो निरालोको लोकः । अस्मिञ्जानकीविचये सर्वेषामेव मासो-

ऽवधिः स्थिरीकृतः । एवं सुषेणं पश्चिमां दिशं संप्रेष्य कपिपतिः शतवलं प्रोवाच । भद्र ! त्वमितो धनदपालितां दिशं गत्वा तूर्णं जनकात्मजां विचित्य जानीहि । मार्गस्थान् रमणशकतुरुष्कम्लेच्छादिदेशान् विलोक्य हिमाचलं पश्य । यत्र विश्वकर्मनिर्मिताऽलकाख्या कुवेरपुरी विराजते । ततः क्रौंचागिरिं विलोक्य शिवप्रवर्तितां कुहटाख्यां नदीं समालोकय। अथ गन्धमादनप्रदेशं समीक्ष्य जान्हवीप्रपातमपि च पश्य। ततो वैतरणीं दृष्ट्वा च कार्तिकेयजन्मभूमिमपि विलोकय । अथोत्तरान् कुरून् दृष्ट्वा नीलनदीमवलोकय । यस्याः पारे स्वर्गोपमा मणिमयी च भूमिर्विराजते । ततश्चैत्ररथाख्ये वने क्षीरघृतापगाः पश्य । ततस्तिमिरावती गुहास्ति । यस्यामप्सरसो लीना दृश्यन्ते । ततः सोमप्रभैरुद्रैः कृतास्पदं सोमगिरिं द्रष्टुमर्हसि । यत्र राजर्षिमनोस्तपोवनमस्ति । ततः सर्वकामफलप्रदं शशिस्थानं गत्वा तत्राऽपि श्रीमती जनकजा ज्ञातव्या । मासावधिव्यपगमे । चिरकारिणो मे वध्याः । एवं वानरेश्वरः शतवलिं चाऽप्युत्तराशां विसृज्य निर्वृतो बभूव ।

एवं जवशालिषु सवगेषु गतेषु रघुनंदनः सुग्रीवं प्रोवाच । सखे ! त्वयाऽखिलो लोकः कथं दृष्टः ? निशम्यैतद्रामवचनं कपीश्वरो व्याजहार । रघुराज ! पुराऽहं वालिनाऽभिसृतो नानादेशयात्रामकरवम् । तच्छ्रुत्वा रामचन्द्रः स्वमित्रस्य देशाटनपाटवं पुनः पुनः प्राशंसन् । अत्रान्तरे मासपूर्तौ विनतो नाम कपिः पूर्वां दिशं विचित्य सीतामदृष्ट्वेव समाययौ । ततः शतवलिस्तथैवोत्तरामन्विश्य प्रत्यागतः । अथ सुषेणोऽपि पश्चिमाशां विलोक्य न्यवर्तत । ततो मैथिलीमनालोक्य निवृत्तेषु तेषु राघवो हनूमत्येव तद्व्यावृत्तामेकीभूतामाशां ववंध । अत्रान्तरेऽगदप्रमुखाः प्लवगा हनूमंतं पुरस्कृत्य रामकार्यार्थं विन्ध्यभुवं प्रापुः। ततस्ते गिरिगुहासु दुर्गेषु च विचित्य सहसा निर्मृगद्विपं गहनं विविशुः। तस्मिन्नवसरे तत्र दण्डिनामातिकोपनो मुनिरुग्रं तपश्चरन्नास्ते । पुरा तस्मिन्वने एतस्य दशवर्षीयः सुवो नष्टोऽभवत् । तच्छापात्तत् सर्वमेव वनं निर्जलमृगद्रुमं बभूव । ततस्ते कृच्छ्रेण तं देशं समुत्तीर्य यावदन्यद्वनं प्रविशंति तावन्मारीचतनयो महाकायस्तान् प्लवंगमान् भक्षयितुं समागच्छत् । एतदालोक्य महावीरोऽङ्गदस्तं तूर्णमाहूय मुष्टिनोरसि जघान । येन रुधिरोद्गारगद्गदस्वरः सोऽसुरो धरण्यां निपपात। एवं तस्मिन्हते ते बहुगह्वरं तद्वनमान्विष्य परिश्रान्ताः क्वचिदुपविश्य रामकार्यं चिन्तयामासुः । ततो हनूमांस्तानूचे । वीराः ! कृत्स्नेयं पृथ्वी विचिता । किन्तु कुत्राऽपि जनकात्मजा नाऽवलोकिता । परिश्रमोऽयं वृथैव सोढः । किम्बहुना । यत्नेन तृणान्यपि द्विधा कृत्वा

परीक्षितानि । यथा मंदभाग्याः संपदं नाप्नुवंति तथाऽस्माभिरपि सीता नासादिता । अधुना कालातिक्रमणेनाऽलम् । निशम्यैतत् पवनात्मजवचनं विचार्यांगदोऽब्रवीत् । लक्ष्मीरुद्योगिनं पुरुषसिंहमुपैति । निरुद्यमेभ्यः सिद्धोऽप्यर्थः प्रपलायते । सखायः ! पुनरपि जानकी विचेतव्या । अन्यथा विफलप्रयासानस्मान् सुग्रीवः किं कथयिष्यति ? वालितनयेनेत्यभिहिते सोत्सहा वानरयूथपा विन्ध्याचलमारुरुहुः । ततस्ते रोध्रवने सप्तच्छदवनेषु च सीतामन्विष्य कंदरासु जग्मुः । तेऽथ दूरमध्वानं गत्वा श्रमतृष्णानिपीडिताश्च भूत्वा जलं सीतां च युगपदन्वेष्टुं सयत्ना सहसा बभूवुः । ततस्ते स्निग्धद्रुमच्छन्नं गंभीरं च विलं प्रविश्य निरालोकं स्थानं प्रापुः । अथ परस्परमवष्टभ्य निःसंज्ञास्ते योजनमात्रं प्रदेशं च गत्वा भास्वरं पुरं ददृशुः । ततस्ते कचत्कांचनपादपे हेमाब्जिनीरम्ये च प्रदेशे हेमासनासीनां तापसीं दृष्ट्वा परमं विस्मयं ययुः । अथ तद्दर्शनगतक्लमैर्हनुमत्प्रमुखैश्च काऽसि ? कस्येति च पृष्टा रुद्राक्षमालाव्यग्रं पाणिपंकजं बिभ्रती प्रव्रजिता शशिद्युतिरिव च विराजमानां सा सस्मितमवादीत् । कपिवरा ! आसीत्पुराऽत्र मायानिधिर्मयो नाम दानवेश्वरः । प्रजापतिवरात्स सर्वमौशनसं धनं प्राप्य हेममयोद्यानेऽस्मिन् व्रतैरमरतां च प्राप्तुं चिरं यत्नवानभूत् । अथैकदा पुरंदरो हेमायामप्सरसि रक्तमानसं तं नष्टनियमवश्यतान्निनाय । ततस्तुष्टः प्रजापतिः सुरसुन्दर्यै हेमाया इदं दिव्यं हेमपुरं रत्नमंदिरसमेतं प्रादात् । स्वयंप्रभाख्याऽहं मेरुसावर्णिमनुपुत्री हेमाया दयितासखी भवनमिदं रक्षामि । इह मूलफलं भक्षयित्वा गतक्लमाः संतो भवंतोऽपि निजवृत्तान्तं वदन्तु । एतदाकर्ण्य प्लवगपुंगवा भुक्त्वा पीत्वा च समग्रं स्ववृत्तान्तमावेदयामासुः । ततो विस्मृतमार्गास्ते मासमात्रं तत्र स्थित्वा स्वयंप्रभादेशान्मीलितेक्षणास्ततः प्रतस्थिरे । साऽथ कारुण्यात् तान् स्वयमुत्तार्य स्वस्थानं प्रतिसमाययौ । अथ नेत्रे समुन्मील्य यावद्बिलान्निःसरंति तावत्ते पुरः कल्लोलमालिनं समुद्रं दृष्ट्वाऽऽश्चर्यसागरे निमग्ना बभूवुः । ततस्ते नदीवृन्दैरापूरितं वडवाग्निना निगीर्णोऽपि नोत्सिक्तं न च परिक्षीणाशयं महापुरुषाशयमिव निर्विकारं सरित्पतिं पुनः पुनः प्राणमन् । ततो हेमन्तं समुपस्थितं समालोक्यांऽगदो कपियूथपानब्रवीत् । सखायः ! सुग्रीवेण धृतोऽवधिर्मासस्त्वस्माकं विले यातः । सांप्रतं निष्फलक्लेशाविनष्टोत्साहसंपदां न इहैव सतां साधुवादोचितं तपोयुक्तमिति मन्ये । अहो ! भर्तृपिण्डोपजीविभिरस्माभिरियान् क्लेशोऽनुभूतः । किन्तु संसारोच्छित्तये तच्छतांशोऽपि न कदाचित् ? जगति संतोषशृंगस्थास्त एव महात्मानो धन्या ये तृष्णाकल्लोलिन्यां पतित्वा

नानोपाधीन् न सहते । प्रथमं तु सुग्रीवः प्रकृत्यैव तीक्ष्णोऽनंतरं च रामेण विवर्धितोऽस्मिन्नपराधे नूनं नः प्राणेषु प्रहरिष्यति । तेनेदं यौवराज्यं स्वेच्छया मम न दत्तम् । किन्तु रामवचसा यंत्रितेन समर्पितम् । सोऽत्र प्राप्यावकाशं मय्येव प्रहरिष्यति । यत्र प्रणामेन प्रभुः प्राप्यो भवति तत्रत्यमर्थलाभं त्वहमवमानशतैः समं गणयामि । यस्य तरुण्यो विभूतयश्च नाऽन्यमुखावलोकिन्यः स एव जातस्तस्यैव च यशो जगति विश्रुतं भवति । वियोगरोगैर्भोगैः किम् ? विप्रियमयैः प्रियैः किम् ? क्षणान्ताभिः कान्ताभिश्च किम् ? यदि मानोन्नतं मनो विद्यते । निशम्यैवमंगदवचनं साश्रुलोचना वानराः प्रशंसन्तोऽस्य संतोषं प्रत्यभाषंत । युवराज ! यत् त्वं वदसि । तदक्षरशः सत्यम् । सज्जनाः श्रमवन्ध्ये वामे च विधौ वैराग्यमेव समवलम्बन्ते । किम्बहुना । अस्मांस्तु तदैव निहतान् विद्धि । यदा स कालत्रिशूलोपमं भ्रूभंगं दर्शयिष्यति । एतदाकर्ण्य पुनर्वालिनंदनो जगाद । माऽभैष्ट । वयमस्मिन्नेव विलदुर्गे वत्स्यामः । अत्र रामलक्ष्मणसुग्रीवाणां गतिर्नास्ति । देशोऽयमलंघ्यो बहुमूलफलोदकश्चाऽस्ति । किम्बहुना । शक्रोऽप्यत्र सुग्रीवो युद्धार्थमागत्य भग्नमनोरथत्वमुपयास्यति । निशम्यैतद्वालिसूनुवचनं पावनिः सुग्रीवानुरक्तवचसा क्षणमचिन्तयत् । अहोनु सुग्रीवेण सहानुगै राज्यं हारितम् ? ततः सर्वशास्त्रविशारदो मारुतिर्बुद्ध्या बृहस्पतिसमं विक्रमे च पितृसदृशमङ्गदं प्रोवाच । वीरवर ! वानरराज्येऽस्मिन् त्वत्सदृशश्चतुर्दशगुणसम्पन्नः कोऽस्ति ? किम्बहुना । वेधाः कुलशैलानां सारेणैव त्वां ससर्ज । ये सेवका यथा स्वदेशे वाङ्मात्रेणाऽपि सत्कृता स्वामिनं सेवन्ते । तथा विदेशे रत्नराशिभिरपि न परिचरंति । युवराज ! पदस्थेन सुग्रीवेण सहापदस्थस्य तव विरोधो न क्षमः । अपरं च । वज्रिवज्रावदारितमेतद्विलदुर्गं वस्तुतो दुर्गं नास्ति अत्र लक्ष्मणबाणानां स्वेच्छाप्रणयिनीगतिर्भवितुमर्हति । देशभंगे तेऽर्थः कुतः ? हीनार्थस्य दासाः कुतः ? निस्सहायस्य चलिततृणादपि त्रासः समुपजायते । सर्वे पदस्थस्यैव सुहृदो भवंति । लोकाः पदस्थमेव संश्रयंति । च्युतं मित्रं रक्तोऽपि कमलाकरो नाऽनुसरति । सुग्रीवोऽस्त्यपुत्रः । त्वं तु सोदरसुतत्वात्तस्य धर्मतः पुत्रोऽसि । वीर ! क्रमागतं राज्यं सहसा चरणाहतं मा कृथा इति वायुपुत्रोक्तं वचः श्रुत्वाऽङ्गदः प्रोवाच । प्राग्येन ज्येष्ठभ्रातुर्विलं शिलया पिहितं । संप्रति तेन सुखस्थेन राज्यप्रदो रामोऽपि किं न विस्मृतः ? कोबुद्धिमांस्तस्मिन् कुटिलाचारे विश्वासं याति । यो विहाय संकोचं भ्रातृरुधिरदिग्धां लक्ष्मीं समश्नुते । भवता यदुक्तं तन्मह्यं न रोचते । यतो मे मनो राज्यकामं नाऽस्ति । तुभ्यं स्वस्त्यस्तु । अह-

न्त्विहैव शरीरं त्यक्तुमुद्यतोऽस्मीत्युक्त्वांऽगदः कुशमास्तीर्य जलमुपस्पृश्य च मौनं जग्राह। एतदालोक्य सबाष्पनयनाः सर्वे वानरा भूयो भूयोऽगदं प्रशशंसुः। अत्रान्तरे जटायुषो ज्येष्ठभ्राता संप्रातिर्नामगृध्रराजो विन्ध्यकन्धरान्निश्चक्राम। सोऽथ वानरबलं दृष्ट्वा प्रहृष्टः सन्नचिन्तयत्। अहोनु कालेन धात्रा मम भोजनं निर्दिष्टमित्याकलय्य शनैः शनैः स तं देशं समाजगाम। यत्र सर्वे वानरा म्लानमुखाः किंकर्तव्यविमूढाश्चाऽतिष्ठन्। एतदालोक्यांगदो वानरान् प्रोवाच। सहृदयाः! पश्यत पश्यत। राघवाज्ञाव्यतिक्रमात् साक्षात्कालोऽयमस्मान् संहर्तुं समुपस्थितः। हा! स्वामिकार्यं न कृतमस्माभिः। किन्तु वृथैवैतावान् समयो यापितः। इदं कस्य कर्मणः फलमिति चिन्तयन्नपि नाऽवगच्छामि। लोकेऽस्मिञ्जटायुरेव धन्यो गतासुरपि जीवति। किं बहुना। स महाशयः पवित्रतमेऽस्मिन् रामकार्याग्नौ निजां तनुं हुत्वाऽक्षयां कीर्तिं समाससाद। एतदाकर्ण्य भ्रातृवत्सलः संपातिर्गद्गद्गिरा प्रोवाच। हा! रामकार्ये केन ममानुजो निहत इति गृध्रराजेनोक्तेंऽगदो निखिलं रघुनायकचरितं तस्मै निवेदयामास। तच्छ्रुत्वा साश्रुलोचनः संपातिस्तमवदत्। हा! मम प्रियो भ्राता जटायू रावणेन हतः। जरसार्दितोऽहं तमद्य हन्तुं न सर्वथा शक्नोमि। शरीरिणां प्रतिमाप्रभावविभावाः कलापाकपरिम्लानाः स्मृतिशेषतां यान्ति। मोहः प्रज्ञाबलं हन्ति। जरा यौवनं पिबति। मृत्युर्जीवितं गृह्णाति। किन्त्वेषाऽनित्यता सर्वमेव समश्नाति। पुरा वृत्रासुरवधेऽहं जटायुश्च स्पर्द्धया रविरथमार्गेण गगनेऽभ्यद्रवताम्। मध्याह्ने चण्डरश्मिप्रतापेन जटायुः सहसा विवशो बभूव। एतदालोक्य कृपाकुलोऽहं पक्षाभ्यां तं समाच्छादितवान्। ततो मूर्छितः स जनस्थाने निपपात। तस्मिन्नवसरे मया दिवाकरो मेरुलक्षप्रमाणो दृष्टः। शैला वल्मीकसन्निभा नद्यश्च सूत्रोपमा दृष्टाः। ततोऽहमपि दग्धपक्षश्चेतनां गमयित्वा विन्ध्याचलेऽपप्तम्। अथ षड्रात्रेण किंचित्प्राप्तसंज्ञं मरणे कृतनिश्चयं च मां कृपानिधिर्निशाकरः समीपमेत्य प्रोवाच। विहंगम! कृच्छ्रेऽप्यस्मिंस्त्वया शरीरन्न त्याज्यम्। त्वं रामचरितं श्रुत्वा पुनरपि पक्षवान् भविष्यसि। युवराज! तद्दिनादारभ्याऽहमत्र स्थितोऽस्मि। रावणेन विहायसा हृता सीता मयाऽवलोकिता। निशम्यैतत्संपातिवचनं सर्वे प्लवंगमाः क्व सा देवी दृष्टेति पप्रच्छुः। ततो गृध्रराजः कपिवरैः सह भ्रातुर्जलक्रियां कृत्वा शोकार्तस्तान् प्रत्यभाषत। भद्रमुखाः! अस्ति सुपार्श्वो नाम मम पुत्रः। स प्रत्यहं भोजनं समानीय मह्यं प्रयच्छति। एकदा स दिनान्ते समायातः। क्षुत्कोपतप्तेन मया वेलातिक्रमकारणं पृष्टः। सोऽभ्यभाषत। तात! महेन्द्रगिरिशिखरेऽद्य मयाऽतिविषमा घटना दृष्टा। यदंजनाचलतुल्यो दशाननो

ललितलोचनां नारीं हृत्वा गतवान् । सा रामरामेति क्रोशन्ती तथा हालक्ष्मण ! हालक्ष्मणेति च विलपन्ती साश्रैः सर्वैश्च व्योमचारिभिरालोकिता । तस्मिन्नवसरे रक्षोयुद्धाय ममाऽप्युद्यतं मनोऽभूत् । किन्तु स मायावी सान्त्वविनयैर्मामभिवंचयत् । पितः ! एतन्मे विलम्बकारणम् । ज्ञात्वैवं क्रोद्धुं नार्हसि । निशम्यैतत्सुतवचनं कुपितोऽहं तमवदम् । धिक् त्वाम् । यत् प्रमादिना त्वया दशरथस्नुषा न रक्षिता । श्रीरामलक्ष्मणपिता दशरथस्तु मम सहृदयः । तत्सुतौ मेऽपि सुतोपमौ स्त इत्यभिधाय चिरचिन्तापरोऽहमतिष्ठम् । किम्बहुना । श्रीरामकथाप्रभावादस्मिन्नेव क्षणे मम नवीनौ पक्षौ जातौ । सर्वे वानराः पश्यंतु । अहमिहस्थ एव लंकायां जनकात्मजां पश्यामि । किन्तु वार्द्धक्याज्जलाधिलंघने मम शक्तिर्नास्ति । स्वस्ति वोऽस्तु । एषोऽहमितो हिमालयं व्रजामि । सर्वे वीरवानराः सागरं समुत्तीर्य क्षिप्रमनिवारिताः प्रविशन्त्विति व्याहृत्य संपातिर्वियत्युत्पात । अथ प्लवंगमा जलनिधितीरमुपगम्य सलिलकल्लोलमालावलयिता दिशो विलोक्य च विस्मयाविष्टा बभूवुः । किंस्विज्जगज्जलमयं ? दिशः क्व ? क्वचाऽस्माकं जन्मभूमिरिति चिन्तयन्तस्ते निशि निद्रान्न लेभिरे । ततः प्रभातेऽब्धिसंदर्भाविटिताशयाँस्तानंगदोऽब्रवीत् । सहृदयाः ! धीराणामपि वः कोऽयं कातरोचितः संरंभः ? भवाद्भिः सत्त्ववसतिर्गभीरश्चैष जलराशिः सर्वथाऽलंघ्य इति निश्चीयते किन्तु पौरुषोत्साहशालिनाम्महात्मनां किमप्यसाध्यं नास्ति । संप्रति यः कोऽपि महानुभावः स्फुटस्फाटिकगिरिस्फीते यशसि सादरः स एवाऽस्य सागरस्य लंघने सुदृढं मनः करोतु । श्रीराममित्रस्य सुग्रीवस्य हितं स्वशक्तिं च विचार्य यत् समुचितं तदेव क्रियतामितियुवराजेनोक्ते विपुलरंहसां मध्ये किंचिल्लज्जानतशिरा गजोऽब्रवीत् । वीराः ! अहं तु दशयोजनीं गन्तुं शक्नोमि । तच्छ्रुत्वा गवाक्षोऽवदत् । मम गतिरस्माद् द्विगुणा । ततः शरभस्त्रिगुणां ऋषभश्चतुर्गुणां गंधमादनः पंचगुणां मैन्दः षड्गुणां द्विविदः सप्तगुणां सुषेणोऽष्टगुणां च शक्तिं जगाद । एतदाकर्ण्य वृद्धो जाम्बवाञ्छनैरुवाच । पूर्वमस्माकमपि कश्चिद्गतिविक्रमोऽभवत् । किन्त्वद्य जराजीर्णत्वात् शीर्णतारुण्यविभ्रमाश्च संजाताः । जरेयं यौवनपद्मस्य तुहिनाहतिर्बलद्विपेन्द्रस्य च कालसिंहनखावली विद्यते । किम्बहुना । यथा प्रौढा वृद्धं पतिं वशंवर्तिनं करोति । तथैषा जराऽपि तारुण्यतस्करी वर्त्तते । अहमजाते गरुडेऽवाहनं हरिमिवृत्तेऽमृतमंथने चाऽचन्द्रचूडमीशानमपि स्मरामि । मया बहवो देवासुररणोत्सवा दृष्टाः । येषु शूरैस्त्रैलोक्यविजयश्रियो वंदीकृताः । शिथिलविग्रहोऽप्यहं साम्प्रतं दशोनं नवोनं वा योजनानां शतं सहसा गंतुं शक्तोऽस्मि । यद्यतीतचरिते वृद्धे विपुलं च बलं वक्तुं

समुद्यते किम् बाला न हसंति ? सांप्रतं मम वचः श्रूयताम् । पुरा यदा वलियज्ञे विष्णुस्त्रैलोक्याक्रमणं व्यधात् । तदा मयाऽपि क्षणात् त्रिसप्तकृत्वः पृथिवी प्रदक्षिणीकृता । किम्बहुना । प्रातरुदयाचलान्मुहूर्तेनाऽस्ताचलं गत्वा गन्धर्वकिन्नरजुष्टं स्फटिकाचलमपि संप्राप्तवान् । अद्य प्रवयसो मम तादृशी शक्तिर्नास्ति । यतः कालशक्तिर्हि भावानां सदा सर्वस्वं ग्रसते । एतदाकर्ण्य नराख्यो वानरः प्रोवाच । भो सखायः ! अहं त्रिभीरहितं योजनानां शतं प्रयामि । एवमंगदान्तिके ब्रुवाणेषु लवंगमेषु धैर्यगंभीरसागरो हनूमान्नकिंचिदुवाच । ततोऽगदोऽब्रवीत् । यद्यप्ययं मकरालयो दुस्तरस्तथापि योजनशतं त्वहं तर्तुंशक्नोमि । सखायः ! प्रत्यावर्त्तो श्रमोऽवश्यं भविता । किन्त्वस्मिन् रामकार्ये जीवितन्न गणयामि । निशम्यैवमंगदवचनं जाम्बवान् प्रत्यवदत् । युवराज ! जीवत्सु प्रेष्येष्वस्मासु स्वयं प्रभुः कथं तत्र याति । त्वं त्वस्य कार्यवृक्षस्य मूलमसि । वयं च पुष्पफलोपमाः स्मः । मूले गते सर्वं गतम् । तस्मिन्नक्षिते च सर्वमेव सुरक्षितं भवति । योऽस्मासु सद्यः सागरं तरिष्यति । महासत्त्वं तं सम्यगहं जानामि । किन्तु मोहितैरिव सोऽस्माभिर्विस्मृतः । दूरस्थः पावको विज्ञायते । किन्तु मस्तकस्थोऽपि चूडामणिः स्वचक्षुषा नाऽवलोक्यते ? एष प्लवगपुंगवो वज्रांगः सागरलंघने शक्तः । हनूमन् ! कार्यकालेऽस्मिन् कथम्मौनमवलम्बसे ? यथा रत्नैर्महोदधिस्तथा त्वमपि गुणैः सर्वभूतेभ्यः श्रेष्ठोऽसि । पुरा या पुंजठाख्याऽप्सरा आसीत् । सैवाऽञ्जना केसरिणः पत्नी बभूव । साऽथ स्वेच्छारूपिणी वानरी दिव्यं स्वरूपं धृत्वाऽम्बुदश्यामे काले गिरितटे विचचार । ततः प्रभंजनोऽस्याः स्वरूपं दृष्ट्वा सहसा काममोहितोभूत् । सोऽथ तस्याः पीताम्बरं हृत्वा तां परिष्वज्य च मूर्छितोऽभवत् । ततः स क्रुद्धां पतिव्रतां सविनयं प्रोवाच । सुभ्रु ! मया त्वं मनसैव भुक्ताऽसि । तस्माद्दोषशंकां मा कुरु । त्रैलोक्यविश्रुतगुणस्ते तनयो भविष्यतीति पवनेनोक्ते तेजोनिधिस्त्वं जातोऽसि । त्वं वायुतुल्यगतिर्महावीरश्चाऽसि । अथैकदा भवान् फललोभात् प्रभाकरं समुदितं समादातुं दिवमुत्पतितवान् । ततः शैलाग्रात् पतितस्य तव वामो हनुरभज्यत् । येन त्वं लोकेषु हनूमानिति विश्रुतोऽसि । स एव त्वमस्मिन् कार्यारंभेऽस्मभ्यं यशोरक्षणदक्षिणां दातुमर्हसि । भवाद्विधानां महात्मनां जन्म पूर्वपुण्यफलं, स्फीतयशः कर्मफलं सिद्धिश्च सुहृत्प्रीतिफलाचाऽस्ति । यशोनिधे ! शीघ्रमुत्थाय रामकार्ये साहाय्यं कुरु । यतो महान्तो महत्स्वेव कार्येषु महत्त्वं दर्शयन्ति । एवं जाम्बवतो वाक्यं समाकर्ण्य पवननन्दनो महोदधिश्चन्द्रोदय इव सहसा व्यवर्धत । सोऽथ लाङ्गूलं समुद्धूय जंभारंभायतामुखः स्फुरत्स्फारांशुजालस्य दिवाकरस्य

शोभां बभार । ततः प्रसन्नाननः सोऽब्रवीत् । सुहृदयाः !

षड् दोषा पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्रा भयं क्रोधं आलस्यं दीर्घसूत्रता ॥

एषोऽहं रामकार्यार्थे भवद्वचः शिरोधार्य मकराकरं तरामि । किंबहुना । भुजबलादट्टालमालिनीं लंकामवटे प्रक्षिपामि । पुरा प्रभासे गजो नाम तापसकण्टको न्यवसत् । स मुनिहितैषिणा मम पित्रा केसरिणा हतः । ततः प्रसन्नो महर्षिर्भरद्वाजो मारुतप्रभावेण तव महीवीरः पुत्रो भविष्यतीति वरं प्रादात् ।

अपुत्रो लभते पुत्रं निर्धनो धनवान् भवेत् ।
हतायुश्च शतायुः स्यान्मुनीनामुपसेवनात् ॥

सोऽहं पितृतुल्यपराक्रमो मुनिजनवराज्जातस्त्रैलोक्यलंघनेऽपि समर्थोऽस्मि । एष महोदधिस्तु कियान् ? एषा बलेनापीडिता धराऽपि वेगादुत्पततो मम पादयोर्भारं सोढुं न शक्ता । अतोऽहं महेन्द्रगिरिमारुह्य सागरं लंघयामीत्युक्त्वा सर्वैर्वानरैः सह तं गिरिमारुरोह ।

रामरामेति ये लोका जपंति श्रद्धया सदा ।
तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥

ततः सिद्धर्षिचारणैः सह देवास्तं जलधिलंघनोद्यतं द्रष्टुं तत्र समाययुः । तस्मिन्नवसरे तस्य चरणाभ्यान्निपीडितः स गिरिर्ननाम । येन फुल्लशबलास्तरवः समनः शिला शिलाश्चाऽपि सागरे निपेतुः । एवं मूलाद्विचलिते तस्मिन्पर्वते गुहागृहस्था दैत्यांगनाः कंपिता विद्याधर्यश्च चकिताः सागरवासिनो वृद्धमकराश्च मथनायासशंकिनो बभूवुः ॥

मनोजवं मारुततुल्यवेगं, जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं, श्रीरामदूतं शरणं प्रपद्ये ॥

इति श्रीगद्यरामायणे किष्किन्धाकाण्डं समाप्तम् ।



श्रोन्नमः शिवाय ॥

# अथ सुन्दरकाण्डं समारभ्यते ।

———:–०–:———

दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ॥

अथ हनूमान् शक्रार्कविष्णुरुद्रचतुर्मुखान् प्रणम्य मनसा सानुजं राममपि प्रणनाम । ततः स ज्ञातीन् संपरिष्वज्य प्रदक्षिणां कृत्वा च भूतेभ्योऽपि नमस्कारं चकार । सोऽथ शिरसा सागरं सरितश्चाऽपि नमस्कृत्य सहसोत्पपात । ततो विधूताम्बुधिः स कृत्स्नं नभः पिबन्निव दिग्वधूः समालिङ्गन्निव गतं वर्त्म क्षिपन्निव जगाम । अत्रान्तरे सागरः सगरवंशसमुद्भवस्य रामस्य तं दूतं दूरं गन्तुमुद्यतं ज्ञात्वा तद्विश्रान्तिं चिन्तयामास । सोऽथ सलिलान्तरवर्तिनं गौरीगुरुगिरिसुतं मैनाकं सत्वरं समुपेत्य प्रोवाच । अद्रिराजसुत ! कामरूपस्त्वं वज्रिणा पातालवासिनां दैत्यानामारब्धं पिधातुमत्रन्यस्तोऽसि । श्रीरामकार्यार्थं मारुतिर्विहायसाऽशु प्रयाति । अतोऽस्य विश्रान्त्यै त्वं स्वशिखराणि दर्शयितुमर्हसि । निशम्यैतत् समुद्रशासनं स हेमरत्नमयो गिरिः समुद्ययौ । यत् प्रभाभिर्नभः कांचनच्छायमभूत् । एतदालोक्य कपीश्वरस्तं हेमशिखरं विघ्नं मत्वा स्वोरः पवनवेगेन सद्यस्तं खर्वशेखरं विदधे । एवं तस्याऽतिमात्रं वेगं समालोक्य दिव्यदेहो गिरिर्विनद्योच्चैर्मुदा तमवदत् । पवननंदन ! सगरान्वयगौरवः सागरस्तव विश्रान्त्यै मां विसृज्य प्रियातिथ्यसफलां प्रीतिमभिलषति । पुरा वज्रिणा महीधराणां पक्षेषु कृत्तेषु त्वत्पित्रा मातरिश्वना स वृद्धोऽहमिह क्षिप्तः । स त्वं कृतोपकारस्य तस्य तनयस्तत् समोऽसि । महोदधिप्रणयान्मे मूर्ध्नि स्थातुमर्हसि । निशम्यैतत् पर्वतराजसुतवचनं हनूमान् प्रत्यभाषत । भ्रातः ! मया सागरस्य तथा तव च पूजा गृहीता । मे कश्चिदपि क्लमो नास्ति । अतो मिथ्याकालात्ययेन किमित्युक्त्वा मैनाकं चांऽगुल्यग्रेण स्पृष्ट्वा च तूर्णं जगाम । अथाऽनेन कर्मणा परितुष्टो वज्री मैनाकस्य वरं प्रादात् । येन स चिरार्जितं घोरं वज्रभयं तत्याज । अत्रान्तरे देवगणविसृष्टा सुरसा करालरूपं धृत्वा हनूमतो बलं ज्ञातुं सहसा तत्र समाययौ । साऽथ मुखं विवृत्य मारुतिं प्रोवाच । दिष्ट्याऽद्य भोजनं पश्यामि । एतदाकर्ण्य हनुमान्

प्रत्यवदत् । भद्रे ! किंचित्कालं प्रतीक्षस्व । रामकार्ये कृते स्वयमहमभ्येत्य तव भक्ष्यतां यास्यामि । तच्छ्रुत्वा साऽब्रवीत् । प्लवंगम ! वरमद्य कपोतः श्वो मयूरादिति मत्वा नाऽहं सर्वथा पाणिपतितं त्वां त्यजामि । उक्तं च यः करतलगतमर्थं परित्यज्य पुनस्तत् प्राप्तिं प्रतीक्षते । स मूढः कालवंचितो भूत्वा परितापमेव लभते । एतदाकर्ण्य हनूमान् विहसन् प्रोवाच । मुखं व्यादेहि । अहं तवाननं प्रविशामि । एवं तेनोक्ता सा दशयोजनं वक्त्रं चकार । ततः कपिरपि सहसा तत्तुल्यो बभूव । एवं क्रमशो वर्धमाना सा शतयोजनं मुखं चक्रे । एतदालोक्य पवनात्मजः क्षणेनांऽगुष्ठमात्रो भूत्वा तस्या आननं प्रविवेश । ततो मनोजवः स बहिर्निर्गत्य तां प्रोवाच । दाक्षायणि ! मया त्वद्वचः सत्यं कृतम् । साम्प्रतं गमनायानुमतिं देहि । तच्छ्रुत्वा सा देवी स्वेन रूपेण वानरं प्रोवाच । हरिश्रेष्ठ ! कार्यसिद्ध्यै यथासुखं गच्छ । एवं हनूमतः सुदुष्करं कर्म समालोक्य भूतानि साधु साध्विति हरिं प्रशशंसुः । ततः सिंहिकानाम राहुजननी प्रस्थितस्य हनूमतश्छायाग्रहं चक्रे । सोऽथ स्तब्धविग्रहः पुरः पातालविशालवदनां विलोक्य स्वविग्रहं संकुचितं चक्रे । ततोऽवकाशमवाप्य तस्या वदनं च प्रविश्य तस्या हृत्पद्ममुज्जघान । तेन हता प्रसरद्वक्त्रनिर्झरा सा समुद्रे निपपात । एवं हनूमतोऽतिदुष्करं कृत्यं विलोक्य संतुष्टाः सुरसिद्धर्षिकिन्नरास्तत्र पुष्पनिकरं मुमुचुः । ततो मारुतिर्दशकंधरस्य प्रभावतुल्यं महाम्बुराशिं समुल्लंघ्याऽस्य च विशाले पर्वतशिखरे जलप्रलम्बाम्बुदवत् सहसा पपात । किंस्विज्जलनिधिमथनान्मन्दराद्रिर्निर्गतः ? आहोस्विन्निर्भयो मैनाकः समुत्पतितः ? किंवा सुधार्थं सुपर्णः समायातः ? इति चिंतानिस्पन्दनेत्रैः सुररमणीमण्डलैरीक्ष्यमाणो मारुतिः श्रीरघुपतिकार्यार्थं सपद्यल्पप्रमाणो बभूव । एवं मारुतिः पौलस्त्यदर्पविपुलं जलनिधिं समुल्लंघ्य न केवलं जनतामेव किन्तु विबुधावलीमपि विस्मयानन्दनिस्पन्दां विदधे । सोऽथ त्रिकूटाचलस्य रत्नद्युतिदुकूलिनीं दयितामिव लंकां दृष्ट्वा रामकार्यार्थं लघुस्वरूपं दध्रे । ततो यावत्स लंकाया उत्तरद्वारमवतीर्य निरीक्षते । तावद्दिवाकरोऽस्तं जगाम । ततो लंकाधिदेवतामात्मनः सह विग्रहं विधातुं गृहीतयुवतिवेशां मार्गस्यार्गलीभूतां विजित्य नगरीं विवेश । अथ नीलकंठानां कण्ठेषु मददंतिनां गण्डेषु योषितां च कुंतलेषु तमः प्रगल्भतां लेभे । अथ श्रीशिव चूडामणिः शशी दिशः प्रसादयन् समुद्ययौ । तस्मिन्नवसरे चंद्रोदयप्रहृष्टानां निशाचरमृगीदृशां वदनैर्ज्योत्स्ना लंका शशिशतैरिव विभूषिता बभूव । ततो मधुपा बद्धकोशेषु कमलेषु गुणज्ञहृदयेषु दोषलेपा इवाऽवकाशं न लेभिरे । अथ क्षीरैः प्रक्षालित इव शुभ्र ज्योत्स्नया जगति जाते लघु-

संचारः कपिः सौधप्राकारशेखरैः समुत्प्लुत्य सुखसुप्तानां रक्षसां भवनानि विवेश । सोऽथ भीमशठवक्त्रादिमालिधूम्राक्षप्रहस्तसंपातिविकटसुदंष्ट्रासारणानां विलोक्य भवनानि शुकघसमत्तप्रघसविद्युज्जिह्वविरूपाक्षमहोदरमहाकायवज्रदंष्ट्रविद्युन्मालिसुमालिनामुद्यानासक्तकान्तामधूत्सवं ददर्श । ततो मारुतिः कुंभकर्णमेघनादादीनां मणिकांचनमण्डितेषु महालयेषु नृत्यन्तीनां क्षपाचरीणां लीलां विलोक्य चिन्तयामास । इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते । श्रेयांसि च सकलान्यलसानां हस्ते नित्यसान्निध्यानि । जगत्यस्मिन् विभवसंपदां सारः प्रियासमागमः । स च पानकेलिं विना न शोभते । हर्म्ये, चंद्रोदयः कान्ता मधुगीतं सुहृत्कथाश्चैतास्ताः पूर्वपुण्यानां स्फीताः फलसमृद्धयः संति । सुभ्रुवांलीला, लावण्यं, यौवनं चैतन्मदेनास्फुरितं हि स्मरस्य जैत्रमस्त्रं भवति । जगति त एव धन्या ये चंचलाक्षस्खलितालापं सुगंधमयं च पद्मवदनामुखकमलं पिबन्ति । महते मदाय नमोऽस्तु । रागिणां रागाय चाऽपि स्वस्त्यस्तु । यत्प्रसादेन मानिनी मानमुत्सृज्य स्वयं कण्ठावलम्बिनी भवति । बहुधा कामिनः कामिनीनां मधुस्रस्तांशुकं वपुर्दृष्ट्वा पदे पदे खलो मित्रप्रीतिमिव धृतिं परित्यजंति । ततो वैदेहीं मार्गमाणो हनूमान्विभीषणप्रासादं विविच्य कैलासशिखरोपमं दशकण्ठभवनं ददर्श । या हि कुवेरलक्ष्मीः चन्द्रमसि वा हरिवाहने चाऽस्ति । तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह विद्यते । अहो ! कुवेरः परेण तपसा यद्विमानं पितामहाल्लब्धवान् । तदेव राक्षसेश्वरस्तमोजसा जित्वाऽलभत । ततः स मारुतिस्तत्र देवगंधर्वकिन्नरनागविद्याधरात्मजा रावणकान्ता विलोक्य परमाश्चर्यमाससाद । सोऽथ नीलमेघसंकाशं दिव्याभरणभूषितं कामरूपिणं पर्यस्तं मंदिरमिव रत्नपर्यंकशायिनं च दशग्रीवं ददर्श । तस्य पार्श्वे काचिद्वीणां परिष्वज्य प्रसुप्ता । अन्या मत्तलोचनाऽङ्गैर्मृदंगं परिविष्य निद्रावशं समुपागता । ततो जानकीमन्विष्यन् पवननंदनो दिव्यशयने शयानां कनकवर्णाभां मंदोदरीं च विलोकयामास । ततः स रूपयौवनसंपदां तां सीतेति तर्कयित्वाऽतिहर्षेण ननंद । सोऽथ तां बुद्धिमवधूय स्थिरचेतसा विचारयामास । राघववधूः कथमेवंविधाभवितुमर्हेत् । रघुकुलयोषितः स्रस्तचरित्रा न श्रुता न चाऽवलोकिताः । रामवियुक्ता सा भामिनी न भोक्तुं नाऽप्यलंकर्तुं न च पानमुपसेवितुं शक्नोति । ततो धर्मसाध्वसशंकितो हनूमानचिंतयत् । अहो ! प्रसुप्तस्य परदारावरोधस्य निरीक्षणं ममाऽत्यर्थं करिष्यति धर्मलोपम् । इति दृढनिश्चयं चक्रे । ततः स सर्वेषामिन्द्रियाणां शुभाऽशुभप्रवर्तने मनो हि हेतुरस्ति । तच्च मे सुव्यवस्थितमतो नास्ति दोषलेशः ।

इति निर्धारयामास । मया सर्वमेव रावणान्तः पुरं समवलोकितं । परन्तु जानकी न दृष्टा । नूनमार्यपथे स्थिताऽनेन दुरात्मना सा भक्षिता। अहह ! मम वृथाजातं परिश्रमं दृष्ट्वा सर्वे वानरा माम् किन्तु वक्ष्यंति ? सोऽथ श्रियोमूलमनिर्वेदं मत्वा भूयोऽप्यदृष्टान् प्रदेशाननुसंदधे। ततः स सीतामनवाप्य व्यचिन्तयत् । उद्यमा यदा विघ्नाघ्राता फलसिद्धिरनित्या लोकश्च विनाशप्रेक्षकः पुनस्तदा कथं यशः समासाद्यते ? इयं सप्रासादगृहोद्याना निखिलाऽपि पुरी मयाऽवलोकिता । किन्त्विहाऽपि वैदेहीमदृष्ट्वा सागरलंघनं मुधैव मन्ये । मया जानकी न दृष्टेति कालकूटोपमं वचः श्रुत्वैव सानुजो रामो जीवितं त्यक्ष्यतीति व्यक्तम् । एवं कुलचूडामणौ तस्मिन् कीर्तिशेषतां प्रयाते रघुकुलस्याऽपि जीविताशा कथं भविष्यति ? एतदालोक्य मित्रवत्सलः सुग्रीवः सत्वरमेव तनुत्यागं करिष्यति । एवं घोरं सर्वक्षयं द्रष्टुं कथमहं तत्र गच्छामि । उक्तं च । सुखे नष्टे मित्रे गते निकटवर्तिनि कष्टे चाऽऽयाते विवेकिनां वैराग्याभरणं तप एव युक्तम् । अस्मिन् पयोनिधितीरे निर्निकेतो निराश्रयश्च भूत्वा हस्तादानो मुखादानो वा भविष्यामि । अथवा जानकीवृत्तेऽज्ञाते वृथैव मरणेन किम् ? उक्तं च । जीवन्नरः कल्याणशतान्यवलोकते । मया लंका तु दृष्टा परंत्वशोकवनिका न विचिता । अतस्तां पूर्वं विलोक्य तस्या अलाभे रावणं हनिष्यामीति निश्चित्य स्तोकशेषायां शर्वर्यां पुष्पपातोपमैः पदैरशोकवाटिकां जगाम । सोऽथ लोकपालान् प्रणम्य सीतारामौ च ध्यात्वा जवेन व्रजन् हेमवृक्षरजःपुंजे कनकप्रभो बभूव । तत्र केचिद्धृतवल्कलास्तरवो वेश्याभिर्हृतसर्वस्वा विटा इव निरम्बरा अदृश्यन्त । ततो मारुतवेगविलवैरायासिता तरुश्रेणी राजवल्लभैर्लुण्ठिता प्रजेव व्यकम्पत । ततः स कदाचित् कनकपंकजिनीपुंजे कदाचित् क्रीडावैडूर्यशैले, कदाचित् केलिकल्लोलिनीकूले च वैदेहीदर्शनलालसया यत्र तत्र बभ्राम । सोऽथ ज्योत्स्नायां मनोरमे प्रासादे राक्षसीभिः समावृतां पीतकौशेयवसनां शुक्लपक्षादौ शशिकलेव निर्मलां परिक्षीणां तपस्विनीं च दृष्ट्वा सीतेति तर्कयामास । श्रीरामो यानि वैदेहीचिन्हान्यन्वकीर्तयत् । तानि सर्वाणि गात्रशोभीन्याभरणजालान्यत्र विलोकयामि। धरणीतले च यानि भूषणानि पतितानि दृष्टानि मन्ये तान्यनयैव प्रक्षिप्तानि। सेयं सीता यत्कृते रामः कारुण्यानृशंस्यशोकमदैः परिलप्यते। नूनं रामो भाग्यवान् यस्येयं भार्या । एषाऽपि भाग्यशालिनी यस्या भर्ता रामचन्द्रः । किं बहुना । मयाऽपि च दर्शनादस्या भाग्यवत्त्वं समुपलब्धम् । ततः सोऽचिन्तयत् । अस्या एव विशालाक्ष्या हेतोर्महाबली वाली हतः । अस्या एव च निमित्ते खरदूषणविराधकबंधादयोऽपि संख्ये विदितात्मना रामेण निपातिताः । किम्बहुना । सकलं त्रैलो-

क्यराज्यमपि सीतायाः कलां नाप्नुयादिति मे दृढनिश्चयः । देवि ! त्वमवश्यं धन्या । या सर्वभोगान् परित्यज्य निर्जनं वनं प्रविष्टाऽसि। भर्ता हि नार्या भूषणादपि परं शोभनमस्ति । तेन विरहितैषा शोभार्हाऽपि न शोभते । सर्वत्र विवृतद्वारा दैवशक्तिर्नूनं बलवती । यज्जीवतो रामलक्ष्मणयोर्मनस्विनी सीता विपदां पदमस्ति । एवं चिरं जानकीं निर्वर्ण्य चिन्तयतस्तस्य कार्यवैफल्यजा विचारणा क्षपेव शनैः शनैस्तनुतां जगाम । सोऽथ प्रभाते अग्निहोत्रेषु प्रवृत्तेषु षडंगवेदविदुषां ब्रह्मरक्षसां ब्रह्मघोषं शुश्राव । तस्मिन्नेवाऽवसरे श्रोत्रसुखप्रदैर्वादित्रशब्दैर्महाबाहुर्दशकन्धरः प्राबोध्यत । ततः स उत्थाय वैदेहीमेव चिन्तयन् संततद्रुमामशोकवनिकां विवेश । एतदालोक्य देवगन्धर्वयोषितो महेन्द्रमिव ललनाश्छत्रचामरादिसमेतास्तमनुजग्मुः । अत्रान्तरे हनूमान् सूक्ष्मरूपमवलम्ब्य वृक्षमूलसमीपशाखासु निलीनो बभूव । तस्मिन्नवसरे मैथिली राक्षसेश्वरं रावणं दृष्ट्वा प्रवाते कदलीव चकम्पे । साऽथ बाहुभ्यां पयोधरावूरुभ्यांचोदरं छादयित्वा निम्नानना बभूव । ततो रावणो रुदतीं ताम्रायतशुक्ललोचनां च ताम्मधुरैर्वाक्यैः सान्त्वयन् प्रोवाच। वरवर्णिनि ! मां दृष्ट्वा स्तनोदरं कथं निगूहसि? यतो रावणोऽकामां कामिनीं न स्पृशति । प्रियेऽहं त्वां बलात् कामये । त्वं माम् बहुमन्यस्व । भीरु ! परस्त्रीहरणं किंवा परदारोपसेवनं तु रक्षसां स्वाभाविको धर्मः । ज्ञात्वैवं शोकलालसा मा भूः । अधःशय्यामेकवेणीव्रतं च त्यज। मां संप्राप्य विचित्राणि माल्यानि विविधानि वासांसि दिव्यान्याभरणानि च लभस्व । सुभ्रु ! इदं ते चारुयौवनं ह्यतिवर्तते । यदतीतं स्रोतस्विनां स्रोत इव पुनर्नैति । विलासिनि ! नानानगरमालिनीमिमां पृथ्वीं विजित्य तव हेतोर्जनकाय प्रदास्यामि। सुभगे ! चीरवाससा रामेण किं करिष्यसि ? गतश्रीरामो वने जीवति नवेति शङ्के । किं बहुना । यथेन्द्रहस्तगतां कीर्तिमिव पत्नीं हिरण्यकशिपुः प्राप्तवाँस्तथा त्वामपि मम हस्ताद्रामोऽवाप्तुं शक्तो न भविष्यतीति सत्यमवगच्छ । निशम्यैवं रावणवचनं पतिव्रता सीता तृणमंतरतः कृत्वा रामं ध्यात्वा च कोपात् प्रोवाच । पापकृत्सिद्धिमिव त्वं माम् प्रार्थयितुं न शक्तः । त्वं चेतनां लब्ध्वा मत्तो मनो निवर्तय । स्वजने च मनः प्रीयताम् । साऽथ पराङ्मुखी भूत्वाऽवदत् । नाऽहमौपयिकी किन्तु पतिव्रतपरायणा रामभार्याऽस्मि त्वमिदानीं धर्ममवेक्ष्य साधुव्रतं समाचर । यथाऽजितेन्द्रियं भूपमासाद्य समृद्धान्यपि राष्ट्राणि नश्यंति तथा त्वामवाप्य नानारत्नौघसंकुलाऽप्येषा लंकाऽचिराद्विनशिष्यति । जगति शरणागतवत्सलो रामः सुविदितोऽस्ति । यदि त्वं जीवितुमिच्छसि। तर्हि तेन सह ते मैत्री भवतु । एवं कृते तु तव सिद्धिर्भवेत् । अन्यथा त्वं घोरामापदमवाप्स्यासि ।

नाऽहमैश्वर्येण धनेन वा लोभयितुं शक्या । यथा भास्करं प्रभाऽनुसरति । तथाऽहं राममनुसरामि । नूनमिह ज्वलितास्या उरगा इव रामलक्ष्मणलाञ्छिता इषवो निपतिष्यंति । क्षुद्रबुद्धे ! त्वं रामलक्ष्मणयोः परोक्षे मामपनीतवान् । अन्यथा किं शशकः शार्दूलभागं नेतुं शक्तः ? निशम्यैतत् परुषवचनं राक्षसेश्वरः क्रुधा तामवदत् । अनभिज्ञे ! कुटिलचारिण्यः स्त्रियःसान्त्वैः प्रगल्भतामपमानैश्च वश्यतां यांति । अनुकूलविरुद्धस्य प्रतिकूलाभिलापिणश्च मन्मथस्य पंथाः सर्वथैव विषमः । वरानने ! कारणादस्माद् वधार्हामपि त्वां नाऽहं घातयामि । मया द्वौ मासौ रक्षितव्यौ । ऊर्ध्वं तु मामाभ्यां मामनिच्छन्तीं त्वां प्रातराशार्थे सूदाः खण्डशश् छेत्स्यंति । एवं राक्षसेन्द्रेण भर्त्स्यमानां जानकीं संप्रेक्ष्य काश्चिद्देवगन्धर्वकन्या नेत्रैरपराश्च संकेतैस्तां समाश्वासयामासुः । ततः सा रावणं जगाद । पाप ! तस्य धीमतो रामस्य भार्या राजर्षे र्दशरथस्य च स्नुषाऽहमस्मि । एवं व्याहरतस्ते जिह्वा कथं न विशीर्यते ? अत्रान्तरे धान्यमालिनी परिष्वज्य रावणं प्रोवाच । राक्षसराज ! मया सह रमस्व । अनया मानुष्या सीतया किम् ? अकामां कामयानस्य शरीरं तप्यते । इच्छयाकामयानस्य शोभना प्रीतिर्भवति । निशम्यैतद्राक्षसीवचनं मदनमोहितोऽपि दशाननो भार्यां निगृह्य स्वसदनं जगाम । ततः क्रोधमूर्छिता राक्षस्यः सीतामुपागम्य परुषया वाचाजगदुः । अयि मूढे ! त्वं भुवनविश्रुतस्य पौलस्त्यस्याऽपि भार्यात्वं न बहुमन्यसे ? तच्छ्रुत्वैकजटाऽवदत् । सीते ! किं त्वया महामुनिर्विश्रवा न श्रुतः ? यस्याऽयं राक्षसेन्द्रः पुत्रोऽस्ति । एतदाकर्ण्याऽऽश्रुपूर्णनयना जानकी प्रोवाच । भगिन्यः ! युष्माभिर्यल्लोकविद्विष्टं वाक्यमुदाहृतम् । तन्मे मनसि सर्वथा न प्रतितिष्ठति । दीनः किंवा राज्यहीनो यो मे भर्ता स एव गुरुरस्ति । यथा सुवर्चला सूर्यं शची महेन्द्रं, अरुन्धती वशिष्ठं, रोहिणी शशिनं, लोपामुद्राऽगस्त्यं, सुकन्या च्यवनं, सावित्री सत्यवन्तम् । श्रीमती कपिलम्, केशिनी सगरं, मदयंती सौदासं, दमयन्ती च नलमनुरक्ता तथाऽहमपि श्रीरामानुरक्ताऽस्मि । एतदाकर्ण्य विनतोवाच । सीते ! त्वया यो भर्तृस्नेहः प्रदर्शितः स समुचितः । किन्तु सर्वत्राऽतिकृतो व्यसनायैव समुपकल्प्यते । तच्छ्रुत्वाऽजामुखी जगाद । सख्यः ! पूर्वमिमां विशस्य समान् पिण्डकान् कुरुत । ततो विभज्य भक्षयामः । मह्यं विवादो न रोचते । निशम्यैतद्राक्षसीवचनं निःश्वसंती सीताऽश्रूणि विसृज्य हा राम ! हा लक्ष्मण ! हा श्वश्रुकौसल्ये ! हा सुमित्रे ! इति मुहुर्मुहुर्विललाप । पण्डितैः सत्योऽयं लोकप्रवादः समुदाहृतः । यत् स्त्रिया वा पुरुषस्य मृत्युरकाले न भवति । मामनार्यां धिक् । याऽहं तेन विना मुहूर्तमपि जीवामि । अहं सव्येन चरणेनाऽपि तन्निशाचरं न

स्पृशामि । जगति त एव महात्मानो धन्या येषां कर्मजन्ये प्रियाप्रिये न स्तः । ततोऽनार्याभिर्निशाचरीभिः संतर्जितां सीतां दृष्ट्वा वृद्धा त्रिजटाऽब्रवीत् । यूयमज्ञाः विस्मृत्याऽपि जनकसुतां दशरथस्नुषां चेमां मा पीडयत । मयाऽद्य यो रोमहर्षणः स्वप्नो दृष्टः । तं शृणुत । शुक्लमाल्यांबरौ रामलक्ष्मणौ वाजिसहस्रयुतां गजदंतमयीं च शिबिकां समास्थाय विहायसाऽत्र समाजग्मतुः । इयं शशिमुखी सीताऽपि श्वेताम्बराणि परिधाय सागरेण परिक्षिप्तं श्वेतपर्वतं समारुरोह । ततस्तत्र रामेण संगता सीताऽतिशयेन दिदीपे । अथ सीता प्रथमं भर्तुरंके गत्वा ततः समुत्पत्य च भर्तृपरिगृहीतस्य गजस्य स्कन्धदेशं समुपाश्रयत् । साऽथ सूर्याचन्द्रमसौ पाणिभ्यां परिमार्जयामास । ततः पुरस्कृत्य श्री लक्ष्मणं गजस्थौ सीतारामौ लंकायामितस्ततो विचेरतुः । अथ पुरुषोत्तमो रामचन्द्रः सीतालक्ष्मणाभ्यां सह पुष्पकविमानं समारुह्य कौबेरीन्दिशं प्रातिष्ठत । निशाचर्यः सम्प्रति दुर्निमित्तान्यप्याकर्णयत । मया रावणो मुंडितमस्तकस्तैलसमुक्षितश्च दृष्टः । स रक्तवासा करवीरकृतस्रजश्च पुष्पकविमानात् क्षितौ न्यपतत् । ततो हसन् नृत्यन् तैलं च पिबन् स्त्रियाकृष्टो भयमोहितो भूत्वा च भूमौ लुलोठ । सोऽथ खरयुक्तं रथमारुह्य युद्ध्यमानोऽधःपतित्वा महापंके ममज्ज । एवं कुंभकर्णोऽपि क्रमेलकमारुह्य दक्षिणां दिशं प्रयातः । ततो मया मेघनादाद्या रावणात्मजा मुंडितशिरसस्तैलसमुक्षिताश्च दृष्टाः । तत्र रणांगणे चतुर्भिःसचिवैः सार्धमेकः श्वेतच्छत्रो विभीषण एव विहायसमुत्पपात । इयं रम्याऽपि लंकापुरी भग्नगोपुरतोरणा सागरे न्यमज्जत । किम्बहुना । सर्वा एव राक्षसयोषितो गोमयह्रदे प्रविविशुः । अहमिदानीं वैदेह्या अर्थसिद्धिं राघवस्य च विजयं पश्यामि । पश्यत पश्यत । सहसैव मैथिल्या बाहुः प्रकम्पते । एष शाखाश्रयो वायसोऽपि सीतां शुभं वदतीति निगद्य त्रिजटा विरराम । एतस्मिन्नेवान्तरे राजीवलोचनं रामं विचिन्तयन्ती वैदेही स्वदुःखं दुःसहं मत्वा प्राणपरित्यागार्थे दृढनिश्चया बभूव । ततो हतोत्साहा सा वृक्षमारुह्य यावद्वेण्युद्ग्रथनेन पाशं रचयति । तावच्छुभानि निमित्तानि प्रादुर्भूय तां तस्मादनिष्टान्निवारयामासुः । तत्रादौ तस्या वामनेत्रं प्रास्पंदत । ततः सव्योभुजः । एतदालोक्य जानकी भर्तृदर्शनं सुलभं मत्वाऽतितरां जहर्ष । अत्रान्तरे संवृतो मारुतिस्ततूसर्वं दृष्ट्वा तत्सतीवृत्तेन च विस्मयमवाप्य क्षणं चिन्तयामास । एतामसंभाष्य यथागतं मयि याते कदाचिदद्यैव जीवितं जहातीति जाने । लंघितोदधिरहं लंकां द्रष्टुमागतोऽस्मि । किन्तु जानकी न दृष्टेति श्रुत्वाऽपि राघवो न प्रसादमेष्यति । नूनं पौलस्त्यमप्यात्रस्तैवामया संभाषिताऽपि प्रतिवचो न दास्यति । वयस्याः

संभाषणे रतोऽहं राक्षसैर्लक्षितः । तदाऽयं प्रयत्नोऽपि किल कलहान्तो भविष्यति । उक्तं च । देशकालविरोधिताः सिद्धार्थोऽपि विप्लवं दूतमवाप्य सूर्योदये तम इव सत्वरं विनश्यंति । कार्याऽकार्यविषये निश्चिताऽपि बुद्धिर्न शोभते । यतः पण्डितमानिनो दूताः कार्याण्यवश्यं घातयंति । संप्रति मनुष्यभाषामाश्रित्य ब्रवीमीति निश्चित्य महामतिर्मधुरं वाक्यं व्याजहार । आसीदयोध्यायां सत्यधनो दशरथो नाम राजा । तस्य सर्वधनुष्मतां श्रेष्ठो रामचन्द्र इति विश्रुतः सुतोऽस्ति । स महानुभावः पितृवचनात् सभार्यः सभ्रातृकश्च वनं प्रवव्राज । तत्र तेन खरदूषणाद्या बहवः शूरा राक्षसा निहताः । ततो मायामृगेण मारीचेन रामं वंचयित्वा रावणः सीतां जहार । अथ रामः साध्वीं सीतां मार्गमाणो वने सुग्रीवं नाम वानरमाससाद । सोऽथ वालिनं हत्वा सुग्रीवाय कपिराज्यं प्रायच्छत् । ततः सुग्रीवशासनाद्वानराः सर्वासु दिक्षु जानकीं विचिन्वन्तः पर्यटन्ति । अहमपि संपातिवचनात्सागरं समुल्लंघ्याऽत्र समायातः । श्रीराघवोदीरितलक्षणवती सा मयाऽद्य समुपलब्धेति निगद्य पवनात्मजो विरराम । एतदाकर्ण्य भीरुः सा परमाश्चर्यमवाप्य शिंशिपामन्वैक्षिष्ट । ततो मैथिली सर्वात्मना राममनुस्मृत्य परमहर्षं प्रापत् । साऽथ तप्तचामीकरेक्षणं प्रियवादिनं च तं समीक्ष्य सहसा मुमोह । ततः संज्ञामवाप्य सा भामिनी विनीतवदुपस्थितं हरिवरं दृष्ट्वाऽपि स्वप्नोऽयमित्यमन्यत । साऽथ प्रातरेव शाखामृगदर्शनमनिष्टमिति मत्वा स लक्ष्मणाय रामाय तथा जनकाय स्वस्त्यस्त्विति जगाद । अत्रान्तरे विनीतवेशो हनूमान् द्रुमादवतीर्य प्रणिपत्य च तां मधुरया गिरा प्रोवाच । नीरजाक्षि ! त्वं का ? किमर्थं च तरुशाखामालंब्य तिष्ठसि ? केन हेतुना तव नेत्राभ्यां शोकजं वारि स्रवति ? भूमिसंस्पर्शात् त्वां देवीं न गणयामि । ते चिह्नानि ऋषिपत्नीभ्योऽपि विलक्षणानि । नूनं त्वं सार्वभौममहिष्यसि । यदि त्वं रावणेन जनस्थानाद्बलात्प्रमथिता तदा तु सीताऽसि । शिवं ते भूयात् । पृच्छतो मम स्पष्टमाचक्ष्व । निशम्यैतत् पावनिवचनं रामकीर्तनहर्षिता सा द्रुमाश्रितं मारुतिं प्रोवाच । भद्रमुख ! राजसिंहस्य दशरथस्याऽहं स्नुषा, मिथिलाधिपस्य जनकस्य सुता कौसल्यानंदनस्य रामस्य च भार्या सीताऽभिधानाऽस्मि । राघवनिवेशने मानुषान् भोगान् भुंजानाऽहं द्वादशसमा अतिष्ठम् । ततस्त्रयोदशे वत्सरे राजा श्रेष्ठगुणयुक्तं ज्येष्ठसुतमभिषेचयितुमियेष । एतज्-ज्ञात्वा तस्य प्राणप्रिया भार्या कैकेयी भर्तारमवदत् । राजन् ! यदि रामोऽभिषिच्यते । तर्हि नाऽहं खादेयं न च पिबेयम् । निशम्यैतत् सत्यसंधो भूपो वरदानं स्मृत्वा सहसा मुमोह । सोऽथ चेतनामवाप्य प्रतिज्ञापरिपालनाय प्रियतममपि पुत्रं विवासयामास । ततोऽहं सर्वभोगान् परित्यज्य तूर्णं तस्यामगाऽ-

भवत् । ततो महामतिः सौमित्रिरप्यग्रजमन्वसरत् । ततो वयं वने मुनिजनसेवया कालमनैषिष्म । अथैकदा दण्डकारण्ये वसतस्तस्य महात्मनो भार्या दुरात्मना रावणेनाऽपहृता । तेन खलेन द्वौ मासौ दत्तौ । अत ऊर्ध्वं जीवितं त्यक्ष्यामीति कथयित्वा जानकी मौनमभजत् । एतदाकर्ण्य हनूमान् सान्त्वमुत्तरं प्रादात् । देवि ! रामः कुशली । स च त्वां कौशलमवादीत् । महातेजा लक्ष्मणः शिरसाऽभिवादनं कृतवान् । सुग्रीवोऽपि त्वां प्रणतिपुरस्सरं कुशलमपृच्छत् । तच्छ्रुत्वा प्रफुल्लितवदना सीता जगाद । हर्षो जीवन्त-मनुयातीति महात्मनामुक्तिः सत्या । ततो हनूमान् यथा यथा समीपमुपसर्पति तथा तथा सीता रावणोऽयमित्याशंकत । मां धिक् । इदं कथितमपि धिक् । स एवाऽयं रावणो यो रूपपरिवर्तनं कृत्वाऽत्रागतः । एतदालोक्य महाबाहुस्तां पुनः पुनर्ववंदे । एवं वंदमानं दृष्ट्वा सीतोवाच । मायाविन् ! यदि त्वं रावणोऽसि । तदा तु भूयः संतापं मा जनय । अथवा मा भवत्वेवम् । तव दर्शनान्मम मनसः प्रीतिः समुत्पन्ना । एतदाकर्ण्य हनूमान् पुनरुवाच । देवि ! अहं सुग्रीवसचिवो हनूमान्नाम वानरोऽस्मि । सुग्रीव-मित्रेण राघवेण प्रेषितो दूतस्त्वत्सकाशमिह सम्प्राप्तः । वैदेहि ! राक्षसीवशमागता त्वं दिष्ट्या जीवसि । त्वमचिरात्सलक्ष्मणं राममवलोकयिष्यसि । त्वमिदानीं संशयं परित्यज्य मयि प्रत्ययं कुरु । तच्छ्रुत्वा सीतोवाच । महाशय ! क्व ते रामेण साकं संसर्गोऽभवत् ? लक्ष्मणं च कथं जानासि ? नराणां वानरा-णां च समागमः कथमासीत् ? एतदाकर्ण्य मारुतिः प्रत्यवदत् । देवि ! द्वात्रिंशल्लक्षणो-पेतो रामो जगति विश्रुतोऽस्ति । अमितप्रभो लक्ष्मणोऽपि न साधारणः । तावुभावपि नरशार्दूलौ त्वां विचिन्वन्तौ ऋष्यमूकपर्वतसमीपे समायातौ । तत्र भ्रातृभयार्तेन सुग्री-वेण सह रामस्य सख्यं जातम् । राघवस्तत्राऽदर्शनशोकेन तथा परिचाल्यते यथा भूमि-कंपेन शिलोच्चयः । इदं रामनामांकितमंगुलीयकं पश्य । तव प्रत्ययार्थमेव तेन महा-त्मना दत्तमिति निगद्य हनूमान् तस्यै तत् समर्पयामास । ततः सा भर्तुः करविभूषणं गृहीत्वा रामसंदर्शनतुल्यमानन्दमवाप । ततस्सा महाकपिं भूयोभूयः प्रशस्य प्रोवाच । महावीर ! स विन्ध्यो नाम वृद्धराक्षसो यो जनस्थानात्समायातो मह्यं रामसुग्रीवयोः सख्यं निवेदयामास । यद्यहं तस्य वीरस्य हृदये स्थिता । तर्हि सराक्षसा लंकेयं कथमद्याऽपि न विशीर्णा । यो दैवं प्रमाणमाश्रित्य पुरुषार्थे न प्रवर्तते । स कण्ठगतच्छिद्राद् घटाज्जलमुदं-चति । अथवा सुविस्तीर्णे विभवे वा सुदारुणे व्यसने कृतान्तो रज्ज्वेव बद्ध्वा प्राणिनं सदा परिकर्षति । दशमासास्त्वतीताः । द्वौ मासौ चाऽवशिष्टौ । ततो दुरात्मा मां हनि-

ष्यति । मम निर्यातनं प्रति विभीषणेनाऽनुनीतोऽपि स दुराग्रही भ्रातृवार्तां न मन्यते । गतेऽह्नि विभीषणसुता कला मामुपेत्य स्वमातृसंदेशं कथयामास । वत्सांग ! राघवे महोत्साहः, कृतज्ञता, विक्रमः, पौरुषं, सत्वमानृशंस्यं चाऽस्ति । तस्मात् सोऽवश्यमिमां पराभवग्लानिं रावणान्तः पुराश्रुभिः प्रक्षालयिष्यति । एतदाकर्ण्य हनूमानुवाच । मनस्विनि ! यदि त्वं मम पृष्ठमारोहसि । तर्हि त्वामद्यैव राक्षसान्मोचयामि । देवि ! रघुपतिस्त्वामवाप्य क्षिप्रं राक्षसान् क्षपयिष्यति । यतः स्वस्थे चित्ते हि कार्याणां निष्पत्तिः समुपजायते । तच्छ्रुत्वा जानकी प्रत्यभाषत । कपे ! मुष्टिमात्रस्त्वं मामितो नेतुं कथमर्हसि ? ततो हनूमान् स्वपराभवं मत्वा तस्मात् पादपादवततार । सोऽथ वर्धमानो मेरुमंदरसंकाशो बभूव । एतदालोक्य विस्मिता वैदेही जगाद । संप्रति महाकपे ! तेजोनिधिं त्वां जाने । कृपया मम चापलं क्षमस्व । वीर ! त्वया सह मम गमनमप्ययुक्तम् । गरुडगतेस्तव वेगो मां संमोहयेत् । नाऽहं रामादन्यस्य कस्यचिदपि गात्रं स्प्रष्टुमिच्छामि । पुरा यदाहं रावणस्य गात्रसंस्पर्शं गता । तदा तु पारतंत्र्यमेव कारणमासीत् । कपिश्रेष्ठ ! सलक्ष्मणं रामं सत्वरमिहानीय चिराय रघुवरं प्रति शोककर्शिताम्माम् हर्षितां कुरुष्व । तच्छ्रुत्वा वाक्यविशारदो हनूमान् सीतामुवाच । शुभदर्शने ! त्वया युक्तमेव भाषितम् । यत् त्वं स्त्रीत्वान्मामधिष्ठाय विस्तीर्णं सागरं व्यतिवर्तितुं न शक्ताऽसि । द्वितीयं कारणं चाऽपि यत्त्वं ब्रवीषि । यन्नाऽहं रामादन्यं स्पृशाम्येतदपि समुचितमेव । सम्प्रति रामाय किमभिज्ञानं समादाय व्रजामि । निशम्यैवं मारुतिवचनं वैदेही प्रत्यवदत् । त्वया रहसि सम्प्रत्ययाय राघवो वाच्यः । पुरा यदा चित्रकूटस्य रम्ये मंदाकिनीतटेऽस्माकं स्थितिरासीत्तदा जलकेलिपरिश्रान्ताऽहं त्वदंकपर्यंके निषण्णाऽभवम् । तस्मिन्नेवाऽवसरेऽकस्माद् वायसोऽभ्येत्य मां स्तनान्तरे विददार । ततः कुपितेन त्वया मेऽपकारी काकः काणः कृतः । प्रभो ! तदा तु मत्कृते काकमात्रेऽपि ब्रह्मास्त्रं प्रक्षिप्तम् । परमिदानीं तु त्वत्तोऽपि यो मामपाऽहरत् । तं क्षमसे ? अन्यच्च । पूर्वतने तिलके नष्टे मनःशिलातिलको त्वया मम गण्डपार्श्वे निवेशितः । तं स्मर्तुमर्हसि त्वदुक्तिप्रत्ययायेदं मणिविभूषणं चाऽस्त्वित्युक्त्वा वेणिकां विमुच्य चास्मै रुचिरं मणिं प्रादात् । ततः सा कृताञ्जलिः प्रोवाच । कपिश्रेष्ठ ! हृतेति लोके प्रथितं त्रस्तेति नारीजनोचितम् । शुष्यतीति प्रलापः शोकार्तेति किं वैचित्र्यं दयिताऽस्मीति चापलम् किं बहुना । विस्मृताऽस्मीति सर्वथैवाऽयोग्यम् । अस्मिन्दुःखार्णवे मग्नां मां रघुनाथ एव समुत्तारयिष्यति ।

कामस्य त्वमेवैकः कार्यस्य परिसाधने ।<br>
पर्याप्तः परवीरघ्न ! यशस्यस्ते फलोदयः ॥

एवं निशम्य बाढमित्युक्त्वा सीतां प्रदक्षिणीकृत्य च प्रस्थितो हनूमान् कार्यशेषं चिन्तयामास। यदर्थं वयं प्रेषितास्तत् सीतादर्शनाख्यं प्रधानकार्यं तु निष्पन्नम् । किन्त्वानुषंगिकं परबलनिरीक्षणमात्रमवशिष्टम् । अत्र त्रीनुपायानतिक्रम्य चतुर्थोपाय एव सद्यः फलप्रदो दृश्यते । राक्षसेषु सामगुणाय नोपकल्पते । अर्थोपचितेषु दानं नोपयुज्यते । बलदर्पिता जना भेदसाध्या न भवंति । अतः पराक्रमोपयोग एव मह्यं रोचते । निशि सुप्तजनां लंकां दृष्ट्वा यदि चोरवद् गमिष्यामि । तदा कोऽर्थो मम भुजबलेन ? एवं पर्यालोच्य हनूमान् नंदनोपमं तत् प्रमदावनं बभंज। ततो महातरूणां पततां त्रस्तपतत्रिणां च शब्देन सहसा निशाचर्यो बुबुधिरे । ततस्ता महाकायं वानरम् दृष्ट्वा जानकीं पप्रच्छ । भद्रे ! कोऽयम् ? किन्निमित्तमिह समायातः ? त्वया चाऽनेन सह कथं संवादः कृतः ? त्वं भयं परित्यज्य स्पष्टमाचक्ष्व । तच्छ्रुत्वा सीतोवाच । कामरूपाणां रक्षसां चरित्रविज्ञाने मम का गतिः ? अहिपादानहिरेव जानाति नाऽन्यः कश्चित् ? निशम्यैतद् वैदेहीवचनं विद्रुता राक्षस्यो द्रुतं रावणाय निवेदयितुं ययुः । ततस्ता रावणं समभ्येत्य प्रोचुः । राजन् ! कश्चिद्भीमवपुः कपिरशोकवाटिकायां सीतया कृतसंवादस्तिष्ठति । अस्माभिर्बहुधा पृष्टाऽपि वैदेही स्पष्टमुत्तरं न प्रयच्छति । स महेन्द्रदूतो भवेत् । वरुणो वा तं प्रेषितवान् । अथवा सीतान्वेषणकांक्षया रामेण प्रेषितः स्यात् । नाथ ! ज्ञात्वैवं तस्य महोपद्रविणस्तु सत्वरं दण्डमाज्ञातुमर्हसि । एतदाकर्ण्य कोपसंवर्तितेक्षणो रावणश्चितााग्निरिव जज्वाल । सोऽथ हनूमतो निग्रहार्थमात्मसदृशान् किंकरान् व्यादिदेश । तच्छ्रुत्वा शूलमुद्गरपाणयो महावीरास्ते सहसा राजभवनान्निर्ययुः । ततस्ते तोरणस्थं कपिं समासाद्य पतंगाः पावकमिव तमभिजग्मुः । एतदालोक्य मारुतात्मजोऽपि शब्देन लंकां परिपूरयन् पुच्छमास्फोटयामास । सोऽथ गर्जयन् प्रोवाच ।

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाऽभिपालितः ॥
दासोऽहं कौसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमाञ्छत्रुसैन्यानां निहंता मारुतात्मजः ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥
अर्दयित्वा पुरीं लंकामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥

एतदाकर्ण्य सर्वे ते राक्षसाः सहसा भयशंकिता बभूवुः। ततस्ते स्वामिसंदेशं स्मृत्वा नानाप्रहरणैर्मारुतिं ताडयामासुः। ज्ञात्वैवं कोपाकुलकपिस्तोरणाश्रितं परिघं समादाय रजनीचरान् प्रतिजघान। ततः कतिचिद्राक्षसास्तद्भयान्मुक्तिमवाप्य राक्षसक्षयवृत्तान्तं रावणाय निवेदयामासुः। अत्रान्तरे हनूमान् गिरिसंकाशं प्रासादं समारुह्य ननाद। तेन शब्देन चकिताश्चैत्यपालाः सत्वरं बाणान् विसृजन्तः पवनात्मजं पर्यवारयन्। ततः क्रुद्धो हनूमान् प्रासादस्तंभं समुत्पाटयित्वा भ्रामयामास। अथ तत्र योऽग्निः प्रजज्वाल। तेन सपदि प्रासादावलिरदह्यत। अथ हनूमता किंकरकुले निपातिते हतशेषाः क्षपाचरा दशग्रीवाय तूर्णं रणवृत्तमावेदयन्। तच्छ्रुत्वा नवावतारेण मन्युनाऽभिभूतः स प्रहस्ततनयं जम्बुमालिनं समाहूय युद्धार्थमादिदेश। ततः खरयुक्तं रथं समारुह्य समरदुर्जयो जम्बुमाली तत्राऽऽजगाम। तमुदीक्ष्य वेगसम्पन्नो हनूमान् सहसा ननाद। ततो जम्बुमाली तं महाकपिं निशितैःशरैर्विव्याध। येन तस्य ताम्रं मुखं भास्कररश्मिना विद्धं शरदि प्रफुल्लमंबुजमिव शुशुभे। ततः कोपकम्पितो हनूमान् यां शिलां राक्षसोपरि चिक्षेप। स तां दशभिः शरैः पृथिव्यां पातयामास। विलोक्यैतत् पवनात्मजः सालमुत्पाट्य भ्रामयामास। महाबलस्तमपि चतुर्भिः शरैश्चिच्छेद। ततः कोपपूरिततनुर्मारुतिर्निजव्यथां विस्मृत्य जंबुमालेरुरसि परिघं पातयामास। तेन निहतः स चूर्णितो गद्रुम इव धरातले निपपात। एवं रावणः प्रहस्ततनयं हतं श्रुत्वा व्याकुलहृदयोऽपि वीरान् सप्त मंत्रिसुतान् योद्धुमादिदेश। तेऽथ रथारूढा महाबलास्तोरणस्थं हनूमन्तं सहसाऽभिपेतुः। ततो बाणवृष्टिं सृजन्तस्ते प्रावृट्कालीनवारिदोपमां दधुः। तस्मिन्नवसरे ताभिःशरवृष्टिभिराच्छादितो हनूमान् हिमावृतशैलराडिव संवृताकारो बभूव। ततोऽमितविक्रमो मारुतिस्तदुत्सृष्टां बाणवृष्टिं विलंघ्याऽलातचक्रवत् क्षणं बभ्राम। सोऽथ घोरं निनदं कृत्वा कांश्चित्तलेन कांश्चित्पादैः कांश्चिच मुष्टिभिर्निहत्य यमपुरातिथींश्चकार। एवं ससैन्यान्मंत्रितनयान् गतासून् विज्ञाय कोपाविष्टो रावणोऽपरान् पंचसेनाग्रगान् युद्धार्थे प्रेषयामास। ततस्ते दुर्धरप्रघसयूपाक्षविरूपाक्षभासकर्णाः प्रभोराज्ञां शिरोधार्य तं देशमाययुर्यत्र कपिवरो योद्धुमुद्यतोऽतिष्ठत्। तेऽथ मारुतिं समभ्येत्य बाणानवर्षन्। एतदालोक्य बाणविद्धोऽपि वज्रांगो जवात्खमुत्पत्य दुर्धररथोपरि निपपात। येनाक्रान्तः साश्वसूतरथध्वजः सोऽन्येषां भटानां यमवर्त्मपुरःसरो बभूव। एतदालोक्य यूपाक्षविरूपाक्षौ मुद्गराभ्यां वक्षासि कपिं ताडयामासतुः। महावीरोऽपि तां वेदनां विषह्य सालप्रहारेण तौ निहत्य प्रघसं भासकर्णं चाऽपि समाक्रान्तवान्। ततो मारुतिर्गुरुणा गिरिशृंगेण तौ विनिष्पेष्य च जगर्ज। तच्छ्रुत्वा

पौलस्त्यो युधि पातितान् वीरान् विज्ञाय युद्धदत्तमक्षं कपिनिग्रहार्थं समादिदेश । ततो बाढमित्युक्त्वा दिवाकरप्रभः स रथं समास्थाय तूर्णं यत्र मारुतिस्तस्थौ तत्र ययौ । अथाऽक्षो बहुमानचक्षुषा कालाग्निकल्पं तं समीक्ष्य हेमपुंखैर्विशिखैः सहसा प्लवंगमं समाच्छादयामास । किंबहुना । तस्मिन् समये भूमिर्न ररास । भानुर्न तताप वायुश्च न ववौ । ततोऽवसरज्ञो हनूमान् दिवाकरो नीहारमिव तां बाणवृष्टिमपसार्य चकाशे । अथ निरालंबस्य कपेः सरथस्य राक्षसस्य च गगने समरोत्सवो बभूव । यद्यप्यक्षेण तत्र बहवो बाणाः प्रक्षिप्ताः किन्तु नैकोऽपि शरः कपिगात्रं संस्पृश्य तं व्यथयितुं समर्थोऽभवत् । ततः कोपाकुलो रावणसुतः श्यामले व्योम्नि खड्गचर्मधरो विचरन् धैर्यराशेरपि कपेर्मतिमोहं चकार । अथाऽवकाशं लब्ध्वा राक्षसराजसुतः कपिमूर्ध्नि यांस्त्रीन् बाणानताडयत् । तै रुधिरक्लिन्नमुखो मारुतिः क्षणं मुमोह । ततः सावधानो भूत्वा कोपकंपितः प्लवंगमस्तं वीरं चरणयोः समादाय शतशः परिभ्राम्य च क्षितावपातयत् । अथोद्गीर्णरुधिरं पिष्टमुकुटं कीर्णकेयूरं दलितांगदं च तं दृष्ट्वा सर्वे राक्षसा हा! हता वयं हा हता वयमिति विलपन्तो रावणान्तिकं जग्मुः । ततो हनूमानपि प्रजाक्षये काल इव कृतक्षणस्तदेव तोरणं जगाम । एवं हनूमताऽक्षकुमारे निहते सरोषः पौलस्त्यः समाहूय मेघनादं प्रोवाच । वीर ! त्वमेवाऽत्र शस्त्रभृतां वरिष्ठोऽसि । तवाऽग्रे देवा अपि योद्धुं नाऽशक्नुवन्निति जाने । वत्स ! जंबुमालिसमेताः सर्वे किंकरा निहताः । पंचसेनाग्रगा अमात्यपुत्रा विनष्टाः । महोदराद्या वीरराक्षसा निधनं गताः । किम्बहुना । रणदक्षोऽक्षकुमारोऽपि वीरगतिमलभत । साम्प्रतं त्वमेव मम दक्षिणहस्तोऽसि । नानाशास्त्रेषु शस्त्रेषु च वैशारद्यमवाप्य संग्रामेऽवश्यं योद्धव्यं विजयार्थिना महीपालेनेति पितृवचनं समाकर्ण्य शक्रविजेता तथास्त्विति प्रतिजगाद । सोऽथ तातं प्रणम्य प्रदक्षिणीकृत्य च यत्र हनूमानासीत्तत्र द्रुतगामिना रथेन ययौ । ततस्तस्य रथनिर्घोषकार्मुकज्यास्वनं च समाकर्ण्य हरिवीरोऽपि संतुष्टतरो बभूव । अथ मारुतीन्द्रजितोर्युद्धं प्रावर्तत । तत्रादौ मेघनादो वज्रसमानवेगान् बाणान्मुमोच । विलोक्यैतन्महाकपिः शराणामन्तरेष्वाशु व्यावर्तत । ततो रावणिरपरानाशुगान् प्रचिक्षेप । पावनिर्हस्तौ प्रसार्य समुत्पतंस्तानपि निवारयामास । अथ रणकर्मविशारदौ तावुभावपि सर्वभूतचित्ताकर्षणं महायुद्धं चक्रतुः । ततः पुनः पुनर्लक्ष्ये विहन्यमानेऽमोघेषु शरेषु च संपतत्सु मेघनादो महतीं चिन्तां प्रपेदे । सोऽथ प्रणिधानेन तमवध्यं ज्ञात्वा ब्रह्मास्त्रेण महाबाहुं कपिप्रवीरं निजग्राह । ततस्तेन बद्धो वानरो निश्चेष्टो भूत्वा महीतले निपपात । एतदालोक्य विमानस्था देवा निरुत्साहा लंकानिवासिनश्च राक्षसास्सोत्साहा बभूवुः । ततः प्रभुप्रभावात्स

संज्ञामवाप्य पितामहानुग्रहममन्यत । यद्यपि विरंचिवरान्ममाऽपि ब्रह्मास्त्रनिवारणे शक्तिरस्ति तथापि मंत्रगौरवादेतदस्त्रं धारयामि । अपरं च । पाशवद्धस्य मेऽवश्यं दशकण्ठसभास्थाने प्रवेशोऽपि भविष्यति । एवं चिन्तयतस्तस्य विग्रहं सहसैव राक्षसा रज्जुवल्कलवल्लीभिर्बबंधुः । ततो रज्जुवद्धस्य तस्य सहसा पाशा विलीना वभूवुः । एतदालोक्य सविस्मयो मेघनादश्चिन्तयामास । अहो ! विमूढैरेभी राक्षसैर्मया कृतं महत्कर्म निरर्थकं कृतं । यतोऽन्यबंधे मंत्रबंधो विनश्यति । एतस्मिन्नेवान्तरे स वीरो वानरो मुष्टिप्रहारैस्तर्जितो राक्षसराजस्य समीपं प्राकृष्यत । एतदालोक्य केचित् प्रोचुः । हन्यताम् । अपरेऽवदन् दह्यताम् । तस्मिन्नवसरेऽस्त्रमुक्तोऽपि हनूमान् स्वबन्धनं मिथ्यैव प्रदर्शयन् सर्वे सेहे । ततो महाकपिः प्रभाकरमिव तपंतं रावणं ददर्श । अथ दशकण्ठोऽपि तमवेक्ष्य मंत्रिमण्डलं प्रश्नार्थं समादिदेश । ततस्तैर्यथाक्रमं पृष्टो वज्रांगो हरीश्वरदूतोऽहमिति निवेदयामास । ततो रत्नसिंहासनासीनं नानाभरणैर्विभूषितं त्रैलोक्यविजयोर्जितं च रावणं दृष्ट्वा हनूमानचिन्तयत् । अहोरूपम्, अहो गांभीर्यम्, अहो सत्वम्, राक्षसराजस्याऽस्य सर्वलक्षणयुक्तता । यद्यधर्मो वलवान् न स्यात् तदा त्वयं सशक्रस्य देवलोकस्याऽपि रक्षको भवितुमर्हति । श्रियोमूलं सदाचारोऽस्ति । प्रभावे च गुणनिवासो वर्तत एव । प्रवादोऽप्येतेन बलात् तिरस्कृत इति मन्ये । नूनं क्रुद्धोऽयमेकार्णवं जगत्कर्तुमुत्सहत इति मतिमान् कपिर्बहुविधां चिन्तां चकार । अत्रान्तरे लोकरावणो रावणोऽपि पुरतः स्थितं पिंगाक्षं तं समुद्वीक्ष्य शंकाहतात्मा चिन्तयामास । किमेष भगवान्नंदी कैलासादिहागतो भवेत् । पुरा मया प्रहसिते येन शप्तोऽस्मि । सोऽयं वानररूपं कदाचिद् धृतवान् ? प्रहस्त ! दुरात्मैषः कुत आगतः किंवाऽस्य कारणमिति पृच्छ्यताम् । निशम्यैतत्स्वामिवचनं प्रहस्तोऽब्रवीत् । कपे ! कस्त्वम् ? कथं चा गतोऽसि । तत्र भयं न विद्यते । यतः प्रभुदृष्टयो निपात्येषु नहि नाम पतंति । विजयकांक्षिणा विष्णुना प्रेषितोऽसि । किंवा महेन्द्रस्त्वां प्रेषितवान् । अथवा यमवरुणवैश्रवणानां चारस्त्वमत्रलक्ष्याऽत्र समागतोऽसि ? तव स्वरूपं तु वानरं वर्तते किन्तु तेजो देवांशत्वं द्योतयति । तथ्यं वदतस्तव मोक्षः सहजः । अनृतं भाषमाणस्य च तव जीवितं दुर्लभमिति सत्यमवगच्छेविसावज्ञं ब्रुवाणे प्रहस्ते पात्रानिर्दशाननाम्नेऽपि प्रतिभाभरणं वचो जगाद । त्रिदशैः सह मे सख्यं नास्ति । नाऽहं विष्णुना शक्रेण वाऽन्येन केनाऽपि देवेन प्रेषितोऽस्मि । जानकीजानेर्दूतोऽहम् । सुग्रीवादेशादत्र समायातः । राक्षसराजस्य दर्शनाय मयोद्यानं विनाशितम् । प्रतीकारे शक्तेनाऽपि मया ब्रह्मास्त्रं न हि निवारितम् । किम्बहुना । पाशविमुक्तोऽहं स्वयं त्वां द्रष्टुमायातोऽस्मि । प्रभो ! सम्प्रति ममाऽपि

पथ्यं वचः श्रूयताम् । राजन् ! हरीशः सुग्रीवस्त्वां कुशलं पृष्ट्वा विज्ञापयति । आसीदयोध्यायां सुरेश्वरोपमो दशरथो नाम महीपतिः। तस्य ज्येष्ठपुत्रो रामचन्द्रो लक्ष्मणेन भ्रात्रा सह पितृनिर्देशाद्दण्डकारण्यं प्रविष्टवान् । तस्य भार्या सीता महात्मनो जनकस्य च तनया जनस्थानेऽकस्मात् त्वया हृता । पवनात्मजोऽहं सुग्रीवगिरा सीतां विचेतुं जलनिधिं विलंघ्य पुरीमिमां संप्राप्तवानस्मि । त्वयाऽपि वानरपुंगवो वाली विज्ञातपूर्व एव । स तेनैकेन शरेण रणे निहतः । ततः प्राप्तराज्यः सुग्रीवः सीतामनुसंधातुं सर्वासु दिक्षु वानरान् संप्रेषयामास । महाबलवताऽपि त्वया निरुद्धा साऽबला मयाऽद्येह दृष्टा । त्वं विदितधर्मतत्त्वस्तपोनिष्ठश्चाऽसि । अतः परदारानवरोद्धुं नार्हसि । धर्मविरुद्धेषु बह्वपायेषु मूलघातिषु च कर्मसु भवद्विधा बुद्धिमंतो न हि सज्जंते । कुलीनानां लक्ष्मीर्नयप्रणयिनी धृतिः सत्त्वप्रणयिनी मतिश्च धर्मप्रणयिनी भवति । महात्मानः शीलविकलां वृत्तिं असत्यमिश्रितं वचः यशःशून्यां विभूतिं च न हि रक्षंति । राजाधिराज ! रामकोपानुवर्तिनां लक्ष्मणशराणामग्रतः स्थातुं देवासुरेष्वपि कः शक्तः ? मयाऽद्य शोकपरायणा सीताऽत्र दृष्टा । किं त्वं यां गृहस्थितां पंचमुखीं पन्नगीमिव न जानासि ? राक्षसराज ! इदं दिग्विजयार्जितं महैश्वर्यं, कायक्लेशसमुपार्जिततत्तपश्चाऽनया परदारधिया सर्वमेकपदे ध्वस्तम् । यथा त्वया धर्मफलं निष्कण्टकं महाराज्यं प्राप्तं तथाऽधर्मस्याऽपि कुफलं क्षिप्रमेव प्रपत्स्यसे । किं बहुना । श्रीरामचन्द्रापकारं कुर्वन् यदा साक्षात्पुरंदरोऽपि सुखं नाऽप्नुयात् । तदा त्वद्विधो जनः कस्योद्यानस्य मूलकोऽस्ति । राजन् ! स्त्रीपुत्रमित्रसचिवसेवकादीनां प्राणान्रक्ष । वृथाऽग्नौ च पतंगवन्नात्मानं मा पातय । नूनं जानकी त्यज्यताम् राघवः प्रसाद्यताम् । अयमायतपक्षस्य मृत्योश्च परिश्रमो विफलः क्रियतामिति । संदिश्य कपिवरो विरराम । निशम्यैतद्वानरवचनं क्रोधमूर्छितो रावणस्तस्य तूर्णं वधमादिदेश । एवं राक्षसेन्द्रेण पवनात्मजस्य वधे समादिष्टे कीर्तिभ्रंशभीरुर्विभीषणः सहसा भ्रातरमवोचत् । तात ! रोषं परित्यज्य प्रसन्नो भव । दूतदोषं च क्षमस्व । यदि त्वादृशोऽपि विचक्षणो रोषेण गृह्यते तर्हि शास्त्रविपश्चित्त्वं तु केवलं श्रम एव । राजन् ! पूर्वं युक्तायुक्तं विनिश्चित्य विधीयतां ततो दूतदण्डः । तच्छ्रुत्वा कोपकंपितो रावणः प्रत्युवाच । परंतप ! राजसभायामप्रियभाषिणः पापस्य वधे दोषो नाऽस्ति । एतदाकर्ण्य नीतिविरुद्धं रावणवाक्यं महामतिर्विभीषणो जगाद । राजन् ! असंशयमयमस्माकं शत्रुरस्ति । अनेनाऽप्रियमपि च भाषितम् । किन्तु सर्वत्र सर्वेषु समयेषु दूता अवध्या इति सन्तो वदंति । अथवा । दण्डमेव श्रेष्ठं मन्यते भवाँस्तदा समाकर्णयतु "वैरूप्यमंगेषु कशाभिघातः मौंड्यं

तथा च लक्ष्मणसंनिपातः । एताहि दूते दण्डान् प्रवदंति दूतस्य वधस्तु च न श्रुतोऽस्ति" । राजाधिराज ! दूतोऽयं साधुरसाधुर्वा कीदृशोऽपि भवतु । किंत्वयं परैः संप्रेषितः । दंडोऽयं तेषु विनिपात्यतां यैरयं विसृष्टः । राजन् ! परार्थं ब्रुवन् दूतः सर्वथा वधं नार्हति । निशम्यैवं विभीषणवचनं रावणोऽब्रवीत् । सत्यमुक्तं भवता । दुरात्मनोऽस्य वधाय कोऽप्यन्यः प्रतीकारः क्रियताम् । वानराः प्रायः प्रियपुच्छा भवन्त्यतोऽस्य लांगूलं दह्यताम् । तच्छ्रुत्वा कोपकर्कशा राक्षसा जीर्णवस्त्रैरस्य लांगूलं संवेष्ट्य तैलेन परिषिच्य वह्निना संदीपयामासुः । सोऽथ ज्वलितपुच्छो निशाचरैश्च कृष्यमाणोऽखिलां लंकां दग्धुं क्षणं पराभवमपि सेहे । एतदालोक्य केचिद्राक्षसाः प्रसन्ना बभूवुः । केचिच्चौदासीन्यमवलंबिरे । अत्रान्तरे काचिन्निशाचरी वैदेहीं समभ्येत्य प्रोवाच । सीते ! यस्ताम्रमुखः कपिस्त्वया सह संवादं कृतवान् । सोऽद्य प्रदीप्तेन लांगूलेन परिणीयते । निशम्यैतद् दारुणं वाक्यं कृपावती सीता हव्यवाहनमुपसृत्य व्यजिज्ञपत् । प्रत्यक्षदेव ! यदि सतीवृत्तेन मे किंचित्तपः फलमस्ति । तदा तु मरुत्सखोऽपि भवान् हनुमद्गात्रं स्पृष्ट्वा सपदि शशिशीतलो भवतु । एवं तयाऽभ्यर्थितः प्रदक्षिणशिखः शिखी हनूमतः पितृमित्रं हिमसंघातशीतलत्वमवाप । ततो मारुतिर्निबिडं भुजबन्धनं सहसा छित्त्वा लांगूलज्वालावलयिताम्बरो वेगेनोत्पपात । ततः प्रदीप्तलांगूलः स कपिः लंकाया भवनाग्रेषु विचचार । सोऽथ गृहाद् गृहं वीक्ष्यमाणोऽतर्कित एव पुरद्वाराग्रशेखरं समारुह्य परिघेण बभंज लंकां च ददाह । अथोग्रवेगेन पावकेन ज्वलितेषु वेश्मसु वह्निशिखावली दिक्षु हेमस्रग्दामविभ्रमं चक्रे । तस्मिन्नवसरे व्योम मुहूर्तावर्तितैः स्फुलिंगैर्मणिगृहोदग्ररत्नजीवैरुद्गतैरिव शुशुभे । ततः प्रलयसूचकः संवर्तकाभ्रगंभीरः कृष्णवर्त्मनः कलकलाशब्दः सर्वत्र प्रासरत् । ततो मारुतिःपरिघाघातभग्नानां स्फुटितानां पततां च मणिगृहाणां शब्दस्तीव्राक्रंदसमतां जगाम । ततो ज्वालमालाकुला सागरे च प्रतिबिम्बिता लंकापुरी स्वतापनिर्वापणायैवान्तर्निमग्ना समदृश्यत । ततः केचिद्धता वयमिति ब्रुवाणाः केचित् पाहि मां पाहिमामिति भाषमाणा इतस्ततश्चेरुः । अत्रान्तरे सरमा नाम निशाचरी संतप्तहृदयां सीतां समाश्वास्य प्रोवाच । सखि ! स रामदूतो हनूमान् निखिलां लंकां प्रज्वाल्य सुभटांश्च निहत्य क्व गत इति न विज्ञायते ? निशम्यैवं पीयूषोपमं सरमावचनं जानकी मुहुर्मुहुस्तां प्रशस्य भूयोभूयोऽनलाऽनिलयोर्नमस्कारं चक्रे । एवं पवननंदनो बलीयसा वह्निना दशास्यनगरीं दग्ध्वा सहसा पश्चात्तापाकुलश्चिन्तयामास । अहो ! असमीक्षितकारिणा मया न केवला लंकैव दग्धा । किन्तु सीताऽपि विनिपातिता । जगति त एव धीरा

सर्वसंपदां भाजनं ये प्रचण्डकोपाग्नेः क्रीडापतंगतान्न यांति । हा ! यदर्थेऽयं महाक्लेशः सोढः । सैव प्रमादिना मया हता । अहह ! तरुमुन्मूल्य स्वल्पमतिरहं फलमभिलषामि । अस्मिन्नेव पावके पतामि किंवा घोरे मकरालये पतित्वा देहमुत्सृजामि ? प्रमादिनो मे सिद्धोऽप्यर्थः काकतालीयवत् संप्राप्तो विभवः कुमतेरिव सहसा प्रनष्टः । केवलं शुभशंसीनि निमित्तानि तु पश्यामि । अप्यनुकूलेन वह्निना कदाचित्सा महानुभावा सुरक्षिता भवेदिति-चिन्ताकुलो मारुतिर्लंका दग्धा किन्तु सीता यथावस्थितेति संलपतां विद्याधराणां वाचं शुश्राव । ततोऽतिसंतुष्टो हनूमान् सहसाऽशोकवाटिकां गत्वा तत्र च सुप्रतिष्ठितां सीतां समवाप्य निश्चिन्तो बभूव । सोऽथ बहुविधैः सुभाषितैः सीतां समाश्वास्य तामभिवाद्य च समुद्रं तर्तुमद्रि-शृंगं समारुरोह । ततः सत्त्वसंपन्नो मारुतिरपरो दिनमणिरिव मेघसंघातान् प्रक्षिपन् नीलम णिप्रभं गगनं व्यगाहत । सोऽथ प्रीत्यर्थमुद्गतं मैनाकमंगुल्या स्पृष्ट्वा जलधितटे द्रुमश्यामां श्रीगिरितटीं ददर्श । ततो जाम्बवान् महानन्दलक्षणं नादं समाकर्ण्यांगदं जगाद । युवराज ! नूनं मारुतिः कृतार्थः समायातः । यदस्य बलवत्तरो वेगनिर्घोषः श्रूयते । किम्बहुना । संप्र-त्यस्य शोभा पीयूषहस्तस्य सुपर्णस्येव विद्यते । निशम्यैतज्जाम्बवद्वचनं सविस्मया हरि-यूथपा भूयोभूयः समुत्थाय तं विलोकयामासुः । ततो वेगेन समुत्पतन्तं तं वीक्ष्य दूरा-देव कृतांजलिपुटाः सर्वे वानराः पुनः पुनः प्रणेमुः । अथ पुष्पवर्षिभिः पादपैः कृता-तिथ्यो मारुतिस्तूर्णं महेन्द्रगिरिशिखरेऽवतीर्य निषसाद । ततोऽगदप्रमुखा वानरयूथपा निशाचरशस्त्रास्त्रलेखोल्लिखितविग्रहं वज्रांगं परिष्वज्य प्रीतेरन्तं नहि लेभिरे । ततो रचि-तांजलिर्हनूमान् पूज्यवरं वृद्धं जाम्बुवन्तं प्रणिपत्यांगदं युवराजं देवी मया दृष्टेति सानन्दं समभाषत । एतदमृतमिव सुखप्रदं वचनं समाकर्ण्य प्रसन्नाननाः सर्वे वानराः कथं दृष्टेति पप्रच्छुः । तच्छ्रुत्वांऽजनेयो यथावृत्तं यात्राचरित्रं पृच्छकेभ्यो निवेदयामास । ततः सशोका सीता मया समवलोकिता । सकिंकराऽशोकवाटिका भग्ना । अक्षकुमारप्रभृतयोऽ-नेके योधा निपातिताः । निखिला च लंका दग्धेति वाक्यं समाकर्ण्यांगदो विहस्य प्रोवाच । मारुते ! शत्रुशल्येन सुहृदानंददायिना च त्वया सर्वमनुष्ठितम् । जगति येषां महानु-भावानां मतिः कार्यकाले स्फुरति तेषामेव सिद्धार्थयशसां जीवितं साधु मन्ये । भवता जलधि लंघितः श्रीमती जानकी विलोकिता पौलस्त्यश्च परिभूतः किमतःपरं कर्तव्यमवशिष्टम् ? किम्बहुना । विपरीतमपि दैवं भयादिव ते साहसं सततमनुसरति । अधुना तां सतीं समा हृत्य रावणं हत्वा च वीरैर्भवाद्भिः सहितो रघुपतिं द्रष्टुमिच्छामि । यदि मायाविमेघनादो दिव्यास्त्रग्रामकोविदोऽस्ति । तर्हि वयमपि तेषां युद्धे परिभवास्पदं नेति सत्यमवगन्तव्यं

महानुभावैः । मनीषिणः परात्मनिन्दाश्लाघासु सदैव मौनिनो भवंतीति वृद्धानुशासनं संस्मरन्नाहं स्वशक्तिं स्वतो वर्णयामि। अथ महावीर्यस्याऽस्य जाम्बुवतः शौर्यं वर्तते सर्वथैव लोकोत्तरम् । कथय सहस्रांशोः प्रतापप्रमाणं वक्तुं कः प्रगल्भते ? पावने ! त्वणादाचरसंक्षये त्वं दृष्टसारोऽसि । तस्मात्तवाऽस्मिन् विक्रमारंभे गुणस्तुतिः पुनरुक्तितुल्याऽस्ति । मनोजवमेनं पनसं को न जानाति ? यः स्वबाहुबलेन त्रिलोकीमपि जेतुं शक्नोति ? यदि कश्चिद्भुवनविश्रुतं नलं न जानीयात् । तदा स चक्षुष्मानपि निरभ्रेऽह्नि दिवाकरमपि नावगच्छेदिति मन्ये । इमावश्विनीकुमारसुतौ मैन्दद्विविदौ कार्येऽस्मिन् संलग्नौ स्तः । याभ्यां सुराब्जिरवा यशसा सहैवाऽमृतं पीतम् । श्रीरामसुग्रीवौ रावणवधं न न्यषेधतामतोऽप्रतिषिद्धमनुमतं भवतीति न्यायमनुसृत्य दशाननविनाशं कुर्वाणा वयं न दोषलेशं स्पृशामः । परार्थेषु समर्थानामभ्यर्थना क्वोपयुज्यते ? प्रभाकरः स्वयमेव प्रतापयति शेषश्च स्वतएव पृथ्वीं बिभर्ति । तस्मादितो लंकां गत्वाऽहं तु यथोचितं करोमि। दृष्टाऽपि सीता कथन्नानीतेति वचः श्रोतुं नाऽहं समर्थः। निशम्यैतदंगदवचनं वृद्धो जाम्बवान् प्रोवाच। युवराज ! कृतमप्येतत्काकुत्स्थाय न रोचते । यतः श्रीरामभद्रेण जनसंसदि रावणवधः प्रतिज्ञातः। सत्यसंगरः स कथं तद्विसंवादं सहते ? सखे! किं त्वं न जानासि । यत् स्वप्रतापाच्छादनं मानिनो न सहन्ते ? वयं तु यथोक्तं कृत्वैव राघवं समुपेष्याम इति ब्रह्मसुतेनोक्ते तथेति सर्वेऽपि प्लवंगमाः प्रोचुः । ततो मारुतिं पुरस्कृत्यांगदप्रभृतयो वानरयूथपाः किष्किन्धां गन्तुं समुद्ययुः । अथ हर्षाधिकजवा गच्छन्तस्ते सुपक्षा भूधरा इव विरेजिरे । ततः सोत्कण्ठाः समरोत्सुकाश्च कपयोऽचिराद्रामाय प्रियमाख्यातुं सुग्रीवाभिलषितं मधुवनं प्रापुः । अथ ते तत्र दिव्यानि मधूनि पीयूषरसवंति च फलानि पवनात्मजं ययाचिरे । ज्ञात्वैतन्महामतिर्मारुतिर्युवराजं सप्रश्रयं मधुवनप्रवेशाज्ञामयाचत । एतदाकर्ण्य प्रहृष्टोऽगदो यथेष्टमत्र मधुपानमहोत्सवः क्रियतामिति समादिदेश । तच्छ्रुत्वाऽतीवसंतुष्टा वानरा मधुवनं प्रविश्य यथाकामं मधुपीत्वा सुधास्वादूनि च फलानि भुक्त्वाऽतर्पिषुः । ततः केचिद्वृक्षानारुरुहुः । केचित्फलैः परस्परं युयुधिरे । अन्ये नादैर्जहसुरपरेच शाखा ललंबिरे । किम्बहुना । धावद्भिः पतद्भिर्नृत्यद्भिर्मुहुर्मुहुः कर्षद्भिश्च कपिभिः सर्वं वनमकम्पत । एतदालोक्य काननाधिपो दधिमुखस्तान् यदा निवारयामास । तदा ते निषेधरुषा कोपमवाप्य प्रत्युत तं ताडयामासुः । ततो दधिमुखः क्रोधात्पादपमुद्यम्य यावत्प्रहरति तावदंगदः परित्यज्यार्यगौरवं तं भुवि विनिष्पिष्य च भग्नोरुभुजकन्धरं विदधे । सोऽथ चेतनां संप्राप्य यत्र काकुत्स्थाभ्यां सह सुग्रीवो-

ऽतिष्ठत् । तत्र गत्वा च सर्वं वृत्तान्तं तस्मै समावेदयामास । एवं दधिमुखभाषितं श्रुत्वा वानरेश्वरः किमेतदिति लक्ष्मणेन पृष्टः सोऽभ्यधात् । काकुत्स्थ ! हनुमत्प्रमुखैर्वानरयूथपैरवश्यं श्रीमती सती सीतासमवलोकिता । यतोऽकृतार्थानां वानराणां नैवंरूपो मदो भवेत् ? ततो दधिमुखमपि सुग्रीवोऽवदत् । अटवीपालक ! यथा मधुवनं मम तथाऽगदस्याऽपि तत् । साम्प्रतं मद्गिरा ते तरस्विनस्तूर्णमत्र समायान्तु । निशम्यैतां सुग्रीवाज्ञां सौमित्रिणाऽनुमोदितो दधिमुखः संकोचं विहाय क्षणात् प्रतिनिवृत्तः । सोऽथ प्रशांतमदविप्लवान् युवराजांऽगदप्रमुखान् प्रसाद्य स्वाधिकारमशून्यं चकार । ततस्ते रामलक्ष्मणसुग्रीवदर्शनोत्सुकाः सहसा समुत्पत्य जलदा इव नदन्तो व्योम्ना ययुः । अथ मारुतिपुरस्सरा वीरास्ते रामाश्रममवाप्य प्रभुं प्रणम्य च कृतकृत्या बभूवुः । ततः कृतांजलिर्हनूमान् सुग्रीवप्रेरणया रघुनन्दनं जगाद । देव ! देववधूः श्रीमती सीता जीवति । शशिकलेव संक्षयक्लिष्टा सा मयाऽवलोकिता । एवममृतास्वादसोदरं हनुमद्वचो निशम्य नवजलधरस्वनोदितो रघुपतिरुवाच । महावीर ! दिष्ट्या सा मम देहबद्धा धृतिर्जानकी जीवति ? क्व सा दृष्टा ? कथं विलोकिता ? कथं वा सा मनस्विनी मयि वर्तते ? हा महता मद्वियोगेन सा तन्वी प्रतनुतां गतेति मन्ये । श्रीरघुनाथेनेत्युक्ते पवननंदनो जगाद । कृपानाथ ! पारे समुद्रं लंकायां सा तव प्रिया एकवेणीव्रता, मलिना, दीर्घध्याननिश्चललोचना, तप्तनिःश्वासलक्ष्मणा च मया दृष्टा । रावणगृहोद्याने राक्षसीभिः सुरक्षिता सा तिष्ठति । प्रभो ! सासीत् स्वभावतो मृद्वंगी । किंतु विशेषतस्त्वद्वियोगात्प्रतिपत्पाठशीलस्य विद्येव क्षीणतामयासीत् । स्वामिन् ! तत्कोपकृशानुना पौलस्त्यः दग्धः किं च त्वदीयबाणावली तु तत्र निमित्तमात्रमेव भविष्यतीत्युक्त्वाऽस्मै विस्तरेण सीतासंदेशं विनिवेद्य च तदभिज्ञानमपि समर्पयामास । ततो रामस्तं वेणिकामणिं समादाय हृदि निधाय च तं बाष्पाम्बुभिः प्राक्षालयत् । सोऽथ वैदेहीदर्शनेन श्लाघ्यां पावनितनुं परिष्वज्य चिरेण धृतिं लेभे । ततो रामो हनूमन्तमुवाच । मारुते ! सुमहत्कर्म कुर्वतस्तव स्फीतं यशो भवसागरेऽक्षयसेतुतां यातम् । जगति प्रभुमित्रबंधुस्वजनानां मनोरथसिद्धये त्वद्विधो विरलएव जनो जायत इत्यभिधाय श्रीरघुवरो वल्लभाप्राप्तौ समुद्रतरणमेव मुख्यं विघ्नं मेने । ततो विस्मृतधृतिः स चिरं वियोगमिव दुस्तरं सागरं ध्यात्वा शोकार्णवे ममज्ज । एतदालोक्य मित्रवत्सलः सुग्रीवः सविनयं जगाद । धैर्यसिन्धो ! विक्रमावसरे विदुषोऽपि तव कोऽयं व्यस्तविवेकः शोकविप्लवः ? सम्प्रति वैक्लव्यजननीं शुचं त्यक्त्वा प्रमोददायिनीमुत्साहशक्तिं च भज । रघुराज ! मित्ररूपेण

पुरुषार्थेन शोकशत्रुं सत्वरं निपातय । देव ! तव करभाजि चापे सति सप्तद्वीपेयं मही करतलस्थैव । तथा कर्णान्ताकृष्टायां प्रत्यंचायां त्वयि सुरेन्द्रलक्ष्मीरपि मिलिता । किंच लक्ष्यानुवर्तिनि शरे के वीरास्त्वदनुवृत्तिपरा न जाता अपि तु सर्वेऽपि त्वत्सेवका जाता इत्यहं सम्यग्वेद्मि । काकुत्स्थ ! नाऽयं निर्वेदकालः उक्तं च:—

स्वस्थे चित्ते बुद्धयः प्रस्फुरंतीति महात्मनां वचनं सर्वथैव सत्यम् ।

केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारंभो विषादपरिवर्जनम् ॥

उद्यमेन हि सिद्ध्यंति कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशंति मुखे मृगाः ॥

उद्यमः साहसं धैर्यं बलं बुद्धिः पराक्रमः ।
षडेते यत्र विद्यंते तत्र देवः सहायकः ॥

शनैः कंथा शनैः पंथाः शनैः पर्वतलंघनम् ।
शनैर्विद्या शनैर्वित्तं, पंचैतानि शनैः शनैः ॥

गच्छन् पिपीलको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥

अंजनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम् ।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मभिः ॥

अज्ञोऽपि तज्ज्ञतामेति शनैः शैलोऽपि चूर्ण्यते ।
घृणोप्यात्ति महावृत्तं पश्याभ्यासविजृंभितम् ॥

किन्तु महायुद्ध समयेऽस्मिन् श्रीमदार्य्यकुलकमलदिवाकर ! शितशास्त्रास्त्रप-रूपाः पौरुषश्रियः समुचिता इत्यभिधाय पवनात्मजं लंकादुर्गरचनां पप्रच्छ । एतदाकर्ण्य हनूमान्प्रत्यवदत् । वानरराज ! नदीनिर्झरशालिनी लंका त्रिदशैरप्यदृश्या । यत्र पूर्वद्वारमयुतराक्षसैः परिवेष्टितम् । पश्चिमद्वारि नियुतं दक्षिणद्वार्ययुतमुत्तरद्वारि च ततोऽप्यधिकं सैन्यं रावणेन दिवानिशं न्यस्तं तिष्ठति । निशम्यैतत्पावनिवचनं दयि-तादर्शनोत्सुको रामः प्रीत्या सुग्रीवमवदत् । सखे ! अस्मिन् दिव्यलक्षणे मध्यान्हे उत्त-राफाल्गुनीयुते च विजयमुहूर्ते जययात्रा मम समुचितेत्युक्त्वा सन्नद्धैर्वानरानीकनायकैः

१५

सह नीलं सेनाग्रगं कृत्वा सहसा राघवेन्द्रः प्रतस्थे । ततो रघुपतिः पावनिं समारुह्य विष्णुर्गरुडमिव प्लवंगसैन्यानां मध्येऽगमत् । अथ लक्ष्मणोऽप्यंगदमारूढो विजयशंसीनि निमित्तान्यवलोकयन् प्रोवाच । आर्य ! एष सुखस्पर्शः पवनो वाति । मृगपक्षिणो दक्षिणा मैथिलीलाभं शंसंति । व्योम्नि सूर्यादयो ग्रहाः प्रसन्नाः । विशाखाख्यं नक्षत्रं रघूणां निरुपद्रवम् तथा च राक्षसनक्षत्रं मूलं धूमकेतुना पीडितमिति भ्रातृवचनं समाकर्ण्य काकुत्स्थः सीतामिव प्रीतिं समवाप्तवान् । ततो रामो विन्ध्याचलं महागिरिं मलयाचलं महेन्द्राद्रिं च समतिक्रम्य मकरालयं ददर्श । सोऽथ शुभ्रवारिदेन स्फुरत्फेनगगनेन च मिश्रतां गतं सत्संगतमिव परैरजस्रमविज्ञातान्तरं महाशयं सागरं ज्ञात्वा महेन्द्राग्रादवरुह्य च जलधितटीं ययौ । ततः सर्वतस्तटमाला निविष्टेषु कपिसैन्येषु वेलाकूलशिलातटे स्वयं रघुवीरोऽपि निषसाद । अथ कल्लोलमालिसागरतटे निविष्टो रघुनंदनः सुग्रीवं जगाद । सखे ! एष सत्वनिधिः पयोधिरपारः । अधुनाऽस्य तरणोपायस्तूर्णं विचिन्त्यताम् । देशेऽस्मिन्हरियूथपा अप्रमत्ता भवंतु । सैन्यविनिवेशोऽपि यथास्थानं निर्धार्यताम् । संभूय पृथक् पृथग्वा क्षणं मंत्रोऽपि क्रियताम् । आरंभः पुरुषद्रव्यसंपत्, देशकालविचारः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पंचाङ्गविचारोऽप्यत्रावश्यक इति सुग्रीवं समादिश्य लक्ष्मणमपि जगाद । भ्रातः ! यद्यपि भावानां प्रत्यहं ग्लानिरुपजायते तथाऽपि सीतावियोगजः शापोऽयं पुनर्मे नवीभूतः । एष समीरणः सीतां दृष्ट्वा इयतीं भूमिं च समुल्लंघ्य बन्धुरिव विश्वासं संप्रयच्छन् मम गात्रं पुनः स्पृशति । वत्स ! धन्योऽयं मम मनोरथः । यः क्षणेन सीतां स्पृष्ट्वा सहसैव मामभ्युपैति । मनस्विनीन्तां जीवंतीं श्रुत्वा श्रोत्रजीवितस्तु संप्रति संजातः । किन्तु वरवर्णिनीन्तां विलोक्य लोचनजीवितः कदा भविष्यामि ? पुरा यद्विलोकने निमेषलेशमपि यो विघ्नताममन्यत । सोऽहं तस्या मध्ये जलनिधिव्यवधानं कथमुत्सहे ? किम्बहुना । विरहव्यथेयं मे हृदयाज्जंतोर्ललाटफलके-लिखिताक्षरावलीव नापैतीति जानकीजानेः प्रलापं श्रुत्वा लक्ष्मणो विविधोपायैः समुद्रलंघनं प्रदध्यौ । ततः शनैःशनैः प्रयातेऽह्नि जगत्तु सर्वं चक्रवाकवियोगाग्निधूमेनेवान्धकारितं बभूव । केवलमेको रघुपतिरेव प्राणप्रियां सीतां ध्यायन्नजागरीत् ।

इति श्रीगद्यरामायणे सुंदरकाण्डम् ।

---

श्रोन्नमः शिवाय ॥

# अथ लंकाकाण्डं समारभ्यते।

———:-०-:———

जितं भगवता तेन हरिणा लोकधारिणा।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

अथ प्रभातेऽत्र तु कृतनित्यकृत्यो रघुपतिः स्वमित्रैः सह समुद्रसंतरणोपायं विचिन्तयामास। अस्मिन्नेवावसरे तत्र वृद्धा राक्षसराजजननी निशि धर्मनिष्ठं विभीषणं प्रोवाच। वत्स ! वानरवीरेण तेन लंकामखिलां विचित्य राघववल्लभाऽवलोकिता। यः पुमान् निःशंकं पातकं कृत्वा रमते स हालाहलं विषं पीत्वा मालाकण्ठो नृत्यति। एता राजलक्ष्म्यः स्वभावेन गुणवर्गानुसारिण्यश्च प्रथिताः। अतः शीलदुकूलिन्य एता मूर्खं परित्यजंति दुर्वृत्तमवमन्यन्ते प्रमादिनं च नोपसेवन्ते। गुणे द्वेषो दोषे चासक्तिः श्रीविनाशस्य प्रथमं लक्षणं कथितम्। पुत्र ! प्रायः पतिष्यतामेव मतिः सदा किल्बिषमनुसरति। चपलेयं विभूतिरेकदा तु वात्यारेणुनिचयमिव प्राणिनमुच्चैःपदं नयति। पश्चात् सहसैव तमधः पातयति। रावणोऽयं परदारसुखायाऽतीव श्राम्यति। परन्तु तत् करधृत पारदवन्नतिष्ठति। खरदूषणसंहारिणस्तस्य रघुपतेः पराक्रमं रक्तः कंकालमालिन्यो वनभूमयो वदन्ति। एकत्र रामप्रतापोऽपरत्र च रावणदुर्णयः सर्वथाऽयं योगः शुष्केन्धनाऽग्निसमागमोपमः प्रतीयते। यथा कल्लोलिनीकूलसलिलैश्छिन्नमूलो द्रुमो विनिपात्यते तथा कामादिभिर्महाव्यसनैरासक्तो नृपः सहसा शत्रुभिरुन्मूल्यते। वत्स ! राघवप्रभावं विचिन्त्य प्रतिक्षणमहं बिभेमि। यतो महानुभावः स दारापहारिणं रिपुं युधि द्रष्टुं कथमुत्सहते ? हा मूढो दशाननः कालव्यालं गले कृत्वा शेते। मूर्तिमन्तं हुताशनं वाऽऽश्लिष्यति। किंवा सिंहस्य दंष्ट्रामाक्रम्य क्रीडतीति मन्ये। प्रियसूनो ! यदि ते हृदये भ्रातुर्वात्सल्यमस्ति। तर्हि विनैव प्रश्नं तमुपसृत्य च तं हितं ब्रूहि। येन संकोचं विहाय रामाय जानकीं समर्प्य च सुखी भवेदिति विभीषणमुपदिश्य राक्षसेन्द्रजननी विरराम। अथ प्रभाते कृतदेवार्चनो विभीषणो दशकंधरमंदिरं प्रविश्य महामात्यैः परिवृतं सभासीनं रत्नाभरणभासुरं च रावणं ददर्श। ततः स तं प्रणम्य तदभ्रूविनिर्दिष्टं प्रीतिशासनमासनं भेजे। अथ निःशब्दनि-

श्चले तस्मिन् सदसि प्रगल्भो विभीषणः प्रभुं समभ्यधात् । तात ! जगति यथा सुरासुरशिरोरत्नमालाललितशासनप्रभावो भवतस्तथाऽन्यस्य कस्य विद्यते ? तवाग्रे तिग्मांशुस्तापं संहरति समीरणो नीचैर्वाति । कुवेरोऽलकां परित्यज्य दासवदनुसरति । महेन्द्रो नानोपहारैः प्रत्यहं पूजयति । यमो भयाल्लंकां नाऽवलोकयति । वरुणश्च सदैवाज्ञां परिपालयन् परिचर्यापरायणस्तिष्ठति । किम्बहुना । देव ! इयं सम्पन्नपौरुषा लक्ष्मीरियतीं भूमिं समारूढाऽपि यदि दुर्नयवाच्यतां यातीति महती लज्जैषा । महात्मनां विभूतिरयशः स्पृष्टा, मतिः शिष्टाचारेङ्गिता चेष्टा च साधुजनानिष्टा न भवति । लक्ष्मीरियं निरनुक्रोशा वारस्त्रीव बहुगामिनी वर्तते । एषा सदैव सरागर्वविमुखी भूत्वा व्यसनिभ्यः सत्वरं पलायते । राजन् ! यदैव दुःखदूतिकैषा रामवधूरत्र प्रविष्टा तदाप्रभृत्येव नो गृहेषु घोराणि दुर्निमित्तानि दृश्यन्ते । अग्निहोत्रे नाऽग्निर्भाति । हविः कृमिकुलाकुलं भवति । लंका च क्रव्यादगणनादिताऽऽकर्ण्यते । अतस्तेषां कुशकुनानामिदमेव परं प्रायश्चित्तमस्ति । यदेषा मैथिलीतूर्णमेव काकुत्स्थाय समर्प्यताम् । निशम्यैतद् भ्रातृवचनं कोपजिह्मानननो दशग्रीवः सचिवमुखान्यवलोक्य जगाद । प्राज्ञा मंत्रमूलं विजयं वदंति । ममैता विश्वजयश्रियो भवद्भुजबलमाश्रित्यैव तु परां प्रौढिमुपागताः संति । तेन कपिना यच्चापलं कृतं तत् तु स्वजात्युचितमेव । सोऽधुना क्वाऽस्ति ? नूनं तेन मंत्रावकाशो विवृतः । क्षुद्रशत्रोर्नोपेक्षा न च प्रतिक्रिया शोभते । तस्मात् संदेहदोलायां मंत्रस्यैव प्रयोजनमस्ति । यत्र मतिष्वैक्यं स मंत्रः श्रेष्ठः । यत्राऽन्तरं स मध्यमः । यत्र च सर्वथैव मतभेदः स विवादक्लेशजनकोऽल्पधर्मो मंत्रो निगदितः । व्यसनग्रस्तस्तापसश्च राघवोऽस्माकं चिन्तास्थानं नास्ति । न मे तद्विक्रमे चिन्ता वर्तते । तस्य तु तपश्चिन्त्यताम् । निशम्यैतद्राक्षसराजवचनमिङ्गितज्ञः प्रहस्तः सविनयं प्रोवाच । देव ! केसरिणो हरिणाघाते क्वोपयुज्यते संरंभः ? एवमेव सहस्रांशोस्तमःक्षये न कश्चिन्मंत्रः क्रियते ? राजाधिराज ! विक्रमोत्साहवतां पुरुषार्थिनां कुटिला अपि पंथानः स्वयमेव सरलतामायांति । लंकेश ! सहसैव त्वत्प्रतापहृतैश्वर्ये शतक्रतौ स्वनयग्रंथभारिको वृहस्पतिरपि यदा लज्जां धत्ते । तदा का कथाऽन्येषां देवानाम् । किन्बहुना । पूर्वं तु रामः पदच्युतः, ततः फलाहारी, ततो वनवासी ततश्च तपस्वी । अतः कस्य नाम शंकास्पदम् ? यदि सुग्रीवादिभिर्वानरैः सह रामः समेष्यति तदा नः का क्षतिः ? किन्तु कपिशिरःफलैः कन्दुकक्रीडैव भविष्यति । साधुषु साम प्रयोक्तव्यम् । दानं लुब्धजनोचितं भणितम् । शंकिषु भेदः श्रेयान् । स्तब्धेषु च दण्डमेव भेषजं निगदितम् । सामप्रयोगो हनूमता छिन्नः । नीचेषु दानं न हितावहम् ।

निस्सहायस्य भेदः क्व ? अतो राघवः सर्वथैव दण्डार्हः । राजन् ! यदा दुर्बलेनाऽपि रामेण सामच्छिन्नं तदा बलिनोऽपि वयं क्षुद्रकृतं दर्पं कथं सहामहे ? देव ! सरलताया परमावधिरयं । यत्र मर्त्योऽपि सम्यग् विचिन्त्यते । अन्यथा भोगभोक्तृसमागमे क उपायचतुष्टयं पृच्छति ? एवं प्रहस्तेनोक्ते दर्पान्धा वज्रदंष्ट्रपुरोगमाः प्रवरामात्या अपि प्रोचुः । राजन् ! अस्थाने किमर्थमयं मंत्रारंभः क्रियते ? क्षुल्लकेषु वानरेषु नो रिपुचर्चाऽपि न घटते । देव ! भवता कैलासकूटेषु रथचक्रसमुल्लेखैर्विबुधार्यजयोर्जितं यशो लिखितम् । मायानिधिना मयेन भयात् स्वकन्याव्याजेनैव मूर्तशक्तिरिव ते समर्पितेति ब्रुवाणेषु सचिवेषु नाग इव श्वसन् महापार्श्वोऽपि जगाद । यदि कृपयाऽसमानजने साम प्रयुज्यते । तत्सौजन्यं जातु जनो भयमेव समभिमन्यते । देव ! मनुष्यवधेऽस्माकं चिन्ता नहि शोभते । सिंहः स्वप्नेऽपि जंबुकवधे मतिन्न कुरुते । अधुना मंत्राय स्वस्त्यस्तु । मंत्रिभ्यश्चाऽप्ययमंजलिर्भवतु । भृत्यलेशाज्ञया सहसैव वानरक्षयः क्रियताम् । विभो ! विहाय संकोचं सरामलक्ष्मणस्याऽस्य कपिसैन्यस्य भक्षणं भृत्याय मह्यं प्रमाणीक्रियताम् । तच्छ्रुत्वा महोदरोऽवदत् । पतंगपुत्तिकादंशमशकपिपीलकमूषकसरीसृपतुल्या वानरा भवादृशां कथं वा शंकास्थानम् ? देव ! यथा परमात्मा स्वस्वभावं न वेत्ति तथा भवानपि स्वप्रभावं न जानीषे ? इयं सालतालशिलायुधा हरिचमूः कुक्षिकोणैकदेशमपि न पूरयिष्यति पर्याप्तभोजनं तु दूरम् । एवं राक्षसानां वचः श्रुत्वा भ्रातृहितेच्छया विभीषणो बभाषे भ्रातरः ! सहसा परावज्ञा न कर्तव्या । प्रमत्तानां बलाद् गर्ते निपतितानां मृणालतंतुना केन गतिनिरोधः क्रियते ? आश्चर्यनिधयेविधये नमः । यश्चिन्त्यमानोऽपि प्रतिक्षणं विद्वज्जनानेव वंचयति । राजन् ! य एते तव मंत्रिणस्थितास्ते सर्वे प्रायश्छन्दानुगाः । प्रियं तु वदंति परं हितं न ब्रुवंति । प्रियंवदेभ्यो धूर्तेभ्यो नमस्कारोऽस्तु । ये स्वामिनां पुरः पथ्यं कटुकं च वक्तुं स्वप्नेऽपि न शिक्षिताः । तात ! विशीर्णेऽस्मिन् विभवोद्याने लक्ष्मीलतापट्चरणा मधुरभाषिणो धूर्ता न क्वचित्तिष्ठंति । यद्यैश्वर्यसमेतं जीवितं रक्ष्यं तदा तु देव ! स्वयमेव तूर्णं काकुत्स्थाय मैथिली त्यज्यताम् । राजन् ! यावदेषा लंका कथाशेषतां न गता तावल्लक्ष्मणाग्रजाय वैदेही समर्प्येयाम् । श्रीरामचन्द्रोऽप्रमादी महोत्साही सद्वर्त्मनि च स्थितोऽस्मात्संयुगे सर्वैस्सुराऽसुरैरपि जेतुं न शक्यः । इयं विजयलक्ष्मीः सत्यव्रतं सेवते । शीलवन्तं श्रयते । शूरं च श्लिष्यति । संसारोऽयं गुणानुरागी । प्रतिष्ठा प्राणिहितात्समुपलभ्यते । यत्र प्रतिष्ठा तत्र यशः । विभूतयश्च यशोलुब्धा भवंति । देव ! लक्ष्मीर्नीतिमनुसरति । जयउद्यममनुयाति ।

शक्तिः प्रभावमनुधावति । यशश्च पुण्यमनुगच्छति । जगत्यस्मिन् विवेकिनां वीराणामेव मंत्रसिद्धयः फलिताः श्रुताश्च दृष्टा नाऽविवेकवताम् । राजाधिराज ! लाभाऽलाभौ विचार्य शीलधरो भव । व्यसने च मतिं मा कृथाः । रामेण किमपकृतम् ? यत् त्वं तस्य भार्यामपाहरः । एता विभूतयः कुमतिं परित्यज्य सुमतिं स्वयमेव समुपाश्रयंति । युद्धे कदात्वेको बहून् निहंति । कदाचिदेकं बहवो निघ्नन्ति । अतो युद्धमर्यादं मत्वा प्राज्ञा जये सशंकिता एव तिष्ठंति । लंकेश ! धनुष्मता क्षिप्तो बाण एकं हन्यान्न वा हन्यात् । किन्तु प्राज्ञेन क्षिप्ता मतिर्गर्भगतानपि हन्ति । उदयसमयः समताकालः हान्यवसरः । एवं महीभुजां त्रयः कालाः संति । तत्राद्यसमय एव योद्धव्यम् । उभयोः पुनः स्थातव्यम् । देव ! महानहं स्वल्पोऽयमिति चिन्ता त्यज्यताम् । करीन्द्राणां सिंहशावकान्मृत्युरत्र प्रत्यक्षप्रमाणमस्ति । कुसुमैरपि न योद्धव्यम् । निशितैः शरैः पुनः किम् ? तामवस्थागतानां तु किं भविष्यतीति न जाने । राजन् ! यदि ते प्रियजने प्रेमाऽस्ति । भोगेष्वतृप्तिर्वर्तते । प्राणेषु च महाप्रीतिरस्ति । तदा तु सत्वरं रामः प्रसाद्यतामिति विनिवेद्य विभीषणो विरराम । निशम्यैतद्विभीषणवचनं विधिवैमुख्यविप्रलब्धो दशाननः प्रोवाच । भ्रातः ! विभूतय एताः कृपाणमेघशिखण्डिन्यः शूरमुखावलोकिन्यश्च सन्तीति सत्यम् । किन्तु तव भीरुस्वभावं विलोक्य चकितो भवामि । बन्धुभावादेवं ब्रवीषि ? अथवा मोहमापन्नोऽसि । उत सरलतामेव जीवनलक्ष्यं मन्यसे ? अनुज ! यः पूर्वं त्रैलोक्ये रक्षकतां गतः । सोऽहं कुलाचारमतिक्रम्य मानमुत्सृज्य च दैन्यं कथं समाश्रये ? येन कुटिलेन सरलेन वा पथा महाजनो गच्छति । तेनैव मार्गेण सामान्योऽपि जनो याति । मया तापसस्य योऽयं कान्तापराभवः कृतः । स तत्त्वेन चिन्त्यमानो गुण एव न दोषः । विरक्तस्य संभोगैः किम् ? दुर्मतेस्तस्य पूर्वापरविरुद्धमाचारं दृष्ट्वैव तद्दारानहमपाहरम् । जरन्मृगगणाश्रये विपिने पांसुशय्या क्व ? शिंजानमणिनूपुरा नूपुरवती च कान्ता क्व ? भ्रातः ! संभोगार्हे यौवने वृद्धसेव्यं वनं न कदापि हितावहं भवति । शूरा जटाबन्धं न प्रशंसन्ति । शस्त्रधारिणो वल्कलं न परिदधते । नूनं जानकी स्त्रीरत्नम् । यस्यां वरवर्णिन्यां मद्विधा अपि बद्धकौतुकाः संति । तस्यां ललनायां तापसोनुरागवानिति कथं समुचितम् ? यन्मनुष्येणाऽपि तेन खरमुख्या राक्षसा हतास्तत्र दैवमेव प्रधानं पौरुषं च गौणं मन्ये । अन्यच्च । कपिना यत्पुरं दग्धं । तत्राऽपि चित्रक्रीडाद्भुतनिधिर्विधिरेव प्रमाणमस्ति । त्रिभुवने यस्येयं विश्वनिर्माणवैचित्र्यप्रभाविष्णुता जागर्ति । तस्य दैवस्य शक्तिं पौरुषेण कोऽतिवर्तते ? यदि बला-

धीनं युद्धं राजलक्ष्मीः खड्गाधीना शक्त्यधीनो विजयश्च तदा किन्तु मम चिन्तास्पदम् ? इति कोपं नियम्यैव भाषमाणे रावणे विभीषणः पुनरपि जगाद । राजन् ! सहसैव सीता त्यज्यताम् । तच्छ्रुत्वा कोपज्वलितो मेघनादोऽब्रवीत् । गुरुद्विजपण्डितास्तु दूरादेव प्रणामार्हाः । ह्यतिसंगत्या तद्दोषे दृष्टे सति सपदि श्रद्धा प्रपलायते । पण्डितबुद्धयः प्रायो व्याख्यानावसरेष्वेव प्रस्फुरंति । व्यवहारविचारेषु तु सर्वथैव वाह्याः । विभीषणो धीमान् बहुश्रुतश्चेति पुराऽस्माकं विचार आसीत् । किन्त्वधुनाऽस्य कुलवैलक्ष्यजननीं भीरुतां विलोक्य भृशं विषीदामः । अहोनु ! रथ्यावंदीवायं सदैव रामं प्रशंसति । केनाऽस्य धृतिरपहृतेति वयं विचिन्तयन्तोऽपि न विजानीमहे । अहो ! अस्माकं देवासुरविजयमहोत्सवं दृष्ट्वाऽप्ययं तस्मात्कुतापसाद्बिभेतीति महच्चित्रम् ? किम्बहुना । समरे मम भयाद्विद्रुतानां लोकपालानां पदवी तद्वधूभिर्वनवर्त्मसु नाद्याऽपि लब्धा । ईदृशस्य मे पुरो मिथ्याशौर्यमयीं तापसकथां कथयन्नयं कथं न लज्जते ? निशम्यैतच्छक्रजितो वाक्यं विहसन् विभीषणः प्रोवाच । भ्रातृज ! त्वमद्याऽप्यपक्वबुद्धिर्बालकोऽसि । यत् परस्य स्वात्मनश्च बलाबलमविज्ञाय निरर्गलं भाषसे । ध्रुवं त्वं स्वपितुः पुत्ररूपः शत्रुरसि । यदस्य महाभिमानिनो रघुनाथात् क्षयं वांछसि । वत्स ! मम वार्तां मत्वा देवोचितै रत्नैः सह राघवाय सीता समर्प्यताम् । ज्ञानवान् कृच्छ्रे सर्वस्वं त्यक्त्वाऽप्यात्मानं रक्षेत् । यो वीरो मारीचमुख्यानां राक्षसानां हंता सुग्रीवराज्यप्रदोऽप्यस्ति । स रामः कामं नरेन्द्रोऽस्तु । वा कानने तापसो भवतु । एष कर्मणामेव संकल्पो यत् काकुत्स्थो वनेचरोऽस्ति । स महानुभावस्त्रैलोक्यराज्यदाताऽस्ति । किं दिगम्बरो भस्मशायी च महेश्वरस्त्वया न श्रुतः ? युवराज ! सोऽस्मत् क्षयाय जलनिधितटं संप्राप्तवानास्ति । त्वमधुना सर्वैः सह तत्र गत्वा सर्वस्वेनाऽपि संप्रसाद्यताम् । वीरवर ! क्लेशनिमित्तेन तेन वित्तेन किम् ? यद्वंशस्य स्वात्मनो वाऽपि रक्षार्थं नह्युपयुज्यते ? प्रिय ! धनदानेन प्राणान्रक्ष । किन्त्वात्मनि गते वित्तं पुरुषं नाऽनुयाति । एतदाकर्ण्य भ्रातृवचनं कोपारुणेक्षणः पौलस्त्यः पाणिना पाणिं निष्पिष्याऽब्रवीत् । रे मिथ्या धर्मध्वज ! पापदुष्टेन मनसा यत् त्वं प्रतिभान्वितं भाषसे । तन्मम दूषितं पथ्यमिव हितमप्यप्रमाणम् । रागद्वेषविकल्पेषु सर्वथा मन एव प्रमाणमस्ति । रतौ दन्तक्षतैः प्रीतिर्भवति । तैरेव च कलहे व्यथोपजायते । अहोबत ! सर्वे वयं सरलाशया वंचिताः । येषामस्मिन्विभीषणे मिथ्यागुणसंभावना बभूव । यस्य धैर्यं जीवितं च नाऽभिमानमयं तस्य दंभदिग्धगुणस्य पाण्डित्येन सुबुद्ध्याऽपि च किम्प्रयोजनम् ? यः पूर्वापकारिणा शत्रुणा सह संधिं समीहते । सोऽनड्वान् मंत्रे वा

विक्रमे कथमायास्यते ? यदि निरायुधो रामो मां शरणं व्रजेत् । तदेतत्कथनं तु युक्तं स्यात् । यज्जगति विनयः कस्य प्रियो नास्ति ? यद्यस्य विबुधमानिनो बुद्धिः काकुत्स्थ एव रमते । तर्हि तमेवैषः प्रयातु । यतोऽतिविरक्तः केन सह्यत इति क्रोधान्धे दशकंधरे सावेगं ब्रुवाणे तस्य शीलज्ञा मंत्रिणो धीरा अपि चकम्पिरे । अथ ससंरब्धेषु सचिवेषु पुनर्विभीषणो जगाद । जगत्यस्मिन् सर्वजन्तूनां वल्लभं जीवितमस्ति । यस्य तदप्रियं वद तस्य कोऽन्यः प्रियः ? यः स्वविनाशाय स्वयमेवाऽधर्मं समाचरति । तेनाऽस्मशत्रुणा कुपितेन प्रीतेन वा किम् ? यदि धर्मस्थे रामे मे मती रमते । तर्हि किं चित्रम् ? संसारे सुधानिष्पंदसुन्दरः शशांकः कस्य नानंदाय ? यः प्रमादी संप्राथ्यर्मानोऽपि पथ्यं न गृह्णाति । तस्य विनाशेन स्वजना अपि नृत्यंतीति सत्यम् । यत्र मंत्रिभिर्नृपो व्यसनान्निवार्यते स एव मंत्रः । अन्यथा चित्तानुरंजन वाक्यं बालभाषणोपमं ज्ञेयम् । स्वबलं परवीर्यं स्थानं क्षयं वृद्धिं च सम्यग् बुद्ध्वा यो वदेत् । स एव मंत्री नाऽन्यः । राजात्वत्र श्वभ्रपातोग्रतोऽस्ति । मंत्रिणोऽत्र च सहायकाः संति । नूनमियं विनाशसामग्री स्वयं दैवेनैव घटिताऽस्ति । अत्रान्तरे रावणेन पृष्टः कुंभकर्णोऽब्रवीत् । राजन् ! यः पूर्वकार्याणि पश्चादभिचिकीर्षति । पश्चात् कर्तव्यानि च पूर्वं करोति । स नयानयौ न वेद । यद्यपि त्वयाऽप्रतिमं कार्यं परैः सह समारब्धम् । तथाऽपि भ्रातृपक्षमवलंब्यैव रिपून्हत्वा तत् तव कार्यं समीकरिष्यामीत्यभिधाय स शयनागारं जगाम । ततोऽतिक्रुद्धः पौलस्त्यो विभीषणं परुषवचनं जगाद । राक्षसाः ! ज्ञातीनां शीलमहं जानामि । बहुधा बान्धवा बन्धुं व्यसनपतितं दृष्ट्वा हृष्यंति । सम्पन्नं चाऽवलोक्य विषीदंति । अत्रोपाख्यानं ब्रवीमि । पुरा पद्मवने गजानां वसतिरासीत् । तत्रैकदा गजबंधनार्थं हस्तिपकाः समागच्छन् । तान् विलोक्य गजराजोऽब्रवीत् । भो भो बान्धवाः ! मम वचनं शृणुत । नाग्निर्न नानाशस्त्राणि न च पाशा यथा भयावहास्तथा स्वार्थपरायणा नो ज्ञातयो भयप्रदाः संति । एते पूर्वगृहीता हास्तिनोऽस्मद् ग्रहणोपायं वर्दयंत्यत्र संदेहलेशोऽपि नास्ति । यथा गोषु क्षीरं ब्राह्मणे तपः स्त्रीषु च चांचल्यं वर्तते । तथा ज्ञातितोऽपि भयं विद्यते । यथा पुष्करपत्रेषु पतितास्तोयविन्दवो न श्लिष्यन्ति तथाऽनार्येषु सौहृदं न तिष्ठति । एवं विविधवाक्यैर्विबोधिता अपि गजा यदा गजराजोपदेशं न मेनिरे । तदा हस्त्यारोहैस्ते शनैः शनैर्निग्रहीताः । एष निरपत्रपस्तूर्णं विपयान्निष्काल्यताम् । यस्यैयं शत्रुस्तवे मतिर्जाता । छिद्रेषु व्यसनैषिण इमे कुलजनोन्नतिं न सहन्ते । बहुधा ज्ञातयः क्षयसंदर्शनं विना दानमानसंस्तवोपकारैर्न परितुष्यं-

तीत्यभिधाय कोपाकुलो रावणः शीघ्रं सिंहासनात् समुत्तस्थौ । प्रहस्तेन निवारितोऽपि पादेन साम्राज्यमिव यदा विभीषणं जघान । तदा स सूर्योऽस्ताचलादिव कनकासनान्निपपात । ततः प्रहस्तो हस्तमुद्यम्य समुत्थितं विभीषणं प्रोवाच । अल्पमते ! राक्षसराजो रावणस्ते कुपितः । अत इतोऽन्यत्र गच्छ । ह्यतुष्टे दशग्रीवे भोगसंपदो न भुज्यन्ते । श्रीमान् ज्येष्ठो भ्राता वैश्रवणोऽप्यनेनाऽऽज्ञाव्यतिक्रमाल्लंकातो विवासितः । त्वं कस्योद्यानस्य मूलकोऽसि । गच्छ गच्छ मा चिरय । निशम्यैतन्मन्त्रिवचनं न्यायानुगामिविभीषणो हरिप्रभृतिभिश्चतुर्भिः सचिवैः सह सहसैव विहायसं निवेश । सोऽथ मातरमुपेत्य तां प्रणिपत्य च समग्रं वृत्तान्तं निवेदयामास । ततः स तयादिष्टः सपदि व्योमवर्त्मना प्रययौ । अथ सुग्रीवपुरोगमास्तं रामाभिमुखमायान्तं वीक्ष्य सत्वरं युद्धायैव समुद्यता बभूवुः । एतदालोक्य विद्वान् विभीषणः समुद्रोत्तरपार्श्वेऽवतीर्य घनघोषानुकारिणा स्वनेन दर्शनीयग्रीवं सुग्रीवं समभ्यधात् । भो भोः प्लवंगमाः ! अहं रावणानुजो विभीषणोऽस्मि । वीरेन्द्रं रघुनाथं द्रष्टुमिच्छामि । भ्रातर्जानकी त्यज्यतामिति मयोक्तो दशाननो मुमूर्षुर्भेषजामिव यदा हितोपदेशं न शुश्राव । तदा तैः सर्वैरेव कोपादतितिरस्कृतोऽहं रघुनंदनं शरणमुपयातः । वीराः ! संत्यक्तपापं शरणागतं मां रामाय निवेदयतेति तस्य वचः श्रुत्वा सुग्रीवो द्रुतं राघवं समुपेत्य तदुक्तं च सर्वं तस्मै समावेदयामास । अथ रामः सानुगं रावणानुजं समायातं ज्ञात्वा निश्चलः सन् क्षणं ध्यात्वा च कपिकुंजरान् प्रोवाच । धीधनाः ! यूयमेवाऽस्मिन् कार्ये प्रमाणम् । अस्मिन्विभीषणागमने यदुचितं तत् सम्यग् विचिन्त्यानुष्ठीयताम् । निशम्यैतद्रघुपतिवचनं केचिच्छाखामृगाः प्रोचुः । रघुराज ! शत्रुप्रयुक्तोऽयं राक्षसः सर्वथैव वधयोग्यः । प्रकृतिः स्वभावजाऽत्र दुस्त्यजा खलु । न खलु पोषितोऽप्यहिपोतो जहाति हिंसाध्यवसायम् । न खलु व्रतशीलोऽपि विडालस्त्यजति क्रौर्यम् । न खलु प्रायोपवेशनवासिन्यपि कुट्टिनी मुंचति परवंचनोपचितां चिन्ताम् । न खलु कालकवलनिकटोऽपि च किराटो रहति शाठ्यास्थितिमिति निगद्य विरेमुः । ततोऽपरे प्रोचुः । सत्यमेतत् । यदा भ्रातरं त्यक्त्वाऽत्र समायातस्तदाऽयं कस्याऽन्यस्य स्निग्धो भविष्यति ? जगति जात्यैव जन्तोः स्वजनेऽव्यभिचारिणी प्रीतिर्भवति । जम्बुकीपुत्रो न क्वचिद् गोस्तनं पिबति ? तच्छ्रुत्वा शरभोऽब्रवीत् । नाथ ! चारेण पूर्वं परीक्ष्य ततोऽस्य परिग्रहःकार्यः । एतदालोक्य जाम्बुवाञ्जगाद । रघुपते ! विभीषणोऽयं बद्धवैराद्दशाननाद्देशकाले सम्प्राप्तस्तस्माद्रक्ष्यताम् । ततोऽङ्गदोऽवदत् । प्रभो ! शत्रुपक्षात्समागतोऽयं रावणानुजः परीक्षां विना सहसा न विश्वासनीयः । ततो मैंदो जगाद ।

नाऽयं साधारणो राक्षसः। अतो मधुरभाषणेन प्रष्टव्यः। अथ सचिवोत्तमो हनूमानुवाच। रघुवंशमणे! रावणे दोषं दृष्ट्वा त्वयि च गुणानवलोक्य युक्तमस्याऽत्रागमनम्। आकारेण चेष्टया गत्या भाषणेन चाऽन्तर्गतं मनो लक्ष्यते। मुखमस्याऽस्त्यतिप्रसन्नम्। तस्मान्मे तु संशयो नास्ति। दाशरथे! वालिनं हतं सुग्रीवं चाऽभिषिक्तं समाकर्ण्य राज्यं प्रार्थयमानोऽयमत्र समायात इति मन्ये। विभीषणोऽयं दुरात्मनो रावणस्य कोशबलदुर्गराष्ट्राणि वक्ष्यत्यतो न त्याज्यः। प्रीतिः सदा स्वभावमेवाऽनुसरति। जलजं सूर्योदयात्तु विकसति। किन्तु समीपस्थं सलिलं न श्लिष्यति। निशम्यैतद्धनुमद्वचनं राघवोऽब्रवीत्। मारुते! तथास्तु।

सकृदेव प्रपन्नाय तवाऽस्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥

अपरंच अनुरक्तः किंवा विरक्तो यो मामुद्दिश्याऽत्र समायातः। तस्य बन्ध्यं मनोरथं कर्तुं नाऽहमुत्सहे। यो निर्लज्जः शरणार्थिनं परित्यजति। स धर्मं मानं लक्ष्मीं कीर्तिं चापि परिहरेत्। श्रूयते हि पारावतेन भार्यानिषूदकोऽपि शरणागतो लुब्धकः स्वमांसेन निमंत्रितोऽभवत्। विषयेऽस्मिन् कण्डुमुनिनाऽप्येवमुक्तम्। ह्यरक्षितो भीरुः प्राणान्परित्यज्याऽपि रक्षणीयः। अन्यथा सोऽस्य सुकृतं हृत्वा प्रतिनिवर्तते। हरिश्रेष्ठ! मयाऽस्याऽभयं दत्तम्। सोऽधुना तूर्णं समायातु। वयं राघवाः कृतांजलिषु भीतेषु च सदैव पेशलाः स्मः। निशम्यैतद्रघुपतिवचनं सपदि सुग्रीवो नभः समुत्पत्य परिष्वज्य च विभीषणं सत्वरमानिनाय। ततो रावणानुजोऽनुचरैः सह रामचरणयोर्निपपात। सोऽथ लब्ध्वावकाशमवादीत्। प्रभोऽहं रावणानुजोऽस्मि। तेनाऽवमानितः शरण्यं त्वां समुपागतः। तच्छ्रुत्वा रघुपतिरुवाच। विभीषण! त्वम्मे सुहृदसि। मे मनो दर्शनादेव त्वयि प्रसीदतीति सत्यम्। सखे! मदर्थे त्वया या समित्रधनबान्धवा लंका परित्यक्ता तत् फलं गृह्यतामित्युक्त्वा स लक्ष्मणानीतै रत्नाकराम्बुभिर्विभीषणमभिषिच्यैव तं लंकाधीश्वरं विदधे। एवं रामप्रसादेन नतकन्धरो रावणानुजस्तत् प्रतिक्रियां मुहुर्मुहुरचिन्तयत्। अत्रान्तरे नानेतिहासपुराणविशारदो महामुनिरगस्त्यस्तत्राऽऽजगाम। ततस्ते समुत्थाय विधिवत्तं पूजयामासुः। अथ विभीषणः प्रणतिपुरस्सरं मुनिं जगाद। मुनीन्द्र! त्वं सर्वज्ञोऽसि। अतः कृपयाऽस्मद्वंशविस्तरं रघुपतिं श्रावयेति निगद्य विभीषणो विरराम। तच्छ्रुत्वा महामुनिः श्रीरामहिताय प्रोवाच। भद्र! प्रस्थानात्पूर्वं पूर्वापरज्ञानमत्यावश्यकम्। अतः श्रावयामि सम्प्रति चरित्रम्। समाकर्णयत यूयं सावधानतया। आसीन्मेरुपार्श्वे तृणांगेर्दिव्याश्रमः। तत्र कृतयुगे ब्रह्मसूनुः पुलस्त्यो दीर्घकालं तपस्तेपे।

तत्र सुरसिद्धर्षिराजकन्यकाः क्रीडन्त्यः सततं समाययुः । एतदालोक्य महामुनिस्तपोविघ्नं मत्वा च प्रोवाच । अद्यप्रभृति या ममाश्रमं प्रविशेत्साऽवश्यं गर्भं धारयेत् । निशम्यैतन्मुनिवचनं सर्वाः कन्यकास्तु तं देशं पुनर्नाययुः । किन्त्वेका राजर्षितृणविन्दुसुता तद्वाक्यमनाकर्ण्य सखीदर्शनलालसयातत्राऽऽजगाम । साऽथ स्वाध्यायसम्पन्नं मुनिं दृष्ट्वा श्रोत्रसुखप्रदान् वेदमंत्रांश्च श्रुत्वाऽति विस्मिता बभूव । ततो हरिणेक्षणा सा मनोहारिणीं मुनिच्छविं विलोक्य वसन्तवल्लीव प्रकामकमनीयतां लेभे । अथापाण्डुरमुखी सा लज्जामेत्य सत्वरं पितुराश्रमं जगाम । ततो राजर्षिर्ध्यानयोगेन सर्वं विज्ञाय तत्र गत्वा च पुलस्त्याय तामात्मजां समर्पयामास । अथ गच्छता कालेन स मुनिस्तस्यां विश्वविश्रुतं श्रुतिश्रवणजन्मानं विश्रवसं नाम सुतमजनयत् । ततः पितृतुल्यः स महानुभावो भरद्वाजसुतां कान्तां पत्नीं प्राप । ततः पतिव्रता सा तस्माद् गुणैः पितृतुल्यं पवित्रचरितं च वैश्रवणं नाम पुत्रं लेभे । अथ तपस्यतस्तस्य वर्षसहस्रेषु प्रयातेषु प्रीतः पितामहस्तस्मै वरान् प्रादात् । ततो वैश्रवणो लोकपालत्वं पुष्पकविमानं च समवाप्य कृतार्थो बभूव । अथैकदा स पितरं गत्वा निवासाय यथोचितं स्थानं पप्रच्छ । तच्छ्रुत्वा सोऽब्रवीत् । वत्स ! अस्ति कांचनमयी विश्वकर्मकृता लंकाख्या नगरी । या विष्णुभयार्दितै राक्षसैस्त्यक्ता । सा सर्वथैव तव समुचिता । निशम्यैवं तातवचनं धनाध्यक्षः स रत्नतोरणान्तां पुरीं ययौ । तत्र गुह्यकेश्वरो देवपूजितो भूत्वा न्यवसत् । सोऽथ काले काले च पुष्पकेन पितृदर्शनं कृत्वाऽऽत्मनः कृतकृत्यतां मेने । एतन्मुनिवचनमाकर्ण्य विस्मितो रघुनन्दनोऽपृच्छत् । ऋषिराज ! राक्षसाः किल पुलस्त्यकुलसंभूताः श्रूयन्ते । तेभ्योऽप्यन्ये के बभूवुर्येषां लंकापुर्यासीत् ? तच्छ्रुत्वाऽगस्त्योऽब्रवीत् । पुरा जातासु प्रजासु सत्त्वा विधातारं प्रणम्य प्रोचुः । भगवन् ! किं कुर्मः ? एतदाकर्ण्य विहसन् विधिरुवाच । मानवाः ! रक्षध्वम् । एतदाकर्ण्य केचिद्रक्षाम इत्यवोचन्नपरे च यक्षाम इति बभाषिरे । ततो विधाताऽवदत् । यै रक्षाम इत्युक्तं ते तु राक्षसा भवंतु । अथ यैर्यक्षाम इत्युक्तं ते यक्षाः संतु । ततो हेति प्रहेतिश्चेति मधुकैटभोपमौ भ्रातरावभूताम् । अथैकदा हेतिः कालभगिनीं भयामुद्वाह्य तस्यां विद्युत्केशाख्यं सुतमजीजनत् । सोऽथ यौवनमवाप्य सन्ध्यासुतां सालंकटां परिणिनाय । ततो विद्युत्केशेन रममाणा सा गर्भमाधत्त । साऽथ काले सुरतान्तरायं गर्भं समुत्सृज्य पुनः पत्या सार्धं रन्तुमारंभे । अथोत्सृष्टः शिशुर्वदने पाणिं निक्षिप्य रुरोद । अत्रान्तरे पार्वत्या सह गगनमार्गेण व्रजन् वृषभध्वजस्तं ददर्श । ततः कारुण्याद्रुद्राण्या संप्रार्थितो महादेवस्तस्मै व्योमगं पुरं दत्त्वाऽमरत्वमपि प्रादात् । अथास्मि-

कावरप्रभावात् स सुकेशः सहसा वृद्धिमवाप्य राक्षसाधिपो बभूव । सोऽथ हरानुचरो गिरिशगौरवाद् ग्रामीणगन्धर्वतनयां देववतीमुपयेमे । ततः स तस्यां माल्यवत्सुमालिमालिनः पुत्रान् जनयामास । अथ ते तपसा ब्रह्माणं प्रसाद्य तद्वरप्रभावात् त्रिदशानपि समाक्रम्य च लंकायां निष्कण्टकं राज्यं चक्रुः । अत्रान्तरे नर्मदा नाम गंधर्वी माल्यवते सुन्दरीं सुमालिने केतुमतीं मालिने च वसुदां प्रादात् । ततो माल्यवतो विरूपाक्षप्रभृतयः षट् पुत्रा अनलाऽऽख्या च पुत्री बभूव । अथ सुमालिनः प्रहस्तादयो दश सूनवो राका केकसी पुष्पोत्कटा कुंभीरसाश्चतस्रः सुताश्चाऽभूवन् । एवं मालिनोऽप्यनलाऽनिलसंपातिहराश्चत्वारः पुत्रा आसन् । ये विभीषणामात्यत्वमवाप्य राम ! त्वामुपासंते । अनेन प्रकारेण प्रविसृते राक्षसकुले हिमाहता पद्मिनीव सुरश्रीः संचुकोच । अथैकदा भयार्दिता देवा देवदेवं पिनाकिनं शरणं जग्मुः । ततो भगवान् भवानीवल्लभः सुकेशपक्षपातात् लोकानुग्रहाच्च दोलायितमनास्तान् क्षिप्रमवादीत् । देवाः ! ते सुकेशतनया मम रणेऽवध्याः । अतः कार्येऽस्मिन् दैत्यारिरभ्यर्थ्यताम् । एतदीशानवचनं श्रुत्वा गीर्वाणाः श्रीमन्तमच्युतं शरणमभ्येत्य च तस्मै राक्षसेभ्यो भयमित्यावेदयामासुः । ततो भूतभावनो भगवान् प्रपन्नानामभयं प्रादात् । येन सर्वे देवाः सपदि भयं तत्यजुः । अथ माल्यवान् चारैः सर्वं त्रिदशवृत्तान्तं विज्ञाय भ्रातरौ प्रोवाच । चक्रिणाऽस्मद्भयार्तानां त्रिदिवौकसामभयं दत्तमित्यस्माभिः श्रुतम् । स विष्णुर्द्विषां वधे सर्वथैव प्रभाविष्णुर्वर्तते । यदि जीविते स्पृहास्ति । तर्हि सर्वथैव संधेयः । ये मूढा हरिणा इव हरिणा योद्धुमिच्छंति । ते नूनं साचीकृताक्षेण कृतान्तेन लक्षिता इति मन्ये । योऽनागतं कुरुते स शोभते । यश्चाऽनागतं न करोति स शोच्यते । जगत्यप्रमादोपगूढस्य भूपस्य दिश एता निर्भयाः संति । निशम्यैवं माल्यवद्वचनं सुमालिमालिनौ सभ्रूभंगं प्रत्यवदताम् । यथाविधि हुतं यथायोग्यं दत्तं यथाशक्ति भुक्तं शत्रुसैन्यं च बहुशो जितम् । संप्रति कृतकृत्यानामस्माकं किमन्यदवशिष्टम् ? महतां लोभोऽभिमाने न धने तृष्णा यशसि न चायुषीति वीरव्रताः सततमामनंति । संसारे मानमूलस्य यशसः परिरक्षैव सत्यं जीवनमस्ति । अन्यथा कृतान्तेन कस्याग्रे मुहूर्तं हस्तधारणा कृता ? एवं संमन्त्र्य जंभवृत्रादीन् पुरस्कृत्य च सर्वे राक्षसा युद्धार्थं सुरालयं जग्मुः । एतदालोक्य गरुडारूढो मुरारिः शंखचक्रगदाखड्गप्रभापरिकरैः करैः प्रतापाग्निं किरन्निव बभाषे । दैत्याः ! धर्म एव हतो हन्ति । रक्षितो धर्मो रक्षति । सेवितोऽधर्मो गौरिव सद्यो न फलति । किन्तु शनैरावर्तमानः कर्तुर्मूलानि निकृन्तति । नाऽधर्मश्चिरस्थद्धय इति विचिन्त्य नित्यं धर्ममेवाऽनुचरेत् । तच्छ्रुत्वा हरिवाक्यमनादृत्य च कालप्रेरिता-

राक्षसाः शरशक्तिऋष्टितोमरैर्योद्धुमारेभिरे । किम्बहुना । एकवारं तु द्विजं प्राणायामा इव हरिं निरुच्छ्वासं चक्रुः । ततो विजयश्रियोऽट्टहासो विष्णुशंखो ननाद । तेन केषां चिद् रक्षसां तु दीप्तान्यप्यायुधानि सहसा न्यपतन् । अथ विष्णुः पूर्णायतोत्सृष्टैः शरैः राक्षसगणप्रयुक्तान् बाणान् सपदि चिच्छेद । ततो ये नारायणप्रक्षिप्ता नाराचा देवद्विषां शरीराणि विविशुस्तैर्भिद्यमाना निशाचरा वज्राहताः शैला इव धरण्यां निपेतुः । अथ सुपर्ण-पक्षानिलाहते राक्षसबले प्रभग्ने सुमाली तूर्णं विष्णुमभ्येत्य निर्विवरैः शरैस्तमदृश्यं विदधे । ततो हरिः शरेण सुमालिसूतस्य शिरो जहार । येनाऽसौ हयैर्दूरं नीतः । अथ योद्धुं पुनरायाते तस्मिन् मधुसूदनस्तस्य धनूरथं किरीटंचाऽपि चिच्छेद । ततो विरथोऽपि दैत्यो दीप्तहेमाङ्गदां गदां समादाय मूर्ध्नि गरुडं जघान । येन स सहसैव पराङ्मुखो बभूव । एतदालोक्य चकितश्चक्रपाणिस्तस्मै यच्चक्रं विससर्ज । तेन हेममालिनस्तस्य मालिनो भ्रुकुटीकुटिलं शिरो धरणीपृष्ठे निपपात । एवं राक्षसा भुजशालिनं मालिनं पतितं वीक्ष्य पवनप्रेरिता पांशुनिचया इव सत्वरं दुद्रुवुः । अथ गदाचक्रासिविशिखैश्छिन्नस्कन्धो-दरग्रीवाः पृष्ठतो वध्यमाना दितिजा लवणांभसि न्यपतन् । एतदालोक्य कोपाकुलो माल्यवान् दैत्यारिमुवाच । अहो नु जनार्दन ! त्वं वीरमर्यादां नाऽवगच्छसि । यत् खल इव विशृं-खलः पलायितेष्वपि प्रगल्भसे ? एतैस्त्रस्तैर्निहतैश्च किम् ? मयि पौरुषं दर्शयेति माल्य-वतो वचनमाकर्ण्य केशवः प्रोवाच । दितिज ! त्रैलोक्यभयकारिण एते सर्वत्र मम वध्याः । गुणा गुणेष्वेव योज्या दोषाश्च दोषेषु प्रयोक्तव्याः । मर्यादाविरहितेषु क्रियमाणा मर्यादा सर्वथैव न हि शोभते । ततः कोपाकुलो राक्षसो विष्णवे यां शक्तिं चिक्षेप । तया हृदये ताडितो हरिः क्षणमात्रं व्यथितोऽभवत् । अथ नारायणः स्ववक्षसस्तां शक्तिं सहसा समुद्धृत्य दिवौकसां चिन्तामिव राक्षसायैव प्रतिचिक्षेप । राक्षसस्तया सपदि मुमूर्छ । सोऽथ शूलपाणिश्चिरेण जीवितं समवाप्य मुष्टिना मूर्ध्नि वैनतेयं ताडयामास । ततः क्रुद्ध सुपर्णपक्षवातेन प्रक्षिप्ताः सुमाल्यमाल्यवत्प्रभृतयो देवशत्रवो दश दिशो जग्मुः । ततः कैटभारिभयार्दिता दैत्या लंकां परित्यज्य सहसा व्यालकलिलं पातालं विविशुः । रघुनाथ ! एते निशाचरास्तु सालकटंकटाः ख्याताः । अपरे च पौलस्त्या ये विष्णुमूर्तिना त्वया निहत-व्याः । अथैकदा सुमाली यौवनवर्तीं कन्यां समादाय पातालान्निःससार । सोऽथ भूतले विचरन् पुष्पकेन समायातं धनाधिपं विलोक्य लज्जानतां तां सुतां प्रोवाच । पुत्रि ! ते प्रदान-कालस्तु संप्राप्तः । किन्तु प्रत्याख्यानभयाद्वरैर्न परिगृह्यसे । मानकांक्षिणां कन्यापितृत्वं दुःखम् ।

जन्मतः स्वजनशोककारिका सम्प्रदानसमयेऽर्थहारिका ।
यौवनेऽपि बहुदुःखदायिका दारिका हृदयदारिका पितुः ॥

कैकसि ! मातृकुलं पितृकुलं तथा यत्र सा प्रदीयते। एवं कुलत्रयं कन्या सदैव संशये स्थाप्य तिष्ठति । कुलाधिकाः कन्यां न याचंते । हीनेभ्यः कथं दीयते ? कालश्च तूर्णं प्रयाति । तस्माद्दुःखदं कन्याजन्म धिक् । येन याञ्चा न कृता, यस्य कन्या न जाता, यस्य च जीविका स्वाधीना। संसारेऽस्मिन्नेते त्रय एव जीवंति। सुते ! यस्याऽयं धनदः सुतोऽस्ति। तं विश्रवसं मुनिं त्वं स्वयमेव गत्वा प्रेम्णा वरयेत्याभिधाय सुमाली स्वसदनं जगाम । अथ पित्रा समादिष्टा कैकसी तपोवनं प्रविश्य मुनेरग्रे लज्जानताऽस्थात् । ततस्तद्रूपलावण्यदर्शन-विस्मितो मुनिस्तामुवाच । चन्द्रानने ! त्वं का ? कस्याऽसि ? किमर्थं च वनमुपागता ? निशम्यैतन्मुनिवचनं साऽब्रवीत् । भगवन् ! सर्वं ज्ञानचक्षुषा जानीहि । त्वाद्विधस्य महानुभावस्याग्रे कन्यैषा कैकसी वक्तुं कथं प्रगल्भते ? तच्छ्रुत्वा ध्यानयोगेन ज्ञातवृत्तान्तो मुनिः प्रोवाच । भद्रे ! यत्ते मनोगतं तत् सर्वं मयाऽवगतम् । सुभ्रु ! दारुणेऽस्मिन् मुहूर्ते यत् त्वमुपस्थिता । तस्मात्ते दारुणाचारः पुत्रो भविष्यति । श्रुत्वैतन्मुनिवचनं कान्ता महामुनिं नमस्कृत्य जगाद । कृपानाथ ! ब्रह्मवादिनस्त्वत्तोऽहमीदृशान्पुत्रान्नेच्छामि। एतदाकर्ण्य पूर्णेन्दू रोहिणीमिव मुनिस्तां भूयोऽवदत् । सुभगे ! पश्चिमो यस्तव सुतो भविष्यति । स मम वंशानुरूपः । सदाचारं प्रतिपालयिष्यतीत्यत्र नास्ति संदेहावसरः । रघुवीर ! एवं मुनिना रहः संभाषिता सा पुष्पोत्कटा कालेन कालसंकाशं दशास्यं विंशतिभुजं नीलांजनचयसदृशं ताम्रोष्ठं दीप्तमूर्धजं च सुतं प्रासूत । एवमुत्पातसदृशे तस्मिञ्जाते त्रिभुवनमकम्पत। ततो वर्धमाने दशग्रीवे क्षपाचरी विशालदेहं द्वितीयपुत्रं कुंभकर्णं जनयामास । पश्चिमोऽयं विभीषणः सदाचारपरायणो मुनिना यथोक्तस्तस्यास्तथाऽभवत् । एवं तेषु राक्षसेषु प्रवर्धमानेष्वेकदा तपोवने पितरं द्रष्टुं स्वयं वैश्रवणः समागच्छत्। जननी तं पुष्पकारूढं सर्वसंपदां च निवासं विलोक्य दशग्रीवं प्रोवाच । वत्स ! एष तव भ्राता कुवेरस्तपसा तेजसा च तिग्मांशुरिव दीप्यते। पुत्र ! तुल्येऽपि भ्रातृत्वे श्रीमानेषः। त्वं चेदृशः । किम्बहुना । आत्माधीनस्य तपस एता विभूतयः फलमिति मातृवचः श्रुत्वा सानुजो दशकन्धरस्तपसे गोकर्णतटं जगाम । तत्र त्रयोऽपि भ्रातरो दशवर्षसहस्राणि ग्रीष्मे पंचाग्निसंतप्ताः शीते च सलिलमध्यगा अभूवन् । ततो दशाननः प्रथमं शिरश्छित्वा स्वयमग्नौ जुहाव । एवं क्रमशो नव शिरांसि छित्वा यावद् दशमं छेत्तुमुद्यतो भवति । तावदेव विरंचिस्तमभ्येत्य प्रोवाच । वीर ! तपः फलं वरं गृहाण । एतदाकर्ण्य सोऽवदत् । पितामह ! प्राणिनां नित्यं मरणाद्भयं भवति । ज्ञात्वैवममरत्वमहमाभि-

कांक्षामि । तच्छ्रुत्वा परमेष्ठी जगाद । विश्वेऽस्मिन्नमरत्वं नाऽस्ति । मत्सकाशादन्यद्वरं लभस्वेति ब्रह्मवाक्यं श्रुत्वा दशाननोऽभापत । देव! सुरगंधर्वदैत्यकिन्नरभोगिनामवध्योऽहं स्याम् । किञ्च तव वरप्रभावान्मानुपादयस्तु मे तृणमेवेत्युक्ते दशकंठेन प्रजापतिस्तथेत्युक्त्वा तस्मै स्वेच्छारूपं शिरसां समुद्भवं च पुनः प्रादात् । ततो देवाः कुंभकर्णस्य वरदानोद्यतं चतुराननं प्रोचुः । प्रभो ! त्वयाऽस्मै वरो न देयः । यतोऽयं विश्वकंटकोऽस्ति । जगद्धिताय वरव्याजेनाऽस्य शापः प्रदीयतामिति सुरवृन्दैः सम्प्रार्थितः स्वयंभूः सरस्वतीं सस्मार । ततः समागता सरस्वती देव ! किं करवाणीति जगाद । अथात्मभूः प्रोवाच । वाणि ! त्वमस्य राक्षसेन्द्रस्य देवतेप्सिता वाग्भवेति, विरंचिवाक्यं श्रुत्वा ब्राह्मी ओमित्यभिधाय च सपदि कुंभकर्णजिह्वाग्रे स्थितिमकरोत् । ततः प्रजापतिना वरं गृहाणेति स्वयमुक्तः कुंभकर्णोऽब्रवीत् । देवाऽहं तु निद्रालुर्भवितुमिच्छामि । षड्भिर्मासैः प्रबुद्धस्य च मे दिनमेकं भोजनार्थमपि भवत्विति तेनाऽभ्यर्थितो विधाता तथास्त्विति प्रत्यभापत । अथ पद्मजन्मना वरं गृहाणेति प्रेरितोऽयं विभीपणोऽवदत् । कृपानिधान! धर्मे मे बुद्धीरमताम् । निशम्यैतद्विभीपणवचनं वेधा धर्मप्रीत्या तस्मै चिरजीवित्वं दत्वा स्वलोकं जगाम। एवं वरान्दत्वा देवैः सह प्रजानाथे तिरोहिते स्ववरं स्मारं स्मारं कुंभकर्णोऽतिदुःखितोऽभवत् । रघुवीर ! एवं लब्धवरास्ते श्लेष्मान्तकवनं गत्वा तत्र चिरं रेमिरे । निशम्यैवं दौहित्रवृत्तान्तं सुमाली पातालादुत्थाय प्रहस्तमारीचप्रमुखैः सह दशाननमेत्य प्रोवाच । वत्स ! चतुर्मुखवरमवाप्य दिष्ट्या वर्धसे । विष्णुना तिरस्कृता वयमप्यद्य त्वां विलोक्य दिष्ट्या सनाथाः संवृत्ताः । जगति स एक एव सुकृती जातः । स च जीवति । यस्य नाम्ना सर्वे बान्धवाः सुखेन कालं नयंति । वंशमुक्तामणेस्तस्यैव जन्मसफलं मन्ये । यस्याग्रे सकलं कुलमुत्तानपाणितां याति । त्रिकूटशिखरे रत्नहेममयी या लंकाख्या पुरी वर्तते । पुरा साऽस्माकमेवाऽऽसीत् । किंतु विष्णुना रणे ममानुजे वीरे मालिनि हते यदा वयं तां परित्यज्याऽन्यत्र गतवंतस्तदा वैश्रवणः शून्यां पुरीं विवेश । तात ! यद्यपि वयं पाताले सुखेन तिष्ठामस्तथाऽपि धीमतां विद्येव लंकाऽस्मद्धृदयात् क्षणमात्रमपि दूरन्नाऽपैति । किम्बहुना । रसातलस्था राक्षसांगना अपि ज्योत्स्ना हासविकासिनीं लंकां स्मृत्वा रात्रौ निद्रामपि न लभंते । वीर ! संप्रति सा मातामहपुरी त्वयैव धर्मेण प्राप्तव्या । यतो वृद्धो नववधूमिव कुवेरस्तां भोक्तुं सर्वथा नार्हति । एवं सुमालिवचनं श्रुत्वा रावणोऽब्रवीत् । मातामह ! वित्तेशोऽस्माकं गुरुस्तस्मादीदृशं वक्तुन्नार्हसि । एतदाकर्ण्य दशाननवचनं सुमाली प्रत्युत्तरमदत्वैव कालं प्रतीक्षमाणस्तस्थौ । अथैकदाऽत्रसरज्ञः

प्रहस्तः सुमालिवचनं स्मृत्वा प्रथितविक्रमं दशाननं सप्रश्रयं जगाद । राजन् ! लोके यथा दुराचारो विद्वान् धनाढ्यश्च कृपणो न पूज्यते तथा सामभावोऽपि निरुद्यमो महीपो न गण्यते । देव ! सौभ्रात्रं गणयन् स्वकीयामपि लंकां कथमुपेक्षसे ? वस्तुत एकद्रव्याभिलाषेण वैश्रवणस्तव दुहृदास्ति न च सुहृद् । प्रभो ! यदि स ते स्निग्धो भ्राता तर्हि स्वानुजाय लंकां कथं नोज्झति ? योऽनुजं स्वयं पालयति । तमेव पण्डिता अग्रजं व्याहरन्ति । पुरा कश्यपजन्मनां देवाऽसुराणां राज्यार्थे यः क्षयोऽभवत् । तस्य वृत्तांतः किं भवता न श्रुतः ? निशम्यैतत् प्रहस्तवचनं क्षणं ध्यात्वा दशाननोऽब्रवीत् । महामंत्रिन् ! मद्गिरा त्वमेव धनाध्यक्षं गत्वा लंकां याचस्व । उक्तं च । यत्र साम्नैव कार्यसिद्धिस्तत्र वुधेन दण्डो न विनियोज्यः । पित्तं यदि शर्करया शाम्यति तर्हि पटोलेन किम्प्रयोजनमिति राक्षसेश्वरस्य शासनमादाय जातपक्ष इव प्रहस्तस्तूर्णं धनदान्तिकं जगाम। सोऽथ देवगंधर्वसेवितं सभामुखं समभ्येत्य मित्रासह समासीनं धनाधिपं समभाषत । राजराज ! श्लेष्मान्तकवनात् प्रास्थितो दशाननः सुमालिमतमवलम्ब्य त्वामभिधत्ते । किलेयं पुरी पुरा माल्यवत्प्रमुखैर्भुक्ता तदेषा साम्प्रतं सामतो याचतः प्रदीयताम् । परद्रव्यं तु तावदेव निजं यावत्परो नाऽर्थयते । प्रार्थनान्तरं तु यद्यस्य तत्तस्यैव । अद्यश्वो भवानेव त्रिलोक्यां धनवानास्ति । त्वत्समः समृद्धोऽपरः को विद्यते ? संसारे वित्तानि दैवायत्तानि पराक्रमश्च भुजाधीनः प्रथितः । किम्बहुना त्वमेव सर्वमवगच्छसीत्यभिधाय नयकोविदः प्रहस्तो विरराम । निशम्यैतद्दशाननसंदेशं कुवेरः पाणिना स्वेदसंसिक्तं ललाटं स्पृशन् न किंचिदूचे । ततः कुपितो विश्रवाः स्वयं प्रहस्तं निर्भर्त्स्य पुत्रप्रीत्या धनाधिपं साममधुरं जगाद । वत्स ! पण्डितो दुराशामिव लंकामिमां त्यज । वरदृप्तः स राक्षसो गौरवेण समभिजानाति । पुत्र ! वहुधा विभवस्थिताः पुरुषा दर्शने नेत्ररोगार्ताः श्रवणे कर्णशूलिनो विनयवाक्येषु च मूका भवंति। अस्मिन् सुविपुलेऽपि काले नैवंविधो महाशयो दृष्टो यः संपद्भिः सोन्मादो वा विपद्भिश्च विक्लवो न । आत्मज ! अस्ति स्फारस्फटितो हिमालयो नाम पर्वतराजः । यस्य गुहास्वपि तिमिरो नाऽवकाशं लभते । वक्षसि यस्य च कचत्कांचनकमला मंदाकिनी मालेव विभाति । तत्र श्रीनिवासे तव वसतिरुचिता । क्षिप्रमेव गच्छाव इति निगद्य मुनीश्वरो विरराम । अथ पितृभक्तो धनपतिः सद्भृत्यवलवाहनस्तत्र गत्वा कैलाससन्निधौ रत्नांकामलकामावासयामास । अत्रान्तरे दशाननः प्रहस्तवाक्यात् स्वयं वैश्रवणमन्यत्र गतं विज्ञाय लंकां समवाप्य च राज्याभिषेकोत्सवं चक्रे । सोऽथ कालखंजाय विद्युज्जिह्वाय निजानुजां शूर्पणखां दत्त्वा निश्चितो

बभूव । अथैकदा दशाननः कानने मृगयां चरन् सकन्यं मयनामकं दानवं ददर्श । पौलस्त्येन वनवासकारणं पृष्टः सोऽब्रवीत् । राजन् ! दानवोऽहं मयसंज्ञकः । हेमा नाम दिव्याप्सरा मम प्रियाऽऽसीत् । सुन्दरीयं कन्या तत्सुताऽस्ति । यस्यां समासक्तस्य मे वर्षसहस्रे याते दैवयोगेन दुःसहो वियोगोऽभवत् । तां लोचनानंददायिनीं विना गृहे हेमहर्म्यावलीमपि ज्वलितामिव पश्यामि । किम्बहुना । शशांकोदयः, सुहृद्गोष्ठी, मधूत्सवः, वीणा, सौधाश्चाऽपि वियुक्तचेतसः सुखाय न कल्पन्ते । इयं मम मंदोदरी कन्याऽस्ति । अस्याश्च दुर्मतिमायाविनौ भ्रातरौस्त इत्यभिधाय दशाननपरिचयप्राप्त्यनंतरं विधिना स तस्मै तामनिन्दितां कन्यां शक्तिं चाऽपि प्रादात् । ततो मंदोदरीसमेतो दशाननो लंकां प्रविश्य महोत्सवं कारयामास । ततः कुंभकर्णो दशाननाज्ञया वैरोचनदौहित्रीं वज्रज्वालां पर्यणयत् । अथ विभीषणोऽपि दशग्रीवानुमत्या गन्धर्वाधिपतेः शैलूषस्य सुलोचनां कन्यां समवाप। पुरा कन्याजन्मसमये जलागमेन मानसं वर्धमानं दृष्ट्वा कन्यामाता स्नेहेन सरो मा वर्धतामिति जगाद। तेनैषा सुलोचना सरमेति विख्याता बभूव। एवं तेषु कृतदारेषु देवी मंदोदरी नूतना लक्ष्मीरहंकारमिव सुतं सुषुवे । जातमात्रेण तेन जलदोपमो नादो मुक्तः । तस्मात् पिताऽस्य मेघनाद इति नाम चक्रे । अथैकदा कुंभकर्णः समासीनं भ्रातरं जगाद । राजन् ! निद्रा मां बाधते । तच्छ्रुत्वा दशग्रीवो हेममणिस्तम्भं महालयं कारयामास । अथ कैलाससन्निभे रत्नगृहे सुखसुप्तस्य तस्य वर्षसहस्राणि ययुः । अत्रान्तरे पौलस्त्यो मुनीन् प्रपीड्य स्वर्गोद्यानविलोडने सक्तो बभूव । ततः पावनतपोवने भग्ने विद्रुता देवा दशदिशो भेजुः । अथ निःस्वाध्यायवषट्कारे क्रियाक्रमे समुत्पन्ने लोकानुग्रहाय स्वकुलकल्याणाय च धनेश्वरो दशास्यसन्निधौ स्वकीयं दूतं विससर्ज । स सन्देशहरो लंकां गत्वा विभीषणं समवाप्य च यथायुक्तमस्मै निवेदयामास । ततस्स कुवेरगौरवात्कनकासनस्थं दशग्रीवं प्रणम्य जगाद्धितमावेदयामास । राजाधिराज ! स्वयं वैश्रवणो देवः प्रीत्या भ्रातरं त्वां यदाह तच्छ्रूयताम् । संसारेऽस्मिन्निमा विजयव्यंजनाः श्रियो नाऽपुण्यवद्भिर्लभ्यंते । पुण्यशीलस्य कीर्तयः सदाचारस्य सम्पत्तयः प्रज्ञाप्रगल्भस्य च विद्याः स्थिरयौवना भवंति । लोके तस्यैव प्रभाविष्णुता स्पृहणीया । यं समाश्रित्य सर्वभूतानि सुखं शेरते । रौद्रकर्मणो विभूतिन्धिक् । यस्माच्चितावह्नेरिव जन उद्विजते । उज्ज्वलजन्मनामाचारः साधुवादाय विभवः परोपकाराय शक्तिश्च दीनोद्धरणाय च भवति । चित्तं व्ययेन कुलं शीलेन सत्त्वं सत्येन श्रुतं च धर्मेण ज्ञायते । भ्रातर्यत्र पापं वसति । तत्र श्रीर्न तिष्ठति । कुलीनः श्रुतवान् विश्रुतश्च जनो न तत्कुर्यात् । येन समुन्नतपदान्नि-

पत्य प्रत्युत वाच्यतां याति । त्वया स्वर्गविध्वंसे यदसांप्रतं कृतं । संप्रति संयमनेन तस्य प्रक्षालनाक्रिया भवतु । अनुज ! स्वर्गोद्यानानि भग्नानि तथा मुनिजनाः प्रपीडिताः किं कमलजन्मनः कुले समुचितमेतत् ? यदि विश्रवसः सुतः प्रजाक्षये सक्तो भवेत्तदाऽन्यस्य कस्य सौराज्यसम्बन्धिनी श्लाघा भविष्यति ? भ्रातः! पूर्वं मया वारितोऽसि । पुनरपि निवार्यते । नाऽयं खलु मार्गः साधुसेवितो येन प्रवृत्तोऽसि । परित्यज्य प्रकाशं कथं तमसि निमज्जसि ? शंकितैस्त्रिदशैस्तव निधनोपायश्चिन्त्यत इति व्रतात् प्रतिनिवृत्तेन मया- कर्णितम् । हिमाद्रिशिखरे प्रीतिसमायुक्तः शीतांशुशेखरः सतीप्रणयकेलिषु मया दृष्टः । ततः कोऽयमिति विस्मयान्मया गौरीगात्रे स्फारलोचनं निक्षिप्तम् । देवीप्रभावेण शुद्धा- त्मनोऽपि मम वामं लोचनं विषेणेव संपूरितं भूत्वा पिंगतामयासीत् । ततो मौनिना मया तीव्रं तपः कृतम् । येन संतुष्टो भगवान् भवःस्वयं मामभ्येत्य बभाषे । त्वयाऽयदहोरात्र मीदृशं दुश्चरं तपः कृतं । तत्प्रभावेण मम त्वया सह सख्यमस्तु । त्वमद्यप्रभृत्येकपिंगेक्षणो नाम्ना जगति विश्रुतो भविष्यसीत्यभिधाय प्रमथाधिपस्तिरोदधे । भ्रातः ! कुलदूष- णादस्मात्कुकृत्यान्निवर्तस्व । न जाने ते बुद्धिः कथं कुपथेन धावति ? निशम्यैतद्दूतवचः क्रोधधूम्रारुणेक्षणो दशाननः पाणिना पाणिं निष्पिष्य तं जगाद । अहो ज्येष्ठो धना- धिपोऽसौ लोकहिते रतो भूत्वा दंभारंभाद्वक्तुं प्रगल्भते । यदि धनदोऽस्मिंल्लोके करुणा- परोऽस्ति । तर्हि सुविपुलं धनं दरिद्रेभ्यः किन्न प्रयच्छति ? दूत ! ज्येष्ठत्वात् स तु मया न निहन्यते । किंतु त्वया यद्भाषितं तत्सोढुं न शक्यत इत्यभिधाय खड्गेन निहत्य तं भोक्तुं राक्षसेभ्यःप्रादात् । ततः कृतस्वस्त्ययनो दशग्रीवो रथमारुह्य त्रैलोक्यजय कांक्षया प्रहस्तादिभिरमात्यैः सह सहसा प्रतस्थे । सोऽथ मुहूर्तेन वनोपवननदी- पर्वतान् समतिक्रम्य पूर्वं कैलासं प्राप । ततः कूटयोधिभी राक्षसैः सह यक्षाणां युद्धं बभूव । अथ बलिना राक्षसेन्द्रेण भग्ना गुह्यका रात्रौ त्र्यम्बकसखाय सर्वं वृत्तान्तमावेदयामासुः । तच्छ्रुत्वा कोपाकुलो धनाधिपोऽन्यान् यक्षान् प्रेषयामास । ततोऽसिगदाशक्तिमुसलतोमरैर्हन्यमानोऽपि दशग्रीवस्तत्सैन्यं पुनः पुनः समगाहत । ये चासन् राक्षसराजस्य घोरविक्रमाः सचिवास्तेऽपि पृथक् पृथक् स्वस्वपराक्रमं प्रदर्शयामासुः । अत्रान्तरे संयोधकंटको नाम गुह्यकाग्रणीः समागत्य चक्रेण मारीचं मूर्छितं चक्रे । ततो निशाचरो मुहूर्तेन संज्ञामवाप्य तं गुह्यकं योधयामास । अथ लब्धलक्षैरजनीचरैर्वध्यमा- नेषु यक्षेषु धनदाज्ञया तूर्णं मणिभद्रः समागच्छत् । ततस्तेन गदया मूर्ध्नि ताडितो धूम्राक्षः क्ष्मातले पतित्वा व्यसुरिव बभूव । ततः स गिरिनिग्रहं दशाननं समभ्येत्य शक्तित्रयेण

तं भिन्नोरः कपाटविकटं व्यधात्। अथ दशग्रीवो गदया तं मुकुटे जघान। येन लोके स पार्श्वमौलिरिति विश्रुतो बभूव। एवं वरदृप्तेन रक्षसा मणिभद्रेऽपि विजिते जनरवं श्रुत्वा स्वयं धनाधिपः समाययौ। सोऽथ युद्धभूमिमालोक्य कुपितो दशाननं जगाद। अहो पापान्निवार्यमाणोऽपि त्वं दुर्जनवत् स्वाग्रहं न त्यजसि? तस्य बलप्रभावविभवैः किम्? यस्य जीवितं जनोच्छ्वासमलिनं विद्यते। यो भ्रातरं पितरं विप्रमाचार्यं वाऽवमन्यते। स प्रेतराजवशंगतस्तस्य कर्मणः फलं लभते। जगति लोका रूपबलबुद्धिविभवान् स्वार्जितैः पुण्यैरेव प्राप्नुवंतीत्यभिधाय दशास्येन सह संभाषणं परित्यज्य स मारीचादीन् वाणैर्विमुखांश्चक्रे। ततस्तयोर्युद्धं भवितुमारब्धम्। अथ तेन गदया ताडितो राक्षसेश्वरो महापातकी निन्द्येव नाऽकम्पत। अथ राक्षसराजशस्त्रास्त्रवर्षेण विक्षताङ्गो धनप्रभुः स्यन्दने क्षणमात्रं मूर्छितोऽभवत्। ततोऽवसरज्ञो दशाननो यथेष्टं निधिं नीत्वाऽस्य पुष्पकविमानमप्यपाहरत्। एवं दशग्रीवः सानुगं कुबेरं जित्वाऽग्रेव्रजन् सहसा कौमारं शरवणं प्राप। तत्राऽस्य व्रजतो गगने पुष्पकं सपदि स्तब्धतां जगाम। अत्रान्तरे सम्प्राप्तो माहेश्वरो गणश्चिन्तातुरं तमभ्येत्य प्राह। पौलस्त्य! अत्र सुरसिद्धर्षिभोगिनां विमानानां गतिर्नास्ति। यतः स्वयं भगवान् विधुशेखरो गौर्या सह क्रीडति। निशम्यैतद् गणवचनं प्रकोपकलुषेक्षणो दशाननो जगाद। अरे! कोऽसौ शशिमौलिः? ततः स विमानादवतीर्य यावद् विलोकयति तावत् त्रिलोचनाग्रे वानराकृतिं शूलहस्तं नंदिरुद्रं च दृष्ट्वा जहास। एतदालोक्य भैरवविग्रहः स नंदी तर्जनीमुद्यम्य प्रोवाच। रे दशानन! वानराननमालोक्य यत् त्वया हसितं। तस्माद्वानरकुलादेव तव मृत्युर्भविष्यति। तच्छ्रुत्वाऽपि दर्पान्धः स राक्षसेश्वरस्तमनादृत्य च कैलासोन्मूलने मतिं चक्रे। सोऽथ पर्वते भुजान् विक्षिप्य सहसा तोलयामास। येन स शैलः शीघ्रं समकंपत। एतदालोक्य भयातुरा हैमवती सपदि शर्वं समाश्लिक्षत्। अथ मृडो विहस्य पादांगुष्ठेन शैलं पीडयामास। ततो भुजपीडनाद्राक्षसोऽतितरां विरुराव। तेन शब्देन संतुष्टः सदाशिवः प्रोवाच। दशानन! तवाऽनेन शब्देन साहसेन च प्रीतोऽस्मि। त्वमिदानीं यथाकामं पुष्पकेन गच्छ। अद्यप्रभृति त्रैलोक्यरावणात् त्वं रावणो भविष्यसीति श्रीमद्भगवता कृतनामा राक्षसराजः पुनः पुष्पकं समारुह्य महीतले विचचार। ततः स पृथ्वीतले विचरन् वीरान् क्षत्रियान् समाहूय समरे पराङ्मुखान् निजघान संमुखांश्च ररक्ष। अथैकदा रावणस्तुहिनाचलशृंगं समारुह्य तत्रैकां लावण्यकौमुदीं कन्यां ददर्श। सोऽथ तपस्यन्तीं ललिताननां च तामुपसृत्य भद्रे! जन्मना कं वंशमलंकरोषि? कानि वाऽक्षराणि च नाम्ना विभूषितानीति पप्रच्छ। तच्छ्रुत्वा कृतातिथ्या

सा तं प्रोवाच । महाशय ! आसीत्सुरगुरुकल्पः कुशध्वजो नाम मुनिः । तस्य वेदाध्ययननतत्परस्याऽहं वेदवतीनाम वाङ्मयी सुता जाता । ततः साहं सुरसिद्धसाध्यगंधर्वकिन्नरैः संप्रार्थिताऽपि पिता मां कस्मैचिदपि न ददौ । सोऽब्रवीत् । मे दुहितुः पतिरेको विष्णुरेव भवितुमर्हति नान्यः कश्चित् । वनमालोपमैषा कौस्तुभाभरणस्यैव शोभते । अथैकदा पापचेतसा दैत्यराजेन जम्बुना सुप्तो मे पिता रजन्यां निहतः । एतदालोक्य पतिवियोगमसहमाना मम जननी स्वशरीरं चिताग्नये समर्प्य तेनैव साकं स्वर्गलोकमगात् । ततोऽहमसहाया पितृमनोरथं स्मृत्वा श्रीमन्नारायणाप्तयेऽत्र तीव्रं तपश्चरामि । पौलस्त्य ! दिव्य चक्षुषाऽहं त्वां जानामीत्युक्त्वा सा वेदवती विरराम । निशम्यैतन्मुनिसुतावचनं स्रस्तधैर्यो रावणः प्रोवाच । लोलाक्षि ! तव व्यवसितं श्रुत्वाऽहं नितान्तं विषीदामि । क्व तवऽति मनोहरं रूपं क्वचेदं तीव्रतरं तपः ? सुमध्यमे ! तपस्तु संयमसिद्धानां वृद्धानामेव शोभते । इदमव्याजमनोरमं तव वपुस्तु संभोगसुखमभिलषति । किं बहुना । एतत्कान्ताकचाकर्षसीत्कारोचितं मुखं मन्मथस्याभिमुखं भवतु । जटाभिस्तु न विराजते । तवाऽयं निर्बन्धोऽनुचितः । कोऽसौ जनार्दनः ? स मे गुणैः शतांशेनाऽपि न तुल्यः । श्रुत्वैतत् कोपदीप्ता सा कर्णौ पिधाय शान्तं पापं शान्तं पापमित्युवाच । एतदालोक्य राक्षसः केशपाशं परामृश्य च तां भर्त्सयामास । ततः क्रुद्धा वेदवती हस्तेन केशांश्छित्त्वाग्निं समाधाय च रावणं प्रोवाच । अनार्य ! त्वद्वधे शक्ताऽप्यहं तपोव्ययं न करोमि । जन्मान्तरे तवैव वधाय मे तनुग्रहः स्यादित्युक्त्वा पश्यतस्तस्य सा हुताशनं प्रविवेश । राम ! सैवेयं जानकी त्वत्कलत्रमयोनिजमस्ति । या कृतयुगे वेदवती सैव त्रेतायां मैथिलीति विश्रुताऽभवत् । श्रीजनकमहीपतेर्हलमुखाकृष्टे क्षेत्रे श्रीरेषा जाता । त्वं च साक्षाद्विष्णुर्दाशरथिरूपेणाऽत्राऽवतीर्णोऽसि । अथैकदा पुष्पकमारुह्य रावणो भुवि विचरन्नुशीरबीजाख्यं महाचलमारुरोह । तत्र मरुत्तभूपालं यजमानं बृहस्पतिभ्रातरं संवर्तं च याजकं ददर्श । ततो यज्ञभूमिस्थिता देवा वरदृप्तं दशाननं वीक्ष्य रूपविपर्ययं च कृत्वा सत्वरं प्रदुद्रुवुः । तत्र शक्रः शिखी बभूव । यमः काकोऽभवत् । धनाध्यक्षः कृकलासो जातः । वरुणश्च हंस आसीत् । ततो युद्धं प्रयच्छेति रावणेन समभ्यर्थितो राजा को भवानिति ससंभ्रमं समभाषत । तच्छ्रुत्वा प्रहसन् सोऽब्रवीत् । राजन् ! प्रीतोऽस्मि । तवाऽनेन प्रौढावलेपेन । जगत्यस्मिन् को देशोऽस्ति । यत्र दिनमणिर्न दृश्यते । अहं पौलस्त्यो रावणः । मया च ज्येष्ठो भ्राता कुबेरोऽपि विजितः । तच्छ्रुत्वा राजोवाच ! भद्र ! त्वमेव लोके धन्यो-

ऽसि। यो गुरुं जित्वाऽऽत्मानं बहुमन्यते। सज्जनो येन धर्मविहीनेन कर्मणा लज्जते। दुर्जनस्तेनैव जननिंदारजोजुषा कुकृत्येन नित्यं श्लाघत इति महीपतिरभिधाय सायकांश्चापं समादाय च रावणेन सह योद्धुमुद्यतोऽभवत्। एतदालोक्य संवर्तस्तमुवाच। राजन्नयं माहेश्वरः क्रतुरसंपूर्णो दीक्षितं निहन्ति। लोके दीक्षा हि किल्विषक्षयकारिणी प्रथिता। महाराज ! क्षमापात्रसंक्षिप्तसकलेन्द्रियो दीक्षितः क्व ? क्रोधरजोध्वस्तं युद्धं च क्व ? निशम्यैवमाचार्यवचनं मरुत्तमहीपालः सपदि सशरं चापं च समुत्सृज्य निरुपद्रवो बभूव। ततः पौलस्त्यसचिवैर्जयशब्दे च समुच्चारिते मुनिजनरक्तपानमत्तो दशाननो निर्ययौ। ततो मरुत्तप्रीतये यज्ञभूमिं पुनरायातः शक्रो बर्हिणे सहस्राक्षत्वं प्रादात्। अद्याऽपि शिखी बर्हे सहस्राक्षतां समवाप्य घनगर्जनेन नृत्यति। वरुणवरात् हंसोऽपि शीतांशुकर्पूररजतद्युतिः सलिलपतिप्रेमपरायणश्च बभूव। कुबेरप्रसादात् कृकलासः सुवर्णाभो भासुराकारश्चाऽभूत्। यमशासनात्काको बलिभुक् चिरजीवी पितॄणां च प्रीतिकृदासीत्। एवमेते प्राणिनः श्रीदेवगणप्रभावात् कृतकृत्यतां प्रापुः। सत्पुरुषसंगो न कदाचिन्निष्फलो भवतीति स्पष्टमवगम्यते। ततो रावणो गयगाधिदुष्यन्तसुरथपुरूरवसो विजित्य साकेतं जगाम। तत्राऽनरण्यभूपालेन सहास्य शस्त्राऽस्त्रग्रामदुःसहं युद्धमभूत्। ततस्तत्तलाघातेन निहतो महीपतिः कृत्तमूलो महाताल इव भूमौ निपपात। सोऽथ क्षणावशेषजीवोऽपि स्वविजयं श्लाघमानं दशाननं जगाद। अभिमानिन् ! प्राप्तकालं क्षात्रियं मान्निहत्य किं प्रगल्भसे ? तव वधो मद्वशांजादेव भविष्यतीत्युक्ते नरनाथेन देवदुंदुभिर्ननाद गगनाच्च पुष्पवृष्टिः पपात। एतदाकर्ण्य रामः कुंभोद्भवं मुनिं पप्रच्छ। महर्षे ! किन्तदा कृत्स्नाऽपि मही वीरविहीनाऽभवत् ? यदेवंविधाश्चक्रवर्तिनोऽपि तेन विजिताः। तच्छ्रुत्वा मुनिराजोऽब्रवीत्। रघुराज ! वरदृप्ते निशाचरे प्रतापिनोऽपि नरेश्वराः किं कुर्वन्ति। जगति समय एव बलाबलं करोति। ततो दशमुखो माहिष्मतीं पुरीं जगाम। तस्मिन्नवसरे राजधानीपतिः कार्तवीर्योर्जुनोऽन्तः पुरैः सह रेवारोधसि जलकेलिरत आसीत्। अथ दुर्दृष्टदशाननो महामात्यान् क्व स राजाऽर्जुन इत्यपृच्छत्। एतदाकर्ण्य नयकोविदाः सहस्रभुजमंत्रिणो राजाऽत्र न विद्यत इति प्रत्यभाषन्त। ततो बद्धमनोरथो दशग्रीवो विन्ध्याद्रिं गत्वा मध्याह्ने नर्मदानीरमाससाद। सोऽथ स्वच्छफेनदुकूलिनीं हंसमालिनीं दक्षिणांभोधिमहिषीं च नर्मदामालोक्य विगतक्लमो बभूव। ततोऽन्येद्युर्मारीचमुखान् सचिवान् प्रोवाच। सखायः ! एषा तरंगिणी तरुणीव मे मनो रसयति। इमे च नर्मदातीरमारुता गात्रं

स्पृष्ट्वा मित्रालिंगनवत् सुखं जनयंति । अस्मिन् संतोषविशदे वाहिनीपुलिने मम मनो हरपुष्पोपहाराय भृशमुत्कण्ठते । सहृदयाः ! ये हरार्चनोपकरणे संतता न भवंति । ते विभवा अपि कुविभवा एव । विपुलैश्वर्यकल्पतरोरेतावदेव फलं यद्राजोपचारपूजाभिर्महेश्वरा सम्पूज्यन्ते । किम्बहुना । पुण्यभाजामेकजन्मावशेषाणामेव भवे भावना भवति । भवद्भिरुपनीतेन पूजोपकरणेन मे तूर्णं लिङ्गार्चनोत्सवः प्रवर्ततामित्युक्त्वा विरराम । निशम्यैतद्राजशासनं क्षणदाचराः पूजामयोचितं सर्वं पुरःपुष्पाणां निचितं चक्रुः । ततो भ्रात्रा कृतजपः सैकते सदार्चितं हेममयं लिंगं समादाय सर्वोपचारपूजाभिर्यथेप्सितं च पूजयित्वा नामाष्टशतकं गायंश्च दशकन्धरो ननर्त । सदैव तु स विधानेन हरं संपूज्य जगज्जयी बभूव । किन्तु तस्मिन्दिने तदनुष्ठानं विधिहीनमभवत् । अत्रान्तरे माहिष्मतीपतिरर्जुनस्तटस्याधस्तीरे ललनाशतैर्विललास । ततो भूपतिस्तत्र भुजसारं ज्ञातुं तरंगिणिन्धृत्वा तत्प्रवाहं पराङ्मुखं चकार । एवं बलिना तेन निरुद्धा सा सरिन्मन्युनेव परावृत्ता यथागतं जगाम । ततो रावणाङ्केव पुण्याश्रमविनाशिनी सा वीचिहस्तैस्तां रावणकृतां सपर्यामुन्ममाथ । एतदालोक्य रावणः संज्ञया तत्कारणं विज्ञातुं शुकसारणौ समादिदेश । ततस्तौ तटिनीमध्ये गत्वा भुजैः सलिलं रोद्धारं कान्तासहस्रयुतं दृप्तं कार्तवीर्यार्जुनं च ददृशतुः । ततस्तौ दशकन्धरं समभ्येत्य जगदतुः । प्रभो ! कार्तवीर्येण निरुद्धा तरंगिणी परावर्तत । तच्छ्रुत्वा हर्षामर्षपरिपूर्णो राक्षसेश्वरस्तां भुवं गत्वा तत्सचिवान् प्रोवाच । भो भो मंत्रिणः ! क्वाऽस्ति सोऽर्जुनभूपालः ? दशाननोऽहं युद्धेच्छयाऽत्र स्वयं समायातः । निशम्यैतद्रावणवचनं सचिवाः प्रत्यवदन् । लंकेश ! कालेऽस्मिन् नरेश्वरोऽस्माकं कान्ताकेलिकुतूहली वर्तते । अतः सोऽधुनाऽदृश्योऽस्ति । नाऽयं युद्धावसरः । क्षपामेकां क्षमस्व । नाऽयं विबुद्धो युद्धेन विना प्रातः क्वाऽपि गमिष्यति । अत्रान्तरे नरपतिर्दशाननं युद्धार्थमायातं श्रुत्वा सपदि जलान्तरादुन्ममज्ज । सोऽथ क्षितीश्वरो गदां समादाय राक्षसराजं समभ्यधावत् । विलोक्यैतन् प्रहस्तस्तस्मै यजुज्वलनाकुलं मुशलं चिक्षेप । पृथिवीपतिस्तच्च सावेगं गदया जग्राह । ततो राजा प्रहस्ताय गदां चिक्षेप । यया ताडितस्स मुखेन रुधिरं वमन् भुवि मूर्छितो निपपात । ततो नरराक्षसराजयोर्युद्धं भवितुमारब्धम् । तत्र यच्चरणन्यासैः पृथिवी कदाचिदुन्ममज्ज कदाचन ममज्ज । किम्बहुना । परस्परपदाघातनिष्पिष्टरत्नाभरणाग्निना व्याप्तौ तौ वीरौ सविद्युतावचलाविव विरेजतुः । ततो युद्धविशारदोऽर्जुनस्सर्वप्राणेन यां महावेगां गदां राक्षसेन्द्रस्य वक्षस्यपातयत् । सा तस्य दृढोरः संपीड्य द्विधा भूत्वा च

न्यपतत् । ततो व्यथितो रावणो मूर्छितो बभूव । एतदालोक्य कार्तवीर्यस्तं सत्वरं बद्ध्वा जग्राह । तस्मिन्नवसरे स साधुवादसहिताभिः पुष्पवृष्टिभिः संपूजितोऽभवत् । तद्बन्धनं समुद्रस्य शोषणमिव किंवाऽर्कस्याकर्षणमिव मन्यन्ते स्म सुरमुनिनराः । ततः क्रोधमूर्छिताः प्रहस्तादयो मुहुर्योद्धुमभ्याद्रवन् । राजा दीप्ताभिः शरवृष्टिभिस्तान् विद्राव्य बद्धं दशाननं समादाय च निजां पुरीं प्रविवेश । अथ दिवि देवगणैः कथ्यमानं रावणबन्धनं समाकर्ण्य पौलस्त्यः पौत्रस्नेहात् सत्वरं तत्राजगाम । ततस्तेन ब्रह्मसूनुना संप्रार्थितो नरपतिः पौलस्त्येन साकं पावकसाक्षिकं सख्यं कृत्वा बंधाच्च तं तत्याज । जगति संपदां विश्वासो नास्ति । दर्पो मानाशनिर्वर्तते । लोके विचित्रं विधिचेष्टितं को ज्ञातुं समर्थोऽस्ति ? धनिभ्योऽप्याधिका धनिनः संति । वादिभ्योऽधिका वादिनो मिलंति । एवं बलिभ्यो ऽप्यधिका बलिनः श्रूयन्ते च दृश्यंते । तस्मात्सर्वथा दर्पं विवर्जयेत् । जगति गुणानां संपदां यशसां तेजसां चाऽविच्छिन्नः प्रकर्षोऽयमुपर्युपरिवर्तते इति विचिन्त्य विद्वांसो गर्विता न भवन्ति । एवं बलाधिकान् बाधमानः स पुनः पृथिव्यां विचचार । उक्तं च । देहिनां प्रभावो देहेन सहैव प्रशाम्यति । अथैकदा स किष्किन्धाधिपतिं बालिनं शौर्याभ्यधिकं श्रुत्वा युद्धलालसया सचिवैः सह तूर्णं वानरेश्वरपुरीं जगाम । ततस्तत्र तारानुजस्तारस्तं बालिवधसन्नद्धं दृष्ट्वाऽब्रवीत् । राक्षसराज ! वानरराजः सन्ध्यामुपासितुं जलधिचतुष्टयं यातः । क्षणं तिष्ठ । पश्चाद्दर्पं तस्याग्रे निक्षिप्य यास्यसि । पौलस्त्य ! पूर्वमेता बालिहतानेकवीरकंकालमालिता दिशोऽवलोक्य पश्चात्सर्पकरण्डके हस्तं प्रक्षिप । यद्यपि त्वं वरप्रभावादमरोऽसि । तथाऽपि रणे बालिनं प्राप्य नूनं कथाशेषो भविष्यसि । किं बहुना । यदि जीवनं नाऽभिलपसि । तर्हि द्रुतमितो दक्षिणार्णवं गच्छ । निशम्यैतत् तारवचनं कुपितो रावणस्तं निर्भर्त्स्य पुष्पकेण तूर्णं संध्यायां दक्षिणार्णवं प्रययौ । सोऽथ तत्र संध्याध्यानस्थं बालिनं विलोक्य तज्जिघृक्षया निःशब्दं पद्भ्यां ययौ । अत्रान्तरे हेमाचलोपमो बाली किंचिल्लोचने समुन्मूल्य रावणं दृष्ट्वाऽपि जपं न तत्याज । ततः स महाभुजो रावणाभिप्रायं ज्ञात्वा जपान्ते सुपर्णः पन्नगमिव तं जग्राह । सोऽथ नखैरुल्लिखन्तं राक्षसेश्वरं कक्षायां कृत्वाऽऽशु गगनमुत्पपात । एतदालोक्य क्रुद्धा रावणसचिवाः सहायार्थं कृतप्रयत्ना अपि बालिवेगानिलहता मेघा इव क्षितौ न्यपतन् । ततः स यथाविधि समुद्रत्रये संध्यामुपास्य कक्षानिक्षिप्तराक्षसोऽप्यश्रान्तः स्वपुरं प्राप । सोऽथ विहसन् रावणं तत्र विमुच्य प्रोवाच । कस्त्वम् ? केनेह विन्यस्तः ? कथं चाऽत्र समायातः ? निशम्यैतत् सोपहासं बालिवचनं श्रम-

श्वासाकुलतनू रावणः प्रोवाच । अहो निरुपमसत्त्वस्य तव वलाधिक्यम् ? अहो धर्मनिष्ठस्य च भवतो व्रतपरायणता येन रावणोऽहं बद्धोऽस्मि । कस्ते गरुडोपमां वक्ति ? पवनतुल्यताऽपि लज्जेव । जगति त्वदन्यः कोऽस्ति ? यो दशवन्मां समादाय दिक्त्रये क्षणेन भ्राम्यति । तेजसामवधिर्नास्तीति व्यक्तम् । किं बहुना । सुविपुलेऽस्मिन् संसारे रोमांचकारिचरितस्त्वद्विधो जनो न श्रुतो न चाऽवलोकितः । वानरेश ! त्वया सह ममाऽविछिन्नधनप्राणं सख्यमस्त्वित्युक्त्वा तेन सार्द्धमग्निसाक्षिकं सौहार्दं चकार । ततः पूज्यमानो दशाननो वालिगृहे मासं स्थित्वा सचिवैस्तैः समेत्याभ्यर्थितो जगज्जयाय पुनः प्रतस्थे । तस्मै सर्गायैव प्रणतिरस्तु । यस्मिन् मनोजुषां विचित्राणामनित्यानां च वस्तूनां परिसंख्या नहि विद्यते । एवं मर्त्यलोके वीरवधोद्यतं रावणं दृष्ट्वा महर्षिर्नारदोऽब्रवीत् । पौलस्त्य ! तव दर्शनं मह्यं रोचते । यत्त्वं सर्वास्ववस्थासु युद्धात् क्वचिन्न विरतः । श्रीमता हरिणा कृतं दैत्यसंहारं गरुडकृतं सर्पसंक्षयं त्वया च जितं विश्वं विलोक्य कुतूहलप्रियोऽहं भृशं प्रसीदामि । वीरवर ! सम्प्रति मर्त्यनिधनाद्विरम । यतस्तद्विनाशाय त्वनिशं स्वयं यमो जागर्ति । एते तु नदीवेगाः समुद्रमिव यमवक्त्रं विशंति । तस्मिन्नेव जिते त्वया कृत्स्नो लोको जित इति मन्ये । निशम्यैतन्नारदवचनं दशाननस्तथेत्युक्त्वा सचिवैः सार्द्धं वैवस्वतं जेतुं जवात् प्रतस्थे । अत्रान्तरे देववेदहितैषिनारदस्ततो गत्वा यमायाऽपि रावणोद्योगमावेदयामास । ततो रावणः पुष्पकं समारुह्य प्रेतराजपुरीं जगाम । तत्र जन्मनिर्माणकर्मवर्मावृतं जनं विलोक्य चकितो बभूव । अहो ! अत्र कश्चित्पूयशोणितमये वैतरणीजले निमग्नो विषादमुपयाति । कश्चित् संतप्तेष्वायसस्तंभेषु वध्यमानो हा हेति प्रलपति । एको लगुडैर्जर्जरीकृतावयवः क्रन्दत्यपरश्च निशितटंकैः परितक्ष्यमाणो मूर्छितो भवति । सुकृतिनश्चाऽत्र समुज्ज्वलदेहा रुचिराभरणस्रजो दिव्योद्यानगृहाभोगसंभोगसुखभागिनः संति । ततः पौलस्त्यः पुष्पकांशुभिः सर्वं तं देशं वितिमिरं कृत्वा रौरवान्तरात् सर्वानार्तप्रलापिनः समुज्जहार । एवं राक्षसेन्द्रेण निरयात्सर्वतो जने मोक्षिते यमसद्मनि तुमुलः शब्दो बभूव । ततो घोररूपाभिः शमनसेनाभिर्निशाचरपतेर्महायुद्धमभवत् । अथ यमकिंकरास्त्रवृष्टिभिर्व्योम्नि शकलीकृतं पुष्पकं प्रजापतिवरप्रभावात्सद्यो नवनवमभूत् । ततो रुधिरोक्षितो राक्षसेश्वरः कोपं कृत्वा पाशुपतास्त्रं संदधे । अथ तेनास्त्रेण सपदि सैन्ये भस्मसात्प्रयाते मृत्युकालाभ्यां सहितः स्वयं दण्डपाशहस्तो यमराजोऽपि तत्र समाययौ । ततः क्रुधा यमरावणयोः संग्रामे प्रवृत्ते ब्रह्मरुद्रेन्द्रप्रमुखा देवा अपि तत्प्रेक्षितुमुत्कण्ठिता बभूवुः । अथ जयैषिणोस्तयो-

रधोमुखैरूर्ध्वमुखैश्च पत्रिभिः सप्तरात्रं निर्विशेषं युद्धमभूत् । ततो रावणशरैश्छाद्यमानतनोर्यमस्य मुखात् प्रफुल्लरक्ताशोक इव क्रोधाग्निरजायत । तस्मिन्नवसरे मृत्युः कोपात् करेण करं विनिष्पिष्य तमवदत् । कृतान्त ! रक्षः पातकसंक्षये मामेकमनुजानीहि । सुरमुनिनरनागेषु यक्षराक्षसगन्धर्वकिन्नरेषु वा तन्न पश्यामि । यो यमदंष्ट्राघटीयंत्रान्मुक्तः स्वास्थ्यमाससाद । किं बहुना । मधुवृत्रनमुचिशम्बराहिरण्याक्षहिरण्यकशिपवो जगद्ग्रासासक्तस्य मे पुरतः क्षणेनैकेन विस्मृताः । बालोपम एष क्षणदाचरस्तु कियान् । स्वयं संरंभं त्यज । मया स्पृष्टो न कोऽपि जीवतीति मृत्युवचः श्रुत्वा विश्वसंयमनो यमो मे बलं पश्येत्युक्त्वा सपदि रावणमभ्याद्रवत् । ततः कम्पमानेषु लोकेषु तदग्रे घोरो मुद्गरः पाशश्च सन्निधानं चक्रतुः । अथ दण्डधरो रोपाद्दण्डं समुद्यम्य यावत्प्रचलति तावत् प्रजापतिस्तत्र समागच्छत् । सोऽथ यमं प्रोवाच । वैवस्वत ! कोपं संहर । वरदप्तोऽयं राक्षसस्तव वध्यो नास्ति । अपरं च । अमोघोऽयं दण्डः सर्वभूतक्षयाय परिकल्पितः । एवं दशमुखे निहते दण्डे मोघतां गते सति स्थितिविनाशकृदसत्यं मामुभयतः स्पृशेदिति स'क्षात्प्रजानाथेनाऽभिहितो यमो ह्याज्ञा गुरूणामविचारणीयेति निगद्य सरथः सत्वरं तिरोदधे । एवं यमजयोर्जिते दशग्रीवे याते निम्नानना देवा नारदेन सह दिवं जग्मुः । ततो राक्षसेश्वरोऽमात्यैः सह व्यालकलिलं पाताललोकं प्रविश्य तत्रत्यां वासुकिपालितां भोगवतीं पुरीं जिगाय । सोऽथ मणिमयीं दैत्यनगरीं गत्वा निवातकवचैः सार्धं वर्षपर्यन्तं युयुधे । ततस्तत्र तुल्यबलौजसां तेषां तुल्ये संग्रामे सिद्धे ब्रह्मवाक्याद्रावणः प्रीत्यै पावकसाक्षिकं सख्यं कृतवान् । ततो दशाननस्तेषां वेश्मनि वर्षमेकं स्थित्वा तेभ्यो मायानां शतं समवाप्तवान् । अथ सोऽश्मनगरेऽन्यान् दैत्यान् निहत्य कैलासकल्पं वरुणमंदिरं प्राप । तत्र स कामधेनुं विलोक्य चकितचेतसा मंत्रिमण्डलं पप्रच्छ । क्वाऽस्ति स वरुणः ? निर्जितयमोऽहं रावणः स्वयं युद्धकामनयाऽत्र समायातः । निशम्यैतद्रावणवचनं सलिलनाथपुत्राः पौत्रा अमात्याश्च सैन्येन सह युद्धार्थं निर्ययुः । ततस्तत्र दण्डादण्डि मुसलामुसलि युद्धमभूत् । अथ प्रमाथिना रावणेन वरुणानीके विदारिते पुष्करप्रमुखा वरुणात्मजा व्योम विविशुः । ततस्तैः सह लंकेशस्य शस्त्रास्त्रज्वालालोलरसातलं यद् युद्धं बभूव । तत्र महोदरो गदया तान्ममाथ । एवं भग्नेषु वरुणपुत्रेषु वरुणामात्यः प्रहासो रावणं समभ्येत्य प्रोवाच । पौलस्त्य ? युद्धेनाऽलम् ! अत्र जलाधिपतिर्नास्ति । स गांधर्ववेदं श्रोतुमितो ब्रह्मलोकं गतवान् । एवं रावणो वरुणपुरीं जित्वा पाताललोकमगात् । सोऽथ तत्रैकं रुचिरं रत्नमंदिरं तद्द्वारि च मुसलायुधं पुरुषं ददर्श । ततो रावणप्रेरितः प्रहस्तस्तत्रत्यं परिच-

यमवाप्य सर्वं रहस्यं रावणाय निवेदयामास । ततः स्वर्णालये प्रविशन्तं दशाननं द्वारपालोऽब्रवीत् । विश्वद्रोहिन् ! युद्धार्थमायातं त्वां सम्यगहं जानामि । अत्राऽहमस्मि । बलिश्च तत्रास्ते । कथय केन सह युद्धं समीहसे ? तच्छ्रुत्वा कोपाकुलो दशाननोऽवदत् । त्वं तु राजसेवकोऽसि । राजाऽहं राज्ञैव सह योद्धुमिच्छामीत्यभिधाय सहसान्तरं प्रविवेश । ततः स पवित्रचरितव्रतं बलिं दृष्ट्वाऽऽश्चर्यसागरे निमग्नो बभूव । अहो ! श्लाघ्यस्याऽस्य लक्ष्मीतनुता धन्या । दानशीलोऽयं याचकैश् छिन्नशाखस्य चन्दनस्यैव शोभां लभते । अतिप्रमाणेन दानेन विष्णुना बद्धस्याऽस्य दिव्यं यशास्त्रिषु लोकेषु स्वेच्छया भ्रमति । जगति केनान्येन वदान्येन बलेरुपमा क्रियताम् । येन त्यागेन वामनोऽप्युरुक्रमतान्नीतः । यथा समरे शूरस्य विरूपिता विराजते । तथा दानवीरस्य दरिद्रताऽपि दीप्यते । एवं नानाविधान् विचारान् कुर्वन् प्रगल्भोऽपि दशाननो विद्वत्सभां प्राप्य मूर्ख इव निष्प्रतिभो बभूव । अथ विशुद्धाशयो बलिस्तमुत्संगे समारोप्य प्रीत्या दूरादागमनकारणं पप्रच्छ । तच्छ्रुत्वा रावणोऽब्रवीत् । पातालनाथ ! मुरारिणा त्वां बद्धं समाकर्ण्य निर्जितनिर्जरोऽहं तव साहाय्यार्थं समायातोऽस्मि । निशम्यैतद्रावणवचनं बलिर्विहस्य प्रोवाच । लंकेश ! योऽयं घनश्यामोद्वारि तिष्ठति । तेनैव विष्णुना लीलयाऽहं बद्धोऽस्मि । पुरा मधुकैटभाहिरण्याक्षप्रभृतयो ये ये प्रतापिनो दानवा आसन् । ते ते सर्वेऽप्यस्य कालरूपिणो महापुरुषस्य जठरपिटरे प्राविशन् । किम्बहुना । एष एव जगतः स्रष्टा पालयिता संहर्ता चाऽस्ति । मोक्षगामिनो योगिनः सिद्धा यतयश्चैनमेव पर्युपासते । एष सर्वात्मा भगवान् प्रत्यक्षोऽपि गगने मोहान्धैः सहस्रांशुरिव नाऽवलोक्यते । तं जेतुं तव संकल्पोऽस्तीति श्रुत्वा को न हसिष्यति ? किं बालको मोदकाशया रुदन् पूर्णेन्दुं लब्धुं शक्तः ? निशम्यैतद्बलिवाक्यं ततो विनिर्गत्य रावणो मूढधीर्देहस्थं पुरुषमिव तं न ददर्श । सोऽथ तेनैव जलनिधिवर्त्मना पातालात्समुन्मज्य शशांकलोकं जेतुमंजसा प्रतस्थे । सोऽथ व्योम्नि विमानेन व्रजन् मेरुशृंगं समवाप्य सुकृतिनां तत्रार्कवर्णानि विमानानि ददर्श । ततः स विस्मयमवाप्य मुनिमपृच्छत् । ऋषिराज ! कोऽयं सूर्यपथोत्तीर्णः परिव्राडास्ति ? तच्छ्रुत्वा देवर्षिः पर्वतोऽब्रवीत् । राक्षसेन्द्र ! अयं रथस्थः सोमपा राजर्षिर्मान्धाताऽस्ति । एते च परे सुकृतिनोऽन्नधनादिप्रदातारः संति । एतदाकर्ण्य पौलस्त्यस्तं विजेतुं व्यगाहत स्वर्णमार्गम् । ततस्तत्र तेनाहूतस्य भूपतेर्जम्भेन शचीपतेरिव सुमहद्युद्धं बभूव । तस्मिन्नस्त्रास्त्रसंघट्टघट्टिताशेषदिक्तटे घोरसमरे प्रवृत्तेऽतिजनक्षयोऽभवत् । ततो दिव्यास्त्रमण्डले क्षीणे राजा यत् पाशुपतास्त्रं जग्राह । तेन त्रिज-

गतक्षोभाविभ्रमो बभूव । अत्रान्तरे महर्षिप्रवरौ पुलस्त्यगालवौ तां युद्धभूमिं समभ्येत्य विश्वशान्तये सख्यं चक्रतुः । ततो रावणो हंसमालाङ्कं प्रथमं मरुत्पथमाक्रम्य तत्तुल्यमपरं वातस्कन्धं समाचक्रमे । यत्राग्नेयाः पक्षिणो ब्राह्माश्च त्रिविधा वारिदा वर्तन्ते । ततस्तृतीयं सिद्धानां तुरीयं भूतानां पंचमं दिग्गजानां षष्ठं सुपर्णस्य सप्तमं च मुनीनामतिक्रम्य व्योमवाहिनीमाचक्रमे । ततोऽतिभयप्रदं शीतांशुमण्डलं संप्राप्य सानुगो लंकेशस्तत्र पपात । राम ! तत्र हिमस्य काऽपि महती दहनात्मिका शक्तिर्विद्यते । अथ दंतवीणां वादयन् प्रहस्तस्तमुवाच । दशग्रीव ! तूर्णमितो निवर्तस्व । अत्र स्थितिः सर्वथा निधनाय । निशम्यैतन्मंत्रिवचनं कोपकंपितो रावणः सोममण्डले दीप्तान्नाराचान् चिक्षेप । ततो भगवान् पद्मयोनिः स्वयं तत्रागत्य तमभाषत । पुत्र ! त्वमत्र मा तिष्ठ । संप्रति प्राणत्राणाय तुभ्यं मंत्रराजं वितरामि । तं गृहाण । समागते प्राणसंकटे रौद्रं नामाष्टकशतं जप । येन सर्वत्र विजयो लभ्यते । स सदाशिवः अजरः, अमरः, अजन्मा, अविनाशी, अघोरः, आशुतोषः, इच्छानाथः, इन्दुमौलिः, ईशः, ईश्वरः, ईशानः, उग्रः, उमेशः, उद्गीथप्रियः, ऊर्ध्वरेताः, एकलिंगः, एकदंततातः, ऐलविलसखः, ओंकारस्वरूपः, औपनिषदः, अन्धकरिपुः, कपर्दी, कपाली, कुमारजनकः, कैलासवासी कालीनाथः, काशीपतिः, खण्डपरशुः, गिरिशः, गिरिजापतिः, गोपतिः, गौरीकान्तः, गंगाधरः, घोरः, चन्द्रचूडः, चन्द्रशेखरः, चन्द्रधरः, चमत्कारी, चंडीपतिः, छविराशिः, जगत्पतिः, जगद्योनिः, जटाधरः, झषकेतुविजेता, टंकारप्रियः, ठक्कुरः, डामरप्रियः, डमरुकुशलः, ढुंढिराजपिता, त्र्यम्बकः, त्रिपुरारिः, त्रिलोचनः, त्रिपुण्ड्रधारी, दक्षयज्ञध्वंसी, दक्षिणामूर्तिः, दिगम्बरः, दुर्गानाथः, देवाधिदेवः, धूर्जटिः, नागेन्द्रहारः, नित्यः, निरंजनः, निर्विकल्पः, नीलकण्ठः, नीललोहितः, पशुपतिः, प्रमथाधिपः, पुरमथनः, पार्वतीपतिः, फणिभूषणः, बटुकनाथः, भवः, भस्मांगरागः, भीमः, भयहर्ता, भवानीजानिः, भूतनाथः, भूतेशः, भव्यः, भव्यवेशः, मृडः, महादेवः, महेशः, महेश्वरः, मृत्युंजयः, मदनान्तकः, यज्ञेशः, योगिराजः, रामेश्वरः, रुद्रः, ललितकीर्तिः, वामदेवः, विरूपाक्षः, विश्वनाथः, विश्वेश्वरः विभूतिभूषणः, वृषभध्वजः, विद्यादाता, वेदमूर्तिः, वैद्यनाथः, शर्वः, शुद्धः शशिशेखरः, शितिकण्ठः, शूली, श्रीकण्ठः, शिवः, शंकरः, शंभुः, सनातनः, स्थाणुः, स्मरारिः, हरः, क्षमासिन्धुः, ज्ञाननिधिश्चेत्यनेन शिवनामावलीसंकीर्तनेन भगवान् शंकरः परितुष्यतीत्युक्त्वा देववन्द्यो भगवान् विरंचिर्ब्रह्मलोकमगात् । एवं दिग्विजयं कृत्वा बरदृप्तो दशाननः सुरगंधर्वनागकिन्नरकन्यकाः जहार । तस्यैवं विधाम् नीतिं दृष्ट्वा सर्वाः

सुरासुरयोषितः क्षयं प्रयास्यसीति शेपुः । ततो विजयश्रीविभूषितोराक्षसेश्वर आत्मानं कृतकृत्यं मत्वा लंकां न्यवर्तत । अथैकदा रावणस्वसा शूर्पणखा पादयोः प्रणिपत्य दुःखाज्जगाद । अहोवत राजाधिराज ! त्रैलोक्यजयिना त्वया श्लाघनीयं बन्धुकार्यं कृतम् । जगति सुहृदुपकाराय बान्धवानामभ्युदयाय च सद्भिर्विभवः सम्प्रार्थ्यतेऽन्यथा भोजनं तु कस्य दुर्लभम् ? भ्रातः ! दिग्विजयसमये त्वया ये कालेयां नाम दैत्या निहतास्तेषां मध्ये मम पतिर्विद्युज्जिह्वोऽपि सहसा निपातितः । निशम्यैतदप्रियं स्वसृवचनं दशाननो लज्जया सहसा नम्राननो बभूव । ततः क्षणं तूष्णीं स्थित्वा तां समाश्वास्य च प्रोवाच । भागिनि ! अस्ति कर्मक्षमो मम मातृस्वस्रेयः खरः । स खलु मद्वाक्यात् त्वां स्वजननीमिव संपूजयिष्यति । वत्से ! मयाऽस्य दण्डकारण्ये स्वकीयं महद्राज्यं प्रतिपादितम् । तत्रैव निवसन् स ते निर्देशकारी भविष्यति । स्वसः ! भर्तरि याते संभोगविभवे च गते नारीणामयांचासुलभा वृत्तिरेव दुःखशूलापहारिणी कथ्यते । एवमभिधाय रावणः ससैन्यं दूषणानुगं खरं तां शूर्पणखां च दण्डकारण्याय विससर्ज । अथैकदा दशाननो मेघनादकृतैः क्रतुभिश्चैत्ययूपांकिते निकुंभिलाक्षेत्रे कृष्णाजिनधरं दीक्षितं च पुत्रं दृष्ट्वा तं परिष्वज्य च प्रोवाच । वत्स ! मयौशनसाद् द्विजात्तव व्यवसितं श्रुतम् । यत् त्वयाऽग्निष्टोमः कृतः । बहुसुवर्णकोऽश्वमेधः समाचरितः । अन्ये च गोसववैष्णवराजसूया अपि विधिवत्संपादिताः । किम्बहुना । माहेश्वरे क्रतौ सपूर्णे रुद्रशासनात् सुललितं रणोपकरणमपि लब्धम् । किं च या तामसी मायाऽपि संप्राप्ता । स यज्ञोऽद्य समाप्यत इति समाकर्ण्याऽत्र समायातोऽस्मि । पुत्र ! त्वया नैतच्छोभनं कृतं । यदत्रैव मम शत्रवो देवा यज्ञेष्वभ्यर्चिता इत्यभिधाय पुत्रेण सह राजधानीं विवेश । अथाऽन्येद्युर्विभीषणस्त्रिदशयोषितो हृता दृष्ट्वा भ्रातरमुपसृत्य जगाद । राजन् ! तवाऽयं त्रैलोक्यविजयोऽनेन परदारापहरणेन न विराजते । संपद इमा निर्दयत्यागसंभोगैस्तथा न क्षीयन्ते । यथा दुर्णयसेवनेन । प्रज्ञा श्रुतेन, वाणी सत्येन, विद्या शमेन, लक्ष्मीश्च शीलेन शोभते । साम्प्रतं धर्ममवलम्ब्य देवकलत्राणि त्यज । गतरात्रौ मधुना राक्षसेन बलात् पुष्पोत्कटातनया कुंभीनसी हृतेति वाक्यमाकर्ण्य दशाननः श्वसन् प्रोवाच । तिष्ठ भ्रातः ! कुंभकर्णोऽद्य प्रबुद्धः । मेघनादश्च कृतक्षणोऽस्ति । वयन्देवान् विजेतुं गच्छामस्त्वया च लंका संरक्ष्यतामित्युक्त्वा ससैन्यः सामात्यश्च रावणो जीमूतलांछना दिशः कुर्वन्निर्ययौ । सोऽथ मधुपुरं गत्वा पुरोऽग्रजां ददर्श । ततस्तया भर्तृप्रीत्या पादप्रणामेन च सम्प्रार्थितः स तद्वैधव्यानुतापं स्मृत्वा सपदि मधुवधाद्विरराम । ततः स स्वर्गविजयोद्योगे तं सेनापुरस्सरं

कृत्वा कैलासतटीमवाप्य च मुक्तवाहनो न्यषीदत् । ततो दशाननस्तस्मिन् स्फाटिके गिरिकटके वर्तमानं विद्याधरीहर्म्यमारुरोह । अत्रान्तरे कर्पूरधवलः श्यामामुखविशेषकश्च समुदितस्तारापतिर्गगनमानसे राजहंसतामवाप । किम्बहुना । कैलासशृंगेषु चन्द्रबिंबैस्तत् प्रतिबिम्बैश्च जगदिदमिन्दुमयं बभूव । सोऽथ विद्याधरीस्वैरनारीनूपुरनादिते सिद्धगंधर्वकिन्नरांगनागीतैः प्रतिध्वनिते च तस्मिन् शृंगे व्रजन् परां प्रीतिमाससाद । ततः सोऽचिन्तयत् । यत् कान्तां विना कौमुदी कौमुदीं च विना कान्ता लुब्धश्रीरिव निष्फला हृदि सततं संतापं जनयति । अत्रान्तरेऽभिसारिका रंभोरूरंभा तेनैव वर्त्मना समाययौ । सोऽथ षोडशशृंगारमण्डितां तां चन्द्राननां विलोक्य जहर्ष । ततः सत्वरं समुत्थाय पाणौ तामालंब्य च पप्रच्छ । नयनानंदकौमुदि ! तवायमनुग्रहः कस्य मन्मथसाम्राज्यमौलौ विराजते ? चारुलोचने ! इतो निवर्तस्व । नाऽहं त्वां त्यक्तुं शक्नोमि । सुभ्रु ! त्वमेव कथय । कः सुधीरयत्नोपनतां सुधां समवाप्य भोगं विना तां परित्यजति ? वरवर्णिनि ! शक्तिः, प्रभुता, संपदां संभोगः, दुर्लभवस्तुलाभश्च तीव्रतपः फलमभिधीयते । निशम्यैतत् प्रियवचनं वल्लीवाऽनिललोलिता साऽवदत् । लंकेश ! मां विमुंच २ । धर्मेण तवाऽहं स्नुषाऽस्मि । महाप्रभवो मर्यादां नाऽतिक्रामति । तव भ्राता यो वैश्रवणोऽस्ति । तस्य महानुभावस्य गुणनिधिः पुत्रो नलकूबर एव मम प्राणपतिर्विद्यते । सर्वमिदं संभोगार्हं प्रसाधनं तत्कृते वर्तते । उक्तं च । सौभाग्यलुब्धाः कामिन्यो मधुरेष्वेव दत्त दरा भवंति । कुलीना विद्वांसः शूरास्तपस्विनश्च सर्वदैव शीलं रक्षंति । तच्छ्रुत्वा सोऽब्रवीत् । मदिरेक्षणे ! नाऽहं त्वां त्यक्तुं शक्नोमि । यतः प्रबलोऽयं मन्मथः कुलजां लज्जां नहि सहते । सोऽथ भयमीलितलोचनां परिष्वज्य मातंगो नलिनीमिव तां चकर्ष । एवं तेन दूषिता मनस्विनी सा रंभा कुवेरनगरस्थं नलकूबरं समेत्य पादयोर्निपत्य च तस्मै स्ववृत्तान्तं निवेदयामास । तच्छ्रुत्वा कोपाकुलो धनदात्मजः पाणिना सलिलमादाय समुपस्पृश्य प्राह चाऽद्यप्रभृति स पापो यदा कामादकामां योषितं धर्षयिष्यति तदा तस्य शिरः सप्तधा यास्यतीत्युक्त्वा तच्छापोदकं विससर्ज । ततो दशग्रीवस्तं जीवितापहं शापं श्रुत्वा मुक्तहालाहलो नाग इव विनिःश्वसन् तस्थौ । अथ ससैन्यो दशाननस्त्रिदिवं समासाद्य गीर्वाणगणैः सह योद्धुमारभत । एवं स्वलोकं रावणसैन्येन समन्तादवरुद्धं ज्ञात्वा शतक्रतुर्देवान् पुरस्कृत्य विष्णुंशरणं जगाम । अथ शरणागतवत्सलो भगवान् विष्णुस्तमुवाच । देवराज ! वधार्होऽपि दशकन्धरोऽकाले नहि वध्यः । संप्रति त्वं युक्त्या युध्यस्व । सत्यवसरे तमहं हंतास्मि ।

एवं विष्णुनाऽभिहितो मघवा सर्वैरेव मरुद्गणैः सह गत्वा पौलस्त्येन युयुधे । ततस्तस्मिन् दुःसहे समरेऽष्टमो वसुः सुमालिना साकमयुध्यत । अथ सुमालिशरैः पूरितगात्रोऽपि वसुः पूर्वं स्वविशिखैस्तस्य रथमुन्मथ्य ततस्तन्मूर्ध्नि गदां चिक्षेप । अथ तयाऽभिहतः सुमाली मूर्छामवाप्य छिन्नमूलस्तरुरिव निपपात । ततः समरे मेघनादो वज्रिणः सुतं जयन्तं जित्वाऽत्यन्तं हर्षं समवाप । अथ शक्रपौलस्त्ययोस्तुमुलं युद्धं बभूव । यत्र देवा असुराश्च समागत्य परमविस्मयमवापुः । तस्मिन्नवसरे कुंभकर्णो शैलशाखावृष्टिभिर्देवानां कदनं चकार । एतदालोक्य देवराजोऽपि विबुधैः सह भास्करोऽन्धकारमिव रक्षः क्षयमकार्षीत् । ततः क्रुद्धो दशाननः शरवर्षैर्वज्रपाणिमाच्छादितं चकार । ज्ञात्वैतन्महेन्द्रः स्वभावेन शरवृष्टिं निर्भिद्य प्रभाकर इव विरेजे । ततश्चक्रेण पौलस्त्यो ग्रस्त इति नादे समुत्थिते घनघोषेण रथेन स्वयं मेघनादस्तत्र समाययौ । ततः स मायातिरोहितो भूत्वा सायकैरैरावतस्थं शक्रं समाच्छाद्य विबुधानीकमध्ये बबंध । एवं विद्रावितामरो मेघनादस्तं समादाय पित्रा सह लंकां निववृते । एतदालोक्य विश्वसृजा सह सर्वे देवा लंकां ययुः । ततः प्रजापतिगिरा यदा मेघनादः शक्रं मुमोच । तदा प्रभृत्येव स रावणात्मज इन्द्रजिन्नाम्ना विश्रुतो बभूव । सोऽथ यदा पितामहादमरत्वं ययाचे तदा ब्रह्मोवाच । वत्स ! समरे यद्यसमाप्तयज्ञो योत्स्यसे तदा तु तव विनाशोऽन्यथाऽमरत्वमिति वरं प्रादात् । ततोऽतिलज्जितो देवराजो ब्रह्मणोऽग्रे चिरं मूकवत्तस्थौ । एतदालोक्य पद्मयोनिः प्रोवाच । शचीपते ! वृथा चिन्तां मा कृथाः । त्वया स्वदुर्णयेनैवैतद् विपरीतफलं प्राप्तम् । पुरा मया तुल्यवर्णवयोरूपाः प्रजाः सृष्टाः । ततस्तासां विशेषायैव ललना निर्मिता । अथ भूतानामंगेभ्य उत्तमंरूपमुच्चित्योच्चित्य मया शशिमुखी कान्ताऽहल्या नाम कृता । सा सुन्दरी लोकस्य तु स्पृहास्पदमासीत् । किन्तु त्वमपि तस्यामनुरागवानभूः । ततो मया स्वयं सा गौतममुनिहस्ते न्यासीकृता । अथैकदा सा मनस्विनी तमेव मुनिं पतिं वव्रे । एतदालोक्य निराशा दिवौकसः स्वलोकं ययुः । ततस्त्वयाऽधर्मेण धर्षितायां तस्यां कोपानलाकुलो मुनिस्त्वां तु शापान्निष्फलमहल्यां च शिलारूपां चक्रे । संसारेऽस्मिन् क्षणिकस्य सुखस्य कृते कामबाणवशीकृता जना नरकेष्वक्षयाः पीडा भुंजते । परस्त्रीसंगेनाऽत्र दुःखमवाप्य परलोकेऽपि सुखं न विन्दति व्यभिचारी । शक्र ! त्वं वैष्णवं क्रतुं समाराध्य धूतपापो भव । रावणोऽप्ययं न चिरं राज्यं करिष्यतीत्यभिधाय विरंचिः स्वलोकं जगाम । अथैकदा रावणः सचिवैः सह व्रजन् पश्चिमसमुद्रस्य विमलं द्वीपमवाप । तत्र तेजसा भास्करोपमं पुरुषं दृष्ट्वा

यद्यपि युद्धेच्छया रावणस्तस्मै दीप्तशस्त्रपरंपरां प्राहिणोत् । तथापि दीप्तविग्रहः स न चकंपे । ततस्तेन हेलयैव मुष्टिना पीडितो दशाननः कृत्तपक्षः शैल इव क्षितौ निपपात । एवं तस्मिन् मूर्छिते पतिते भगवान् कापिलदेवः क्षणाद् विद्युत्पुंजोऽम्बुधिमिव पातालतलं प्रविवेश । ततो लब्धसंज्ञो रावणः सचिवेभ्यः पाताललोकं प्रविष्टं तन्निशम्य स्वयमपि तत्र जगाम । सोऽथ तत्र संख्यातीतान् कापिलातमजानवलोक्य क्षिप्रमेव जातरोमांचकंचुको बभूव । अथ स शेषनिर्मोककान्तिस्वच्छोत्तरच्छदे दिव्यशयने शयानं पुरुषोत्तमं तस्याग्रे च ललिताकारां लक्ष्मीन्ददर्श । ततः स पीयूषकिरणाननां तामादातुकामः सर्पकुटिलां गतिं समाश्रित्य ससर्प । एवं ज्ञात्वा विष्णुः स्वमुखादंशुकं समुत्सार्य नयने समुन्मील्य तं विलोक्य चोच्चैर्जहास । किम्बहुना । तस्य प्रज्वलिततेजसा छिन्नमूलद्रुम इव मोहमूर्छितमानसो राक्षसपतिर्निपपात । एतदालोक्य देवः किंचिदागतजीवितं तमुवाच । राक्षस ! क्षिप्रमुत्तिष्ठ । त्वं प्रजापतिवराद्रक्ष्योऽसि । लोके सदाचारपरिभ्रष्टा न कदापि सुखं लभन्ते । एतदाकर्ण्य शनकैर्लब्धचेतनो दशाननः कृतांजलिस्तमुवाच । भगवन् ! यदि मे मृत्युर्वेधसा त्वत्करे धृतस्तदात्वहं विश्वेऽस्मिन् धन्योऽस्मि । सोऽथ तस्य विश्वात्मनस्तनौ ससुरासुरगन्धर्वं सचराचरं च त्रैलोक्यं लीनं दृष्ट्वाऽतिविस्मितो बभूव । ततो दशग्रीवस्तान् सचिवान् संप्राप्य तदाश्चर्यं विचिन्तयन् स्वनगरीं न्यवर्तत । एवं दशाननवृत्तान्तमाकर्ण्य रामो मुनिवरं समुद्रलंघनोपायमपृच्छत् । तच्छ्रुत्वा महर्षिरुवाच । दाशरथे ! देवाधिदेवं महादेवं संपूज्य समुद्रं शरणं गच्छेत्यभिधाय महात्मनि मुनिराजे गते सर्वे मुनीन्द्रं प्रशशंसुः । अथ रामः सागरं शरणमयात् । यतोऽयं रामपितामहेन सगरेणैव निर्मितोऽस्ति । ततो निराहारो राघवो महादेवं ध्यात्वा समुद्रतीरे कुशानास्तीर्य च जलनिधिदर्शनाय तिस्रः क्षपास्तपश्चक्रे । एवं त्रिरात्रोपोषिते रामे निर्विकारे च जलनिधौ हरिवाहिनी चिन्ताकुलिता बभूव । ततः कोपसंरक्तलोचनो रामो विशिखेषु दृष्टिं निक्षिप्य सौमित्रिमुवाच । वत्स ! दृप्तस्यास्य जलराशेरसाधुतां तु पश्य । यो नीच इव न नयेन न च प्रीत्या संतुष्यति । खलः प्रणयेनोग्रतामेति सेवया च काठिन्यं याति । जगत्येवंविधः कश्चिदप्युपायो नास्ति । येन दुर्जनो गृह्यते । नूनमस्थाने प्रयुक्ताः प्रणयप्रशमक्षमा अगुणतामेव प्रयांति । ऐश्वर्यं. विजयः कीर्तिश्च साम्नैव न लभ्यते । किन्तु तीक्ष्णानुवर्ती लोकोऽयं पुरुषार्थेनैव भुज्यते । गुणसंसक्तसाधुसारंगवागुरा क्व ? दुष्टाश्वोग्रकशाहतिः क्रूरता च क्व ? भ्रातः ! महाघोरं शरासनं चापं च समानय । यदेत्वं जलनिधिं विपर्यस्तमर्यादं करोमि । शरैर्निकृत-

निःशेषसत्त्वरक्षाकुलोऽयमम्बुधिः सरिद्वधूमध्ये जुगुप्सायतनं वपुर्धत्तामित्युक्त्वा सशरासनं धनुरादाय च राघवो गंभीरक्षोभसंरंभभ्रान्तं सागरं विदधे। एवं समुद्रे परिवृत्ते शरत्रस्ताः शिखरिसन्निभाः ससर्पमकराः पातालतलवासिनो दैत्याश्च सहसा समुत्तस्थुः। ततो मन्युदुःखाकुलो वारिधिः कल्लोलांजलिभिः कौसल्यानंदनयांचामिव चक्रे। अथ सोऽथ मूर्तिमान्महोदधिः सहसा वीचिचक्रं विधूय स्रग्वीरुचिरकुंडलश्च समुत्तस्थौ। सोऽथ कृतांजलिर्दाशरथिं प्रणिपत्य प्रोवाच। काकुत्स्थ! मिथ्यैव विक्रियां कर्तुन्नार्हसि। यतः शाश्वते वर्त्मनि स्थितोऽहं भयकामसंरंभगोरवेभ्योऽपि मर्यादां त्यक्त्युन्नोत्सहे। दाशरथे! सगरान्वयमानभृदहं तेऽभीष्टं करोमि। यतः सागरे स्थलदर्शनं सर्वथैवाद्भुतम्। मया सलिले स्तंभिते द्रुमैः शैलैश्च बद्धं सेतुं सुखेन वानरास्तरंतु। मत्कृतं भयमेषां मा भवतु। प्रभो! ममोत्तरे प्रदेशे कृमिकूलाख्यः पुण्यपवित्रो भूभागोऽस्ति। स चाद्यश्वः पापकर्मभिर्दस्युभिरावृतो वर्तते। देव! मदर्थमुद्यतोऽयं वाणस्तेषु प्रक्षिप्यतामिति जलनिधिगिरा रामस्तं प्रज्वलितं शरं तत्र चिक्षेप। स देशस्तेन निर्दग्धो भूत्वा मरुकान्तारसंज्ञामवाप। श्रीरघुपतिवरप्रभावात्स एव देशो निर्व्यालिः क्षीरौषधिफलाकुलश्च बभूव। ततो जलनिधिः प्रीत्या काकुत्स्थमवदत्। वत्स! तव पिता राजा दशरथो मम दयितः सुहृदासीत्। पुरा देवासुरे युद्धे सचाऽहं चैकीभावमिवापन्नौ देववृन्दसाहाय्यार्थं गतवन्तौ। ततः सफलमनोरथः स देवराजसकाशाद्वरमवाप। रघुकुलचूडामणेर्यस्य त्वज्जन्म प्रथमं फलं वर्तते। अथाहं साकेते तस्य शुभऽसद्मानि प्रीतिसर्वस्वैरुपचारैर्मासं सुखमध्युषितः। सोऽहं तव पितृमित्रं तत् स्नेहे निष्प्रातिक्रियः सन् पापशतैः स्पृष्टं कृतघ्नमात्मानं च मन्ये। किम्बहुना। अद्याऽहं तत्पुत्रोपकृत्याऽनृण्यमवाप्य चिरवांछितां प्रीतिसुखोच्छ्वासविश्रान्तिं भजे। एष विश्वकर्मसुतो नलो मम स्तंभिते गंभीरे च पयसि सेतुं बध्नातु। एवं वारिनिधिनाऽनुशासितो नलः श्रीरघुपतिं प्रणिपत्य प्लवंगमगणैः सह सेतुकर्मण्युद्ययौ। अथ प्रहृष्टाः कपयः क्षुभितेंभसि सालतालपाषाणानुन्मूल्योन्मूल्य चिक्षिपुः। एवं वानरर्षभैः सलिले पात्यमानानां गिरीणां प्रलयावर्तसूचकः क्षोभविभ्रमोऽभवत्। ततस्तस्मिन्नद्भुते सेतुकर्मणि समारब्धे ससिद्धगन्धर्वादेवा व्योम्ना द्रष्टुं समाययुः। अहोवताऽमितौजसो राघवस्याऽयं महाप्रभावो वर्णनातीतः! केन कदा नाम महाब्धौ सेतुबन्धनं दृष्टम्? अयं दिगन्तरव्यापी जलधिपारगः सेतुर्दाशरथियशसा सह कल्पान्तस्थायी भविष्यति। अहो! प्रतापनिधिनाऽनेन रामेण नदीनाथोऽपि स्थिरीकृतः। एष मज्जत्ययं मग्नः स्थितश्चासौ न विकम्पते। एवं सेतुबन्धे गगने देवानां

निःस्वनो बभूव । अथ प्लवंगमैश्चतुर्दशसु योजनेषु बद्धेषु महाश्चर्यदर्शनात् तृप्त इव प्रभाकरोऽस्तमगमत् । सा लंका कदा दृश्यते ? कदाचाऽयं सेतुः संपूर्यते ? इति सोत्कण्ठानां कपीनां सा निशा कृच्छ्रेण व्यतीता । एवं विश्वकर्मसुतो नलो वानराहृतैः षड्भिर्दिनैर्निश्चलं सेतुं बबंध । मलयाचलात्प्रवृत्तं लंकामूलपर्यन्तं दशयोजनविस्तीर्णं शतयोजनमायतं च निबद्धं सेतुं समवलोक्य हर्षनिर्भरः सुग्रीवः सेतुकार्यं समाप्तमिति शुभसमाचारं वीररावचाय निवेदयामास । ततः सुग्रीवसहितो रामो मारुतिलक्ष्मणविभीषणप्रभृतीन् पुरस्कृत्य स्वयं तत्र जगाम । सोऽथ नलनिबद्धं सेतुमवलोक्य परमानंदमवाप । ततस्तरस्विनां वानराणां संख्यातीतानि सैन्यानि तेनैव सेतुना ययुः । एवं तस्मिन्नसूचीविवरे प्लवंगार्णवे व्रजति केचिन्नभसाऽपि जग्मुः । एवं रघुनंदने समुद्रस्य परं पारे संप्राप्ते त्रिदिवौकसां प्रमोदः परां कोटिमारुरोह । ततः संतुष्टो जलनिधिः स्वयं रामं समभ्येत्य प्रीत्याऽवदत् । रघुराज ! जयारंभे मुनिवेशोऽयं तव नोचितम् । नृपास्तु भूपार्हैर्भूषणैर्युद्धमर्हन्ति । साम्प्रतं जटाबन्धमपास्य वल्कलं च परित्यज्य हेमकवचं दिव्यान्याभरणानि च गृहाणेत्युक्त्वा पूर्वं रघुपतिकरे बद्ध्वा ततो लक्ष्मणहस्तेऽपि बबंध । अथामुक्तकवचौ दीप्तांगदकुण्डलौ च तौ रामलक्ष्मणौ नूनं रत्नशैलाविव विरेजतुः । ततो जगन्निवासस्य श्रीविष्णोस्तुल्यस्वरूपोऽपि वीरराघवो जलान्तरं प्रविश्य वरुणं प्रणनाम । सोऽथ तेनाशीर्भिर्विवर्धितस्तं समामंत्र्य च बहिराजगाम । ततो हनुमत्प्रभृतिभिः कपिचमूपातिभिः सह रामलक्ष्मणौ सागरपारं ययतुः । एवं लंकाशैलनिविष्टेषु परेषु पृथुपौरुषा अमात्याः सभास्थितं दशग्रीवमुपतस्थुः । ततो महार्णवे बद्धं सेतुं विज्ञाय विस्मयाविष्टान् दशाननस्तानुवाच । अहोनु सुखसंसक्तैरचलितैश्च भवद्भिर्वर्धमानः शत्रुरप्युपेक्षितः ? महांभोधौ सेतुं बद्ध्वा शत्रवः सहसा पारं प्राप्ताः । तथाऽप्यनुप्तचार्यैर्युष्माभिर्दोषोऽयं न विचिन्तितः । यथा सद्वैद्या पूर्वमेव चिकित्सया दोषान् शमयंति । तथोत्तमसाचिवा अपि प्रागेव मन्त्रणया विविधोपद्रवान्नाशयंति । यदि व्यसनोपहता यूयं कार्यपराङ्मुखा जातास्तदाऽहमेक एव मन्त्रविक्रमयोर्मध्ये समास्थितोऽस्मि । एवं राक्षसेन्द्रेणोक्ते मंत्रिमण्डले च लज्जिते विजयोर्जितो मेघनादोऽब्रवीत् । तात ! सचिवान्वृथा मोपालभस्व । जगत्यस्मिन् भवद्भुजानां प्रतिमल्लतां को नाम बिभर्ति ? देव ! विवासितसुरेन्द्रस्य तव मानुषे चिन्ता का ? वनचारिणो भीरवश्च वानराः कस्य भयदाः ? निशम्यैतदिन्द्रजिद्वचनं प्रहस्तप्रमुखा मंत्रिणः पुनः पुनर्मेघनादकथनं समर्थयामासुः । तच्छ्रुत्वाऽतिकायो नाम प्राज्ञो राक्षसः प्रोवाच । राजन् ! यः शत्रुमवज्ञाय स्वात्मानं न रक्षति । सोऽनर्थानवाप्य स्वस्थानाच्च्यवते ।

यत् प्रजापालनं दस्युप्रसार्जनंचैतदेव राज्ञां परमकर्तव्यमस्ति । शेषं तु पिष्टपेषणं मन्ये । येषां बुद्धिः परधनहरणे परदारसंभोगे च न प्रवर्तते । तेषामेव पवित्रयशसां सर्वसम्पदः कलत्रम् । रामो जात्या नः शत्रुर्नास्ति । अस्य सीतोपहारकोपस्तत्प्रदानेन स्वयमेव प्रशममुपयास्यति । त्रैलोक्यविजेतॄणां सत्कुलजातानां भवादृशां परदारापहरणं कथं युक्तम् ? किम्बहुना । रामाय सीता त्यज्यताम् । म्लानं यशः समुत्सृज्यताम् । अकालपातिनः कालस्य तूर्णं वंचनाक्रियतामित्यतिकायेनोक्ते तमनादृत्य दर्पान्धो रावणः शुकसारणौ प्रोवाच । प्रच्छन्नाभ्यां भवद्भ्यामितो गत्वा हरिवाहिनी दृश्यताम् । यतस्तत् संख्याने युवयोरेव प्रधानताऽस्ति । एवं भर्त्रा समादिष्टौ तौ वानराकृतिं कृत्वा यत्र राघव आस्ते तत्र लघुसंचारौ जग्मतुः । ततस्तौ गूढचारिणावपारे वानरांभोधौ यत्नेनाऽपि नाग्रं न मध्यं न चान्तं प्रापतुः । किम्बहुना । शिखरिशृंगस्थौ तौ सर्वं जगत्कपिमयं दृष्ट्वा निःस्पन्दौ वभूवतुः । अथ नीतिनिपुणो विभीषणश् छन्नं चरन्तौ शुकसारणौ परिज्ञाय तयोश्चेष्टां राघवाय निवेदयामास । ततो विभीषणगिरा प्लवंगमैर्गृहीतौ तौ रामाग्रे न्यस्तावपि क्षणं न किंचित्प्रोचतुः । एतदालोक्य रामः सस्मितमुवाद । भयं परित्यज्य स्वस्थचित्तेन सैन्यं पश्यतम् । भद्रपुरुषौ ! रामोऽहमस्मि । एष सौमित्रिः । अयं विभीषणः । एतच्च सुग्रीवाधिष्ठितं वानरबलम् । एषाऽपर्याप्ता वानरचमूः पौलस्त्याय विनिवेद्यताम् । श्वः प्रभाते सेयमक्षया सेना रक्षोवधाय निपतिष्यति । एवं तेन प्रभुणा दत्ताभयौ तौ क्षणदाचरौ प्रणिपत्य रामं वक्तुमारभताम् । श्रीरामचन्द्र ! यद्यप्यस्माभिः सुबहवो देवासुरबलार्णवा दृष्टास्तथाप्येताः प्लवगवाहिन्यो नः परमकौतुकाय विद्यन्ते । राजर्षे ! तवाऽयं कोऽप्यपूर्वः प्रभावोऽस्ति । येन भ्रूभंगमात्रेण महोदधिजलं स्थलीकृतम् ? किम्बहुना । यस्यां प्लवगः पवनः सेयं पौलस्त्यपालिता लंका कपिभिराक्रान्ता । किमतःपरं कौतुकम् ? महाराज ! अद्भुतनिधेर्विधेस्त्रैलोक्याश्चर्यकारिणी शक्तिर्दृष्टेत्युक्त्वा रामाज्ञया भयसंकटाद्विमुक्तौ तौ परावर्तेताम् । ततस्तौ दशग्रीवं समेत्य प्रणतिपुरस्सरं च तस्मै सर्वं वृत्तान्तं विनिवेद्य विश्रान्तिमवापतुः । ततो रावणो रामौदार्यं लक्ष्मणगांभीर्यं सुग्रीवप्रभावं विभीषणकृत्यं वानरसैन्यं च स्मारं स्मारं चकितो वभूव । अथ सेनां द्रष्टुं प्रयत्नवन्तं सौधारूढं च रावणं शुकसारणावभाषताम् । राजाधिराज ! योऽयं वानरसेनानामग्रे स्थितः । सोऽयं विश्वकर्मसुतो नलनामको वानरपुंगवो विज्ञानविशारदोऽस्ति । किम्बहुना । यस्य नादेन जगत्प्रकम्पते । अयं मेरुरिवापरः पद्मकिंजल्कगौरोऽगदः । यस्याऽसंख्या वानरा वशवर्तिनो वर्तन्ते । एष पृथुविक्रमो विरंचिपुत्रो जाम्बवान् । यो बुद्धौ गुरुशुक्रयोरपि समा-

नतां न सहते । एष वरुणपुत्रो मदोत्कटो हेमकूटः । यस्य सैन्यानां संख्या पयसामिव न विद्यते । अयं धर्मसुतः सुषेणः । असौ सोमपुत्रो दधिमुखः । एषोऽनलसुतो नीलः । एते पंचगजगवयगवाक्षशरभगंधमादनाः पितृतुल्यपराक्रमा यमपुत्राः संति । एष कुमुदः, अयं वेगवान् विनतः, रंभः, क्रथनः, पनसः, हरः, अयं सूर्यसुतः श्रीमान्वानरेश्वरः सुग्रीवः । यस्येयं दृष्टिदोलाविलासिनी महती सेना वर्तते । एषोऽक्षहंता हनूमान् । यो भवानीपतिवरोर्जितं भवन्तमपि प्रौढलंकाग्नितापितं चक्रे । एतावश्विनीकुमारसुतौ मैंदद्विविदौ । याभ्यां दिवि ब्रह्मवरादाकण्ठममृतं पीतम् । एष सत्त्वोदधिः कमलनयनः श्रीमान्रामचन्द्रः । यो लंकामालोकयन्नास्ते । योऽस्य पार्श्वे स्थितः स शौर्यसागरो रामानुजो लक्ष्मणोऽस्ति । एष त्वदनुजो रामपादाब्जचंचरीको विभीषणः । यो मनोवाक्कायकर्मभिः सदा रामचन्द्रहितमेव समभिलषति । प्रभो ! प्रसीद । भृत्येष्वनुग्रहं कृत्वा रामेण सार्द्धं सन्धिङ्कुरु । सत्वरं मैथिलीं समर्प्य श्रीमद्दाशरथये विरोधतरोर्मूलं निकृन्त । निशम्यैतच्चारवचनं क्रोधमूर्छितो रावणस्तौ निर्भर्त्स्य चारानन्यान्विससर्ज । सोऽथ महात्रस्ते वन्ध्यपरिश्रमे च चारचक्रे प्राप्ते वानरानीकनायकैर्लंकाद्वारेषु निरुद्धेषु विद्युज्जिह्वाख्यं सचिवं समानाय्य तेन साकं सुचिरं संमन्त्र्य च तूर्णं सीतान्तिकं जगाम । ततः स वेपमानां तां समवाप्य व्याघ्रचकितेक्षणां मृगीमिव बालां प्रोवाच । सीते ! त्वया यस्योपरि साधुपरिश्रमः कृतः स स्वयं प्लवशीलः पंगुरिव महाश्वभ्रे निपतितः । स सुग्रीवश्छिन्नग्रीवः, सोऽगदश्चूर्णितांगदः, स च हनूमान् विनिष्पिष्टहनुर्निहतः । वैदेहि ! स्वयं विच्छिन्नालम्बनां रामगतां प्रीतिं त्यक्त्वा मम भवने यथेप्सितं भोगविभवं भजस्वेत्यभिधाय सुसंज्ञया महाकायं विद्युज्जिह्वं समानिनाय । सोऽथ भर्तुराज्ञया प्रणतः प्रविश्य तत्र रामशिरस्तुल्यं रुचिरं कृत्रिमं शिरश्चिक्षेप । एतदालोक्य जानकी कृतोपकारेव मोहेन क्षणं निश्चलाऽतिष्ठत् । ततोऽत्याकुललोचनः स समुद्भ्रान्तः प्रविश्य स्वामिकृत्ये सहायकोऽभवत् । अथ पौलस्त्ये प्रयाते सीता संज्ञामवाप्य साश्रुनयना प्राणत्यागार्थमुद्यता बभूव । आर्यपुत्र ! त्वया संकल्पानल्पपल्लवा ममेयमाशालता फलकाले कथं निर्लूना ? प्राणनाथ ! गन्तुमभ्यर्थितस्य जीवितस्याऽयमंजलिः । येन व्यवहितं पतिमुखाम्बुजं न पश्यामि । प्रभो ! सागरं समुत्तीर्य राक्षसपालितां लंकां समासाद्याऽपि मम भाग्यविपर्ययात् त्वयेप्सितं न प्राप्तम् ? अहं मेरुशिखरमारुह्य तव दर्शनं विना ततोऽधोमुखी निपतिताऽस्मि । देव ! इयतीं भूमिं समभ्येत्य सुदुष्करं कर्म च कृत्वा मुखांभोजं मेऽसंदर्श्य कथं नाम गतोऽसि । प्रियतम ! क्षणं प्रतीक्षस्व । भवद्विधा महानुभावा निर्दोषां भार्यां परित्यज्य नहि गच्छंति ।

एवं प्रलापिनीं शोकसागरमग्नां च जानकीं प्रीतिवत्सला सरमा नाम राक्षसी प्रोवाच । अयि मुग्ध ! किं त्वं दशग्रीववक्रतां न जानासि ? यो विविधैर्मायाविलसितैस्तेऽनिष्टं विदधाति । सीते ! भर्तृप्रभावज्ञाऽपि कथं मिथ्या मूर्छिता भवसि । अथवा किमहं शोचामि ? स्त्रीणामत्यन्तभीरुता स्वभावसुलभाऽस्ति । जानकि ! सशरासनं रामं को नाम हन्तुं प्रगल्भते ? यस्य प्रभावं सेतुसीमन्तितोंबुधिः प्रकटयति । किम्बहुना समाश्वसिहि समाश्वसिहि । रामस्य परतो भयन्नास्ति । नूनमेतच्छिरो मायाविना विद्युज्जिह्वेन निर्मितमस्ति । वैदेहि ! एष रामबलांभोधिनिर्घोषः श्रूयते । यो भुवनव्यापी भूत्वा सर्वरक्षसान्धृतिं पिनष्टि । एष दशाननः स्वजनैर्जनन्या च संप्रार्थितोऽपि प्रत्यासन्नपरिक्षयो वक्रतां परित्यज्य सरलतां न प्राप्नोति । दुरात्मनां या गतिः कुरंगशृंगकुटिलास्ति । सा दैवस्येव केन सरलीक्रियते ? जगति वृद्धया कलुषितस्य नीचमार्गानुसारिणः खलस्य सलिलस्य च कौटिल्यं केन वार्यते ? व्यालदुष्टश्वपुच्छोष्ट्रगलानां सारल्यं मणिमंत्रौषधैश्चापि न जातु जायते । विश्वकण्टकोऽयं पौलस्त्यः सर्वथैव विनष्टः । धर्मारामस्य रामस्य जयो हस्तगत एवेति सत्यमवगच्छ । एवं सरमावाक्यामृतवृष्टिभिः सिक्तेव जानकी सहसा भयं शोकं च परित्यज्य लब्धजीविता बभूव । अथ सज्जीकृतबलं सिंहासनस्थं दशाननं समभ्येत्य वृद्धामात्यो माल्यवानुवाच । राजन् ! साधुवृत्तानां विधेयो न कदापि वाच्यतां याति । यस्य संधिविग्रहौ देशकालोचितौ तस्य संपदः सततं पार्श्वस्था एव । न्यूनबलः सन्धिमिच्छेत् । ज्यायान् विग्रहं कुर्वीत । समःसमं पराक्रमेण जयेत् । बलशालिना रामेण सह युद्धं मह्यं न रोचते । अतः सीतासमर्पणमात्रेण तेन साकं तव सन्धिः सर्वथोपयुक्तः । जयस्यायतनं धर्मः क्षयस्य च वर्त्म पापं विद्यते । विषयेऽस्मिन् विजयैषिणो देवा धर्ममवलंब्य रामपक्षे स्थिताः । प्रत्यहं नो गृहेष्वधर्मप्रभवाण्येव दुर्निमित्तानि सीताहेतोरवलोक्यंते । येषां परिणामः क्षय एवास्ति । कृष्णा स्त्री रक्तवस्त्राणि परिदधाना पाण्डुरैर्दन्तैर्हसन्ती रथ्यासु यत् संचरति । तत् क्षयस्यैव लक्षणमस्ति । प्रेता बलिं भुंजते । खरा गोषु जायंते नकुलेष्वाखव उत्पद्यन्ते । सर्वमेतद्विनाशलक्षणमेव । रामं दैत्यकुलच्छिदो विष्णोरवतारं गणय । राक्षसांश्च पापपक्वान् विजानीहि । निशम्यैवं माल्यवद्वचनं क्रोधानलाकुलो रावणो मंत्रिमण्डलमध्ये प्रोवाच । अलमनेन हितोपदेशेन । स्वर्गविध्वंससाक्षिणोऽपि ते कुतो भयमागतम् ? अथवा किमुत्तरेण । वृद्धास्तु प्रायो भवंति लुप्तसत्त्वाः । वलिभिर्हीनोऽपि शत्रुर्नावमन्तव्य इति विचिन्त्योपेक्षा कृता । अन्यथा सरगात्तापसाद्भयसंभावना क्वेति साक्षेपं ब्रुवाणे राक्षसेश्वरे माल्यवान् मौनी बभूव ।

सचिवा अप्यन्ये समयं विलोक्य चित्रार्पिता इव निश्चलास्तस्थुः। एवं लज्जिते माल्यवति स्वसदनं याते रावणः संमन्त्र्य क्षिप्रं दुर्गरक्षाविधिं चकार। सोऽथ पूर्वद्वाराभिगुप्तये प्रहस्तं समादिदेश। दक्षिणद्वारे महापार्श्वमहोदरौ स्थापयामास। पश्चिमद्वारे मेघनादं प्रतिष्ठाप्य शुकसारणौचोत्तरद्वाररक्षार्थं नियोजयामास। अत्रान्तरे विभीषणगिरा परैः कृतां लंकागुप्तिं ज्ञात्वा स्वयं रामोऽपि द्वारसंरोधविधानं विदधे। ततो रामाज्ञया पूर्वद्वार-रक्षाभारं नीलो जग्राह। वालिनंदनो दक्षिणद्वाररक्षको बभूव। पवनात्मजः पश्चिमं द्वारं ररक्ष। स्वयं सलक्ष्मणो रामश्चोत्तरं द्वारं परिपीड्य स्थित्वा मध्यमानीके च ससुग्रीवं विभीषणं प्रतिष्ठापयामास। ततः कपिसैन्यानां प्रलयांभोधरध्वनिरुदतिष्ठत्। तं रक्षः क्षयलक्षणं शब्दं श्रुत्वा विध्वंसातंकशांकिता साध्वीव लंका चकंपे। ततो विभीषणानु-मत्या रामोऽगदं समाहूय प्रोवाच। युवराज! त्वं मद्वाक्याद् दृप्तं दशाननं गत्वा ब्रूहि। राजन्! तव प्रीतिर्धनभोगमित्रबन्धुषु नास्तीति सत्यम्। किन्तु प्राणेष्वपि पक्षपातो न विद्यते। यत् त्वं सर्वमेव त्यक्तुमुद्यतोऽसि। त्वया हेममृगव्याजाद् वने यद्वं-चिताः। तत्तव कौशलं तु तत्रैवासीत्। किन्त्वधुना वाहुतोरणेऽस्मिन् रणे तव रूपो न गलिष्यति। नेयं भिक्षुरूपस्य ते शून्या तपोभूमिः। किंत्विमास्तु कार्मुकक्रूरहुंकारमुखरा रण-भूमयः संति। संप्रति व्याजहृतां जनकात्मजां समर्प्य प्राणरक्षां कुरु। पाप! ते बंध-वधमोक्षा मे भुजेवाक्ये च स्थिताः संति। किम्बहुना। यदि जीविते खिन्नोऽसि तदात्वग्नि-पतनं क्रियतामिति रामशासनं शिरसा समादाय वालिसूनुर्यत्र ससचिवो रावणोऽतिष्ठत्तत्र ययौ। सोऽथ शिष्टाचारपूर्वकं प्रोवाच। राक्षसराज! इदमनल्पमैश्वर्यं यत्कण्ठच्छेद-पणेन समुपार्जितं तत् सर्वस्वमुन्मत्त इव कथं त्यजासि? यदि त्वमेक एव जीवितं न वांछसि। तर्हि स्वात्मानं समुद्रे प्रक्षिप्य प्राणांस्त्यज। किं त्वेभिर्वराकैः पुत्रपौत्रैश्च किम-पकृतं येषान्त्वं निधनमभिलषसि? ते मृत्युनखराः खरप्राणापहारिणो रामशरा दूरे न सन्तीति श्रुत्वैव दशाननः क्रोधाग्निज्वालाविभ्रमभंगुरैर्भ्रूभंगैः कपिवधमभ्यधात्। ततो राक्षसैः सहसा गृहीतोऽप्यंगदः स्वभुजबलात् तान् पृथ्वीतले निपात्य चरणाग्रेण च राजप्रासादमपि बभंज। अथ कृतकृत्यो युवराजः प्रतिनिवृत्य स्वकटकं रामाय सर्वं वृत्तान्तमावेदयामास। ततः प्राकारशिखरमारुढो रावणः प्लवंगमैर्निरुद्धां लंकां विलोक्य सपदि योद्धुं निशाचरानादिदेश। अथ राक्षसेषु संग्रामार्थं वहिर्निर्गतेषु व्रजद्गजघण्टा-टंकारवधिरा दिशो भीत्यैवादर्शनं ययुः। अत्रान्तरे तरस्विनां वानराणां कोटीशतसह-स्राणि प्राकाराट्टालशृंगाणि समारुहन्तः श्रीरामप्रतापं पुनः पुनर्नेदुः।

जयत्यातिवलो रामो लक्ष्मणश्च महावलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

अत्रान्तरे सैन्येषु दशाननस्य क्षुभितांभोधिनिःस्वनः समरारंभदुंदुभिराहन्यत । ततः कपिराक्षससैन्ययोः प्रलयोद्धूतयोः सागरयोरिव संप्रहारार्हः समागमो बभूव । ततः समरे प्रवृत्ते राक्षसाः स्वपराक्रमं कथयंतो गदाशूलशक्तिपरश्वधैः सर्वान् वानरान्निजघ्नुः । एतदालोक्य महाकायाः कपयो नखैर्दन्तैः शिलाभिर्वृक्षैश्च तानि रक्षांसि प्रतिजघ्नुः । ततः प्राकारस्था राक्षसा महीतलस्थान् वानरान् भिंदिपालैर्विदारयामासुः । पृथ्वींगताः कपयश्च खमाप्लुत्य स्ववाहुभिः प्रकारस्थान् पातयामासुः । अथ तेषां वानराणां राक्षसानां च द्वन्द्वयुद्धं प्रावर्तत । तत्रांगदेन्द्रजितोस्त्र्यम्बकान्धकयोरिव युद्धमभूत् । प्रजंघेन संपातिरयुध्यत । हनूमान् जम्बुमालिना सह युयुधे । ततो विभीषणः शत्रुघ्नेन सुग्रीवः प्रघसेन जाम्बवान् खरपुत्रमकराक्षेण सुषेणो महोदरेण लक्ष्मणो विरूपाक्षेण शतबलिर्विद्युज्जिह्वेन रंभोऽतिकायेन विनतोऽतिकायसुतेन नलः प्रतपनेन नीलो निकुंभेन हनुमत्पिता केसरी धूम्राक्षेण ऋषभः सारजेन गवाक्षो देवान्तकेन गंधमादनो महापार्श्वेन वेगदर्शी च शुकेन युयुधे । अस्मिन्नेवावसरे सुमंत्राऽग्निकेतुयज्ञकोपा निशितैः शरैः काकुत्स्थमदृश्यं चक्रिरे । एतदालोक्य कोपाकुलो रघुवीरोऽर्धचन्द्रैस्तेषां शिरांसि सपदि चिच्छेद । ततो मैन्दद्विविदौ मुष्टिघातेन वज्रमुष्टिं जघ्नतुः । महाबली नीलोऽपि शैलेन शरवर्षिणं निकुंभं निहत्य जगर्ज । एवं युद्ध्यमानानां तेषां वानररक्षसां रविस्त्वस्तंगतः प्राणहारिणी रात्रिश्च प्रवृत्ता । ततोऽन्योऽन्यं जयमिच्छतां तेषां निशायुद्धं प्रावर्तत । अथ राक्षसोऽसीति कथयंतो हरयः कपिरसीति भाषमाणा निशाचरास्तस्मिन्दारुणे तमसि परस्परं जघ्नुः । ततो यत्र यत्र रघुनाथस्योद्यतं धनुश्चुकूज । तत्र तत्र राक्षसविहीना क्षितिरभवत् । तस्मिन्नवसरे वालिनन्दनेन हताश्वो हतसारथिश्च मेघनादो वीरैरनुचरैः सार्धं द्रुतं तिरोदधे । सोऽथ रक्ताम्बरो यागभूमिं प्रविश्य जीवतः कृष्णछागस्य कंठाच्छोणितं समादाय च युधि सिद्धये प्रज्वलितपावके विधिवज्जुहाव । ततः स देवदत्तं रथं समारुह्य घोराभिः शरवृष्टिभी रामलक्ष्मणावदृश्यौ चक्रे । एतदालोक्य रघुपतिः प्रच्छन्नं चरतस्तस्य घोरां वाणवृष्टिं स्ववाणैश्चिच्छेद । तत क्रुद्धो मेघनादो विपुलं धनुर्विस्फार्य महामृधे भूयो घोरान् वाणान् प्रचिक्षेप । एवं कामरूपिणा राक्षसेन मर्मताडितौ रामलक्ष्मणौ प्रस्रवणौ जलमिव तीव्रमसृक् सुस्रुवतुः । किम्बहुना । मार्गणैर्मर्मसु विद्धौ महावीरावपि रामलक्ष्मणौ निपतितौ । एतदालोक्य स विभीषणः सर्वेऽपि वानरा व्यथिता बभूवुः । ततो वरदा-

नादन्तर्हितो मेघनादः सर्वराक्षसान् हर्षयन् प्रोवाच । भो भो वीराः ! इमौ खरदूषण-हन्तारौ रामलक्ष्मणौ मामकैर्बाणैः सार्दितौ सर्पिसंघैः सुरासुरैरपि मोचयितुं न शक्यौ । सोऽथ नीलादीन् वानरपुंगवान् विविधैर्बाणैर्वक्षसि विध्वा लंकां विवेश । अत्रान्तरे विभीषणो भयत्रस्तं सुग्रीवं प्रोवाच । सखे ! त्रासेनालम् । प्रायेण युद्धान्येवंविधानि भवंति । सत्यधर्मरतानां मृत्युकृतं भयन्नास्ति । कपिराज ! वैक्लव्यमवलंबितुन्नायं कालः । वीराणां जन्म समरे वधाय विजयाय वा भवति । जगत्यस्मिन् सुभटा अल्पैरेवासु-भिरनल्पं यशो लभंते । रिपुपराभवे मोहसुलभं शोकं मा कृथाः । सखे ! मानधनानां प्रतिक्रिया भुजायत्ता हि । क्षणं प्रतीक्षस्व । राघवः सत्वरं मोहं त्यक्ष्यति । विपदि धैर्यमेव महापुरुषलक्षणम् । धीमतां सर्वाणि कार्याणि धैर्यायत्तानि । प्रतापनिधे ! मोहमेघनिमीलिते त्वयि हरिवाहिनीयमकर्णधारा नौरिव भज्यत इत्युक्त्वा स्वयमस्य नयने प्रममार्ज । एतस्मिन्नेवावसरे शक्रजिद्गिरा रामलक्ष्मणौ निहतौ ज्ञात्वा रावणस्तं परिष्वज्य च नगरोत्सवं विदधे । सोऽथ राक्षसीभिः सुरक्षितां सीतां पुष्पकं समारोप्य तस्यै शरतल्पगतं पतिं दर्शयामास । ततः सा तं दृष्ट्वैव सहसा मोहमवाप । साऽथ शनकैः संज्ञामास्वाद्याऽश्रुगद्गदं विललाप । अहोनु पुण्यहीनाया मम ललाटे विधात्रा पुनस्त्वत्समागमपीयूषप्राप्तिर्न लिखिता ? नाथ ! क्व ते तद्दाक्षिण्यं ? सा च स्वाभाविकी प्रीतिः क्व ? यन्मामसुरनिरुद्धामपि दृष्ट्वा न संभाषसे ? आर्यपुत्र ! प्रणयिनीं मां दृष्ट्वा प्रतिवचो मे प्रयच्छ । पूर्वं प्रसादाल्लालितोऽयं जनो नावज्ञां सहते । अपि ते हृदयं कच्चित्परांगनां तु नाऽध्यास्ते । अपि नाम ते स्नेहः प्रवासात्तु मयि न विस्मृतः ? धैर्यसिन्धो ! समुल्लंघिताब्धेस्तव गोष्पदे पतनं सर्वथैव विस्मयावहं वर्तते । कन्यालक्षणकोविदा ये दैवज्ञा मां भर्तृशस्तां प्राहुस्ते कथं नाम वितथवादिनो जाताः ? मम सूक्ष्माःसमानीलाश्च केशाः, परिच्छिन्ने भ्रुवौ, शंखे नेत्रे, अविरला दंताः, शोभनौ करौ, पीनौ स्तनौ, मणि-निभो वर्णः, मृदून्यंगरुहाणि, किंबहुना सुस्पष्टभूमिकौ पादौ च सर्वाणीमानि सौभाग्य-चिह्नानि विद्यंते । शत्रुकुलहंताऽयं युधि निपातित इति चित्रम् ? राघव ! परदेशे प्रियां त्यक्त्वा गंतुन्नार्हसि । निशम्यैतत्सीतावचनं सतीव्रतवत्सला त्रिजटा प्रोवाच । पुत्रि ! मिथ्याविषादेनालम् । ते पतिस्तु जीवति । अस्य मुखवर्णेनाग्रतः शुभं पश्यामि । इमे प्लवगा अनष्टधैर्या विचरंति । एतदपि शुभलक्षणमस्ति । वैदेहि ! त्वं भाग्यहीना नाऽसि । भग्नभाग्यो जनः पुष्पकेन नहि धार्यत इति त्रिजटावाक्यमाकर्ण्य परितुष्टा सीता तूर्णमेवाशोकवाटिकां निववृते । ततः संज्ञामवाप्य कृच्छ्रेण नयने च समुन्मील्य

सवर्गैः परिवारितो रामः समुत्तस्थौ । सोऽथ रुधिरोक्षितं रणाङ्गणे च शयानं लक्ष्मणमवलोक्य गद्गदस्वरमुवाद । मर्त्यलोके विचिन्वता मया सीता समा नारी तु लब्धुं शक्या । परं लक्ष्मणसमो भ्राता सांपरायिकः सचिवः सर्वथैव दुर्लभः । अहं कौसल्या केकयीसुमित्राः किन्तु वक्ष्यामि ? भरतशत्रुघ्नौ च किं वदिष्यामि ? हा त्यक्तसुखसुमित्रानंदन ! त्वं मदर्थे जीवितं त्यक्त्वा भूमिमालिङ्गय च मम पराङ्मुखः कथं सुप्तोऽसि ? मित्राणि सर्वत्र मिलंति । बान्धवाश्चापि यत्र तत्र समुपलभ्यंते । किन्त्वभिन्नहृदयो भवद्विधः सहोदरो न भूतो न चाऽग्रे भाविष्यति । हा ! भिन्नाभिमानसर्वस्वोऽहं जीवितं कथमुत्सहे । यस्याऽयं दक्षिणः सौमित्रिर्दक्षिणो भुजश्छिन्नः । भ्रातः ! सीतावियोगसमयेऽपि मया परुषं नोक्तोऽसि । साम्प्रतं समन्युरिव कस्मान्मां नाऽभिभाषसे ? तवाऽयं मयि कीदृशः सेवारसः ? यदद्यापि न प्रतिबुध्यसे ? एवं प्रलापमुखरे लक्ष्मणाक्षिप्तचक्षुषि च रघुवरे प्लवंगमा अपि धृतिं तत्यजुः । ततो हरिसैन्यं सहस्रधा विद्रुतं दृष्ट्वा सुग्रीवो धूम्रं यूथपाध्यक्षं समाहूय प्रोवाच । सखे ! मेघनादभयत्रस्ता इमे वानरा भीतिं परित्यज्य गदापाणिं विभीषणमनुसरंतु । भयभग्नानां भटानां जीवितं धिक् । देहिनां रणे मृत्युर्वने मृत्युर्गृहेऽपि च मृत्युर्वर्तते । निशम्यैवं भर्तुरादेशं वानरयूथपो धूम्रो भुजमुद्यम्य प्लवगर्षभाञ्जगाद । भो भो वानरसैनिकाः ! श्रीमानेष विभीषणो रामशासनसर्वस्वोऽस्ति । महाशयोऽयं मायाविनो मेघनादस्य व्याजयुद्धं सम्यगवगच्छति । ज्ञात्वैवं रघुनाथविजयाय सैन्यसंग्रहः क्रियताम् । इति धूम्रवचसा बलार्णवे परावृत्ते विभीषणोऽपि राघवगतिमवलोक्य विललाप । अत्र प्रसादविशदाः स्मितपूर्वाभिभाषिणश्च प्रभवो भाग्यहीनैर्न लभ्यंते । अहोवत कूटयोधिना नृशंसेन वीरौ निघ्नता निराश्रयोऽहमपि निहतः । अहो चतुर्दन्तं चामरच्छत्रलांछनं श्वेतगजराजं मुहूर्तमात्रमालोक्याऽपि निम्नाननः पतितोऽस्मि । अहो वेश्येव स्नेहशून्या, दुर्जनधीरिव कुटिला, खलमैत्रीव च दुरन्ता वेधसो गतिर्वामाऽस्तीत्यभिधाय साश्रुनेत्रो विभीषणः सलिलार्द्रेण पाणिना लक्ष्मणं स्पृष्ट्वाऽतिचकितो बभूव । एतदालोक्य सुग्रीवो विभीषणं जगाद । सखे ! एष स्त्रीजनोचितः शोकस्त्यज्यताम् । एष रामचन्द्रहस्त एव तव मौलावचिरादभिषेकोत्सवं विधास्यति । अयमंगदः सुषेणेन सह सानुजं राममादाय च किष्किन्धां यातु । अहमेक एव हनुमता सह लंकामराक्षसां कृत्वा सीतां नीत्वा च राघवसमेतः पश्चादेष्यामि । किम्बहुना अहंत्वय्येव सौहार्दप्रसादप्रणयराज्यदानानामानृण्यं गच्छामीत्युक्ते वानरेन्द्रेण कपियूथपः सुषेणो धृतिमालंब्य दुःखभेषजं च चिन्तयन् प्रोवाच । पूर्वं

यदा देवासुररणेऽसुरैः सुरा ये निहताः । तदा ते गुरुणाऽर्पितैर्मंत्रौषधिगणैः सपदि जीवितं प्रापुः । क्षीरसागरे द्रोणचन्द्रयोः पर्वतयोरंतरे ता महौषधयः संति । यत्र पुराऽमृतमंथनं बभूव । तत्रैका तु संजीवनी द्वितीया विशल्या तृतीया च संधिनी । यद्यपि पनसादयस्ताः सम्यग्जानंति तथापि शीघ्रमानयनार्थं हनूमानेव यातु । इति सुषेणेनाभिहिते सर्वोऽपि सैन्यसागरश्चिन्तामग्नो बभूव । अत्रान्तरेऽम्बरादवतीर्य देवर्षिर्नारदस्तत्र समाजगाम । सोऽथ कृतातिथ्यं काकुत्स्थं प्रोवाच । रघुवीर ! त्वं साक्षान्नारायणोऽसि । युद्धेचाऽसुरान्निर्हंसि । भगवन् ! भुवनारंभव्यापारेषु प्रजानाथस्य त्वदनुप्राणिता शक्तिः संहारेषु च महादेवशक्तिः कार्यं करोति । देव ! त्वमेव वराहस्वरूपं धृत्वा हिरण्याक्षं हत्वा च समहीधराया धरायाः समुद्धारं कृतवान् । लीलाकेसरिणा त्वयैव नखैर्दैत्यद्विपेन्द्रस्य मौक्तिकानीव यशांसि प्राणैः सह लुंठितानि । त्वमेव यज्ञे वटुरूपेण बलिं जित्वा तदैश्वर्यं शक्राय वितीर्य च देवकार्यं सम्पादितवान् । भार्गवाकृतेस्ते परशुः क्षत्रियवने दीर्घदावाग्निलीलया जजृंभे। त्वं सर्वयज्ञमयोऽसि । त्वं सर्वदेवमयोऽसि । त्वमेव च सर्ववेदमयोऽप्यसि । वैकुण्ठ ! त्वं स्वसचिवं सुपर्णं स्मर । स क्षिप्रमेव समागत्य भुजंगपंजरं क्षपयिष्यतीत्यभिधाय महामुनिस्तिरोदधे । ततः पवित्रात्मा दाशरथिर्गरुडं सस्मार । स ध्यातमात्रस्तत्र समाययौ । अथ तेन पाणिना कृतसंस्पर्शः सानुजो राघवो निःशल्यो निर्व्रणो मुक्तपाशश्च बभूव । ततः स्वर्णगिरिसंनिभः स सुपर्णः स्वस्थं काकुत्स्थं समामंत्र्य तूर्णं विशदं नभो विवेश । एवं स लक्ष्मणे रघुनाथे समुत्थिते सर्वभूतानां निर्विघ्ना हर्षनिर्वृतिर्बभूव । ततः प्लवंगा नादं चक्रुः। तच्छ्रुत्वा सर्वेऽपि निशाचरास्तूर्णं तत्रागत्य दशरथात्मजौ च स्वस्थौ विलोक्य विषण्णा बभूवुः। ततो भग्नमनोरथास्ते रावणमुपसृत्य काकुत्स्थोत्थानवृत्तान्तं तस्मै विनिवेदयामासुः । एवं पौलस्त्यः सानुजं राघवं प्राप्तजीवितं ज्ञात्वा विवर्णवदनो भूत्वा किमपि नोचे । ततः संदेहदोलामारुह्य कार्यं विचार्य क्रोधाद्धूम्राक्षं जगाद । वीर ! पश्य पश्य । क्षुद्रोऽपि शत्रुरुपेक्षितो व्याधिरिव साम्प्रतं कृच्छ्रसाध्यतां प्रयातः । सेयमयशोधूलिधूसरा पराभवग्लानिस्त्वद्यशःश्वेतपटेन मयाद्य सर्वथैव परिमृज्यते । रामलक्ष्मणसुग्रीवविभीषणेष्वेकतमं जित्वा मे मनोरथं पूरयेति प्रभुशासनं माल्यमिव शिरसा समादाय रथारूढो धूम्राक्षो राक्षससैन्येन सह धूलिधूम्रा दिशः कुर्वन् विनिर्ययौ । ततस्तस्मिन् भटदारुणे रणे दण्डादण्डि केशाकेशि युद्धमभूत् । राक्षस ! युध्यस्व । कातरवानर ! तिष्ठेति भीषणः शब्दस्तत्र प्रासरत् । किम्बहुना । धूम्राक्षबाणनिर्भिन्नैः प्लवगैः समरभूमिर्दोलाकेलिविलासिनी

बभूव । एतदालोक्य वानरप्रवराःप्रौढभुजोत्सृष्टैर्महाद्रुमैर्विपुलाभिः शिलाभिश्च रक्षसां क्षयं चक्रिरे । इत्थं धूम्राक्षेण विदारितेषु कपिसैन्येषु मारुतिः शिलां गृहीत्वा तमभ्यधावत् । ततो निशाचरस्तेन क्षिप्तां शिलां वीक्ष्य क्षिप्रं रथादवतीर्य च गदां जग्राह । अत्रान्तरे मूढस्य मनोरथ इव तस्य साश्वसूतध्वजो रथः शिलया सहसा प्रलयं प्रयातः । एतदालोक्य स भीषणया गदया वक्षसि मारुतात्मजमताडयत् । ततः पावनिस्तं प्रहारं विषह्य तस्योत्तमांगे गिरिशृंगं चिक्षेप । येन निष्पिष्टसर्वांगः स क्षितितले निपपात । एवं धूम्राक्षे निहते त्रस्ता निशाचरा गत्वा हनुमद्विक्रमं सर्वं रावणाय निवेदयामासुः । एवं जितनाके तस्मिन्हते रावणः शत्रुहृत्कंपनमकम्पनं युद्धाय विससर्ज । सोऽथ भर्तुराज्ञां शिरसि धृत्वा वव्राज । तस्मिन्नवसरे तस्य दुर्निमित्तानि दूततां प्रययुः । ततोऽकंपनपुरस्सरै राक्षसैः सह वीर्यशालिनां कपीनां संमर्दोऽभवत् । ततः सुभटशैलाग्रनिर्यद्रुधिरनिर्झरैर्महीतले व्याप्ते रजो मूलच्छिन्नं शांतिं ययौ । अथाकंपनशराप्तानि रणोत्सुकानां कपीनां शरीराणि परस्परगाच्छादनानीव चक्रुः । ततो हनूमान् महापादपमुत्सृज्य रुषा तमभ्यधावत् । एतदालोक्य राक्षसोऽशनिस्पर्शैर्विशिखैस्तस्य तं वृक्षं सपदि चिच्छेद । ततो बाणविद्धोऽपि मारुतिर्यद्गिरिशिरः प्राक्षिपत् । अकम्पनो वज्रवेगैः शरैः सपदि तच्चिच्छेद । अथ वज्रांगोऽपरं पादपं समासाद्य तत्पदानुगाञ्जघान । ततस्तस्मिन्नपि महाद्रुमेऽकंपनशरोत्कृत्ते सति पवनात्मजो विपुलं सालमुन्मूल्य तं निजघान । एवं तेन द्रुमाभिघातेन विह्वलो भूत्वाऽकम्पनो वृक्षेण सहैव शकलतामयासीत् । एवं युद्धेऽकंम्पनं हतं श्रुत्वा दशाननः कोपात्तूष्णीमासीत् । सोऽथ सैन्यनायकं प्रहस्तं समाहूयादिदेश । सखे ! दिग्विजये यथा त्वं मम सहायकोऽभूस्तथाधुनाऽपि रणे राक्षससैन्यं रक्ष । निशम्यैतद्राक्षसराजशासनं प्रहस्तो बाढमित्युक्त्वा कृष्णहययुक्तं रथं च समारुह्याऽप्रशस्तेषु निमित्तेष्वपि युद्धार्थं निश्चक्राम । ततः प्रहस्तसैन्येन पूरिते समरे वानरसेना कृच्छ्रसंचारा बभूव । एष राक्षसराजस्य दक्षिणोबाहुरिति जननिःस्वनोऽभूत् । ततो रामरावणयोरर्थे परित्यक्तात्मनां कपिरक्षसां समरसंघर्षनिर्घोषोऽभवत् । तस्मिन्नवसरे विशालेषु रक्षः खड्गेषु प्रतिबिम्बिता हरिसेना रामप्रभावेण सहस्रगुणितामिव लेभे । अथ बलाम्बुधौ यत्र तत्र प्रहस्तभुजोत्सृष्टा ये सायका निपेतुः । ते रघुवरप्रतापेन वानरगात्राणि स्पृष्ट्वैव कुसुमोपमां दधुः । एवं वानराद्रिद्रुमाघातभग्नाङ्गा अपि रजनीचरा मानांकुशांकत्वमवलंब्य पराङ्मुखा न बभूवुः । ततः प्लवंगभिन्नैर्गजैरुत्कृत्तांगैर्हयैश्छिन्नकंकटैः पतितैश्च भटैः समरभूमिर्व्याप्ताऽभूत् । ततो रथरथ्यासु कबंधरुद्धासु निःसंचारेषु च सैन्येषु जनो निरुच्छ्वासोऽभवत् । अत्रान्तरे

समुन्मदकुंभहनुमहानादतरंधमाः प्रहस्तसचिवगणा वानरक्षयं चक्रिरे । एतदालोक्य द्विविदः शैलशृंगेण तरंधमं निष्पिपेष । दुंदुभो महाद्रुमाभिघातेन समुन्नदन्मुन्ममाथ । जाम्बवान्छिलया महानादं जघान । तरुणश्च तरुणा कुंभं हनुं च व्यसुं चक्रे । एवं तेषु वीरेषु वीरगतिं प्राप्तेषु प्रहस्तो रिपुसैन्यह्रदे निविडालोडनक्रीडां व्यधात् । एवं वानरसेनानायको नीलः प्रहस्तप्रहतां वानरवाहिनीं दृष्ट्वा वेगेन तमभ्यधावत् । अथ विस्मयावहे युद्धे सन्नद्धयोस्तयोः कपिराक्षसाः क्षणं प्रेक्षकतां प्रायुः । ततो नीलः कोपात् तरुं चिक्षेप । प्रहस्तः शरैस्तं खण्डशः कृतवान् । ततो रुषा नीलो यावच्छिलां प्रक्षिपति । तावद्राक्षसराजसचिवः शरजालेन तमदृश्यतान्निनाय । एतदालोक्य नीलो लोचने निमील्य कुंजरो घर्मान्तेऽभिनवं वर्षमिव जग्राह । अथावसरज्ञो नीलस्तरुप्रहारेणाऽस्य तुरंगमाञ्जघान । विलोक्यैतद्धताश्वः सः मुसलेन ललाटे प्लवंगमं जघान । स च वृक्षेण तमुरसि प्रतिजघान । ततो नीलस्तमुद्भ्रान्तमुसलं प्रहस्तं साक्षात्कालमिवोपस्थितं ज्ञात्वा शिलां समुत्क्षिप्य तं स्फुटितमस्तकं चक्रे । ततो भग्नोत्तमांगे प्रहस्ते धरणीतले निपतिते रक्षोगणमध्ये कश्चिदपि पलायितानां निरोद्धा नाऽभवत् । एवं तस्मिन्रणयज्ञे हुतात्मनि सेनानाथे समस्तसामंतैः समं स्वयं रावणो निर्जगाम । ततः प्रलयभैरवांभोधरध्वनिः समरदुंदुभिर्दशाननाग्रे रुराव । एवं सैन्यैः दशापि दिशः पूर्यमाणा विलोक्य काकुत्स्थोऽग्रे स्थितं विभीषणं पप्रच्छ । सखे ! महीध्रविपुलैर्ध्वजापिंजरिताम्बरैर्बलैः कोऽस्माकं पुरः सुभटो योद्धुमभ्येतीति रामेण पृष्टः प्रह्वो विभीषणो दूरादंगुल्या सैन्यनायकान्निर्दिशन्प्रोवाच । प्रभो ! योऽयमग्रे रथस्थः सूर्यवत्प्रकाशते । स स्वर्गौकसां भोगवियोगगुरुरिन्द्रजित् । यस्यैतत्पर्जन्योर्जितगर्जितं धनुः कूजत्येषोऽतिकायः । योऽत्र हेमसंनाहं रथं समारुह्य वलादेति स देवान्तक एष च त्रिशिराः । अयं राक्षसपतिसूनुर्मकराक्षः । एते कुंभनिकुंभमहोदरसुमालिनः संग्रामयज्ञेषु सदा त्रिदशक्षयदीक्षिताः संति । एते रावणामात्याः स्वर्गोल्लुंठनमेव स्वधर्मं मन्यंते । य एते राक्षसराजस्य सेनाग्रे पद्भ्यां परिसर्पन्ति । ते सर्वे विबुधध्वंससाक्षिणो वर्तंते । योऽयं स्वच्छकांतिना छत्रेण नीलशैल इवाभाति । स जानकीदुःखकोपाग्निदग्धशक्तिर्दशाननोऽस्ति । नाथ ! यथा पिनाकिनं भूतगणास्सेवन्ते तथैनं पिशिताशनाः पर्युपासते । देव ! तस्यैतच्चन्द्रधवलं यशो जलदश्यामलेन त्वद्भ्रूभंगेनैव निमीलितम् । निशम्यैतद्विभीषणोक्तं दिवं विलोक्य राजीवलोचनो रामो रावणानुजं प्रोवाच । मित्र ! राजलक्ष्मीरियं कुबेरस्य दूरे शतक्रतोश्चापि दुर्लभास्ति । यद्येषाऽधर्मेणाच्छुरितास्यात्तदास्य श्लाघ्यतमा भवेत् । अहोनु विधिर्विपरीतेष्वेवार्थेष्वधिकादरो भूत्वाऽऽश्रितां लक्ष्मीमयशः स्पर्शदूषितां करोति ।

प्रक्षीणसंचयः शशी सापायाः समृद्धयश्च निर्विवेकिनो विधातुरकौशलं दर्शयंति । एवं बहुविधैरुदारभावैर्दाशरथिर्दशाननं प्रशशंस । यतो गुणलुब्धा महानुभावाः सापराधेष्वपि सादरा भवंति । ततः पौलस्त्यो वीरनादं कृत्वा यान् बाणान् प्राक्षिपत् । ते वानरशरीराणि भित्त्वा पाताललोकं विविशुः । एवं रावणेन हन्यमानेषु सैन्येषु पर्वतायुधः सुग्रीवः सहसा तमभ्यधावत् । एतदालोक्य दशाननो वज्रशिखैर्विशिखैः सुग्रीवदोर्युगाक्षिप्तं तं गिरिं क्षणाद् व्यदारयत् । ततो राक्षसराजः सुग्रीवाय मृत्युदंष्ट्राकरं शरं चिक्षेप । स आशुगः सर्प इव सवगं भित्त्वा रसातलं प्रविवेश । एवं व्यथिते वानरेश्वरेऽन्ये प्लवगपुंगवा योद्धुमभ्याययुः । ततस्तैः क्षिप्तां तालसालशिलावृष्टिं दशाननः क्षणाच्छित्वाऽन्यान् विशिखान् प्राक्षिपत् । तस्मिन्नवसरे वज्रवेगैः शरैः प्रक्षिप्ता मैन्दद्विविदादयः प्लवंगमभटाश्छिन्नमूला द्रुमा इव धरण्यां निपेतुः । अथ भग्नेषु कपिसैन्येषु शत्रुदारणो लक्ष्मणो रामशासनं समादाय रावणं दुद्राव । ततस्तस्मिन् वीरे कोपादापतिते मारुतिरग्रे गत्वा लंकेश्वरं योधयामास । एतदालोक्य दशाननो जगाद । कपेऽधुना पौरुषं दर्शय । यतो मद्भुजा विहीनविक्रमे हन्तुं न प्रवर्तन्ते । तच्छ्रुत्वा वज्रांगः प्रत्यवदत् । वीरम्मन्य ! किन्त्वयाऽक्षवधे मम पुरुषार्थो न दृष्टः ? किम्बहुना । एष मम मुष्टिरेवाद्य ते शरीरं क्षिप्रं प्रोषित जीवितं करोति । निशम्यैतद्धनुमद्वचनं दशास्यो विहस्य प्रोवाच । कपे ! निःशंकं प्रहर । मया निहितस्य तवैषा प्रागल्भ्यजा कीर्तिश्चिरं विजृंभतामित्यभिधाय रावणः पृथुवेगेन तलेनोरसि मारुतिं जघान । येन स मुहूर्तमकम्पत । ततः प्रौढविक्रमो हनूमान् वज्रसारेण तलेन राक्षसराजं प्रत्यताडयत् । तेन लोलबाहुर्दशाननश्चकंपे । एतदालोक्य सोऽवदत् । कपे ! साधु ते वीर्यम् । त्वं मे योग्यो रिपुरसि । एतदाकर्ण्य पावनिर्जगाद । पौलस्त्य ! मम बलं धिक् । यन्मन्मुष्टिनिष्पिष्टोऽपि श्लक्ष्णचूर्णतान्न यातोऽसि । निशम्यैतन्मारुतिवचनं कोपाकुलो राक्षसो वेगात् कपिवक्षसि मुष्टिमपातयत् । किम्बहुना । गिरिगौरवोऽपि हनूमान्येन मुमूर्छ । ततो हनुमत्सहायार्थं समागतेन नीलेन सह रावणो युयुधे । अत्रान्तरे लब्धसंज्ञो मारुतिर्नीलेन सह युध्यमानं रावणं विलोक्य द्वन्द्वयुद्धविधिं स्मृत्वा च नैनमभ्याद्रवत् । ततो रावणबाणविद्धोऽग्निसुतो नीलः कोपात् पौलस्त्याय यं गिरिं व्यसृजत् । तं रावणो नवभिः शरैश्छित्त्वा पुनः शरशतैर्नीलं मेघच्छन्नमिवाचलं चक्रे । एतदालोक्य नीलोऽपि मायां समाश्रित्य सर्वत्र विश्वात्माऽग्निमिवात्मानं दर्शयामास । तस्मिन्नवसरे राक्षसराजो ध्वजे बाणान्ते शरासने किरीटाग्रे च पावकं विलोक्य विस्मयाऽब्धौ निममज्ज । सोऽथ धैर्यमवलंब्य नीलाय सप्तलोकक्षयक्षमं पावकास्त्रमाशु चिक्षेप । ततस्तेन

वक्षस्यभिहतो नीलो विसंज्ञो भूत्वा धरातले निपपात । किन्तु तूर्णमेव पित्रा रक्षितः पुना रणाय प्रस्तुतोऽभवत् । ततः पादचारी कर्णान्ताकृष्टकार्मुकश्च लक्ष्मणो महारथस्थं रावणमभ्येत्य प्रोवाच । राक्षसपते ! शीघ्रमभ्येहि । समरे च मया सह युध्यस्व । वानरा इमेऽभंगविक्रमं त्वां सर्वथा विजेतुं नार्हन्ति । निशम्यैतल्लक्ष्मणवचनं कोपाकुलो दशाननः प्रत्यवदत् । तापसपशो ! दिष्ट्याऽद्य त्वं मे दृशोर्गोचरं यातोऽसि । साम्प्रतं मे जीवितं त्वद्दर्शनपर्यन्तमिति सत्यम् । यथा मूकस्य शास्त्रार्थेच्छा प्रज्ञाचक्षुषश्च रूप-निरीक्षण रुचिस् तथा मेऽभिलापस्ते युधि वर्तते । दर्पान्ध ! सावधानतायै किमप्यौषधं सेवस्व युद्धे वाक्चापलं नापेक्षितम् । एवं रावणगर्वोक्तिं श्रुत्वा सौमित्रिः प्रत्यभाषत । लोके बहुधा निस्साराणामेव वाचि प्रगल्भता भवतीत्युक्त्वा लक्ष्मणो नानाविशिखैस्तत्सा-यकानकृन्तत् । ततः पौलस्त्यसौमित्रिपत्रिजालैर्नभः समाच्छादितमभूत् । अथ रावणो ब्रह्मदत्तेन सायकेन ललाटे सौमित्रिमभिनत् । ततो वीरो लक्ष्मणोऽपि कृच्छ्रेण तां शरनि-र्भेदव्यथां संस्तभ्य शिलीमुखैः कृत्तचापं रिपुं कृत्वा च तं मूर्छितमपि चक्रे । अथ दशग्रीवः संज्ञामवाप्य लक्ष्मणाय कालानलोल्वणां शक्तिं विससर्ज । एतदालोक्य भरतानुजो यद्यपि पावकोपमैर्बाणैस्तां निजघान । तथापि सा तस्य विशालं भुजान्तरं प्रविश्य प्रत्याययौ । ततो लक्ष्मण आत्मानं विष्णोर्भागं मत्वा तां व्यथां सेहे । अत्रान्तरे क्रुद्धो वायुसुतो लंकापतिमभ्येत तं मुष्टिनोरसि जघान । येन जानुभ्यामवनिं गत्वा दशाननो निपपात । एवं त्रिदिवविद्विषि निजाभिमानेन सह च्युते श्री, सुरसिद्धर्षिसंघाना-मानंदनिःस्वनो बभूव । ततो लब्धप्राणे दशानने पुनर्योद्धुं समुद्यते तद्बाणाशनिसंपातै-र्बहुलः प्लवंगमक्षयो बभूव । ततो राघवोऽच्युतो गरुडमिव मारुतिमारुह्य चापं विस्फार्य च दशाननमभ्याद्रवत् । एतदालोक्य क्षुब्धो रजनीचरराजः सहसा सीताप्राप्तिमनोरथं तत्याज । अथ रामः पौलस्त्यविशिखैर्विद्धं मारुतिं दृष्ट्वा कोपाद्रावणाय तीक्ष्णतमान् सायकान् व्यसृजत् । ततो रामरावणयोः शरामिथः शौर्यश्रियं द्रष्टुमितस्ततः संकल्पा इव चेरुः । तस्मिन्नवसरे देवविजेतू रावणस्य रथकेतुर्दाशरथिशरैः शार्वो वर इव मेदिन्यां निपपात । ततः शस्त्रास्त्रप्रयोगनिपुणो रघुवरो बाणैर्लंकापते रथमुन्ममाथ । अथ रामार्धचन्द्रैः सायकैर्हताश्वो हतसारथिश्च पौलस्त्यः सहसा किंकर्त्तव्यविमूढोऽभवत् । एवं हृतगतिं च्युतचापं च रावणं रघुवीरः प्रोवाच । समरे श्रान्तस्त्वमितो गच्छ । प्रथमावसरे तु मया संरक्षितोऽसि । तच्छ्रुत्वा त्रैलोक्यजयगर्वितोऽपि रावणो निजदुराचारान् स्मृत्वा क्षितिं क्षणमालुलोके । एवं निर्जितोऽपि राक्षसराजो जानकीसंगमस्पृहां न तत्याज ।

यतो दुर्वृत्तानां निर्बन्धः प्राणैः सहैव विनिवर्तते । किम्बहुना । यथा साध्वी विगुणं पतिं माता कुपात्रं पुत्रं वेश्या च नीचातिनीचं दातारं न त्यजति । तथा मूढतापि दर्पान्धं न जहाति । ततः पौलस्त्यः कनकमंदिरं गत्वा कांचनासने समुपविश्य सुचिरं ध्यात्वा च राक्षसान्प्रोवाच । अहोऽद्य ममातितीव्राणि तपांसि तेजांसि च पौरुषद्विषो दैवस्य शासनादूव्यर्थीभूतानि । यद्यपि कार्याणि शक्तिसाध्यानि पौरुषश्रियश्च स्वाधीनास्तथापि सोन्मादस्य विधेर्गतिः फलकालेऽचिन्त्यैव प्रतीयते । किम्बहुना । दधीच्यस्थ्युद्भवाः कुलाचलाः कुलिशेन छिन्नाः । श्रीकैलासतुल्यकल्लोलो जलाधिश्च मुनिना पीत इति सुविचिन्त्य विधिगतिमेव जगति बलवतीं मन्ये । मर्त्येभ्य एव भयमिति प्रजापतिर्मां सत्यमूचे । नन्दिनिर्दिष्टः सोऽयं कपिपराभवोऽपि समुपस्थितः साम्प्रतं । द्वारगोपुरवर्त्मसु सालाट्टालप्रतोलीषु च बलवत्तरैः रक्षोभिः सुरक्षा क्रियताम् । ब्रह्मशापाभिभूतोऽसावनुजः कुंभकर्णः प्रबोध्यताम् । यथा स्वभुजे तथा तस्मिन् भ्रातरि मे जयाशा सदा वसति । स मम भ्राता यद्यस्मिन् व्यसने नोपयुज्यते । तदा तेन स्फारसारेण भूभारेणाऽपि किम् ? इति राक्षसराजेन समादिष्टा रजनीचराः कुंभकर्णप्रबोधाय सपदि तन्निकेतनं जग्मुः । अथ ते रत्नकुट्टिमसंश्रये महार्हशयने सुप्तं गिरिप्रभं कुंभकर्णं ददृशुः । किम्बहुना । तस्य नासागुहागर्भनिर्गतैः श्वासमारुतैरक्षसां गतागतं तृणानामिव तूर्णं बभूव । ततः स शीतचंदनैर्माल्यैः कीर्णोऽपि यदा न बुबुधे । तदा तैः शंखभेरीणां सहस्रैः स्वनं चक्रिरे । अथ तैर्गदामुद्गरतोमरैः समाहतोऽपि गाढनिद्रां न तत्याज । तर्हि गीतवाद्यरवाकुलास्त्रिदशगन्धर्वसिद्धविद्याधरांगनास्तत्प्रबोधाय विविशुः । ततस्तासां पीतस्तनस्पर्शैश्चंदनसौरभैर्मधुरकाकलीगीतैश्च कुंभकर्णः सहसा व्यबुध्यत । ततः पातालविपुलाननः स नेत्रे समुन्मील्य व्यजृंभत । सोऽथ स्नात्वा हस्तिमहिषमनुष्यैश्च कृताशनो रुधिरस्यासवस्य कुंभसहस्राणि पीत्वा च ततर्प । ततः स सीता निकारजं घोरं भ्रातृपराभवं श्रुत्वा शीघ्रमुत्थाय चाग्रजं द्रष्टुं प्रययौ । ततो मेरुशरीरस्य तस्य रविपथे लग्नं शिरोऽवलोक्य बहिः स्थिताः सर्वे वानरा भयादितस्ततो दुद्रुवुः । एतदालोक्य रघुनाथो विभीषणं पप्रच्छ । सखे ! लंकायां किमेतदद्भुततरं भूतं समुद्भूतम् ? इति विस्मयाद्रामेण पृष्टो विभीषणः प्रेम्णा प्रत्यवदत् । महाराज ! भ्रात्रा कृच्छ्रविबोधितोऽयं कुंभकर्णः । एष विजितशतक्रतुर्ब्रह्मणैव दीर्घनिद्रां प्रवेशितोऽस्ति । अनेनैव दिग्गजादन्तमाकृष्य समरे तत्प्रहारैर्घासवो जर्जरीकृतः । संप्रति तीव्रत्रासविनिवृत्तये तूर्णं कपयः प्रबोध्यन्ताम् । एवं विभीषणानुमत्या सैन्यसागरे निर्भयेकृते मदोत्कटः कुंभकर्णो रावणभवनं प्रविवेश । सोऽथ दशाननं

प्रणम्य प्रबोधकारणं पप्रच्छ । तच्छ्रुत्वा रावणोऽब्रवीत् । अहो त्वम्मे दयितो भ्राता दिग्विजये च प्रथमो भुजोऽसि । सुखसुप्तत्वान्नत्वं वैरिपराभवं न जानीषे ? भ्रातः सीता-वियोगग्रस्तेन पदातिना मनुजेनाऽस्मत् प्रभावगंभीरो नदीनाथोऽपि स्थलीकृतोस्ति । अनुज ! अस्यावमानपंकस्य कलंकस्य निहताराविवधूवाष्पाम्बुनिर्झरैस्त्वमेव प्रक्षालको भवेति राक्षसेन्द्रेणोक्ते विहस्य कुंभकर्णोऽभ्यभाषत । अहोवताऽस्मिन् मंत्रिमण्डले कश्चिदपि विपश्चि-न्नास्ति । यो घोरव्यसनवातव्याधेश्चिकित्सां कुर्यात् ? राजन् ! विपदामादावेव प्रतिक्रिया चिन्तनीया । वह्निना प्रदीप्ते भवने कूपखननं न युक्तम् । या मतिः पश्चादुत्पद्यते सा यदि पूर्वमेव भवेत्तदा न कार्यहानिर्जायते न च लोकोऽपि हसति । देव ! देशकालविरुद्धा मतिर्मंत्रविहीनाऽऽहुतिरिव फलाय न प्रकल्पते । नूनममात्या इमे महामूर्खाः संति । ये कूपे पतितं मे भ्रातरं नाऽरक्षन् । छंदानुवर्तिनो दुर्णयेष्वनुवादिनश्च मंत्रिणो राज्ञां शत्रव एव न सुहृदः । किंवहुना महाब्धौ सेतुवंधनं नाद्यावधि केनाऽपि श्रुतं नचाऽव-लोकितम् ? नायं सेतुः किन्तु रामस्य यशः केतुरेवाऽस्तीति कुंभकर्णस्य पथ्यमपि वचः श्रुत्वा कोपाद् भ्रुकुटीकुटिलाननो रावणस्तमवादीत् । भ्रातः ! तव वीरव्रतपरिभ्रष्टं वचो मयाऽधुना श्रुतम् । त्वं वृथैवायासितोऽसि । शीघ्रमितो गत्वा पुनः शयनं भज । अनुजो भूत्वाऽग्रजं मां मोपदिश । संप्रति व्यतीतेनोपालंभेन किम् ? साध्वसाधुर्वा यत्कृतं तत्कृतं । प्रतिक्रिया तु वर्तमानस्य हि दोषस्य विचिन्त्यते । विचारावसरस्तु तावदेव यावत्कोशात् कृपाणो नाऽवकृष्यते । किन्तु रक्तक्षीवेषु खड्गेषु को मंत्रावसरं प्रतीक्षते ? समयोऽयं श्रीरक्षणस्याऽस्ति नचोपदेशस्य । रजन्यां नेत्रसर्वस्वं दीपो दिवा स्वयमेव निरर्थको भवति । योऽयं सुमार्गोऽस्माभिः प्रमादाद्विपमीकृतः । स त्वत्प्रभाव-समीभूतोऽद्भुतफलप्रदो भवत्विति प्रौढप्रकोपस्य भ्रातुः शासनं समाकर्ण्य वैलक्ष्य-विनताननः कुंभकर्णोऽभ्यधात् । आर्य ! एष शत्रुचिन्ताकृतो ज्वरः संत्यज्यताम् । प्रभो ! मया यद्धितमुक्तं तदन्यथा मा गणय । अधुना त्वं मम स्कन्धे युद्धभारं निक्षिप्य कान्ताप्रसादनव्यग्रश्चिरं निर्वृतो विचर । किम्बहुना । अहमद्य त्वच्छासनपरो रणे लोकमराममलक्ष्मणमसुग्रीवमवानरं च करोमि । देव ! अहमेक एव निजभुजायुध इतो गत्वा परानीकं क्षपयामि । सर्वे राक्षसास्त्वत्रैव तिष्ठंत्विति कुंभकर्णस्य सोत्सेकं वचः श्रुत्वा महोदरः कार्यगौरवाद्दशाननाग्रेऽप्युवाच । निद्रारसिक ! कथं वाल इव निःसहायस्त्वं चापलान् महावीरं काकुत्स्थं जेतुमिच्छसि ? मम वार्तां मत्वा क्षपाचरगणैः सह रणांगणं गच्छ । कुलानुरूपमेव युध्यस्व । विजयस्तु विधिवशे वर्तते । देवो राघवं मिथ्याहतं

विश्राम्य निराशां जनकात्मजां स्ववशां करोतु । एवं महोदरवाक्यं समाकर्ण्य क्षितिपानुजो दशग्रीवं प्रणम्य ज्वालाकपिलं शूलं समादाय कल्पान्ते सर्वभूतदमनाय भैरव इव खरसहस्रयुक्तं रथं समारुह्य च समुद्ययौ । सोऽथ राक्षससैन्यपरिवृतो योद्धुमुद्यतोऽभवत् । एतदालोक्य संत्रस्ता वानरा इतस्ततो धावितुमारेभिरे । एवं हरिसैन्येषु भग्नेषु वालिसूनुर्नादेन हरियूथपाञ्जगाद । शूराः ! भयेनाऽलम् । महाकायोऽयं कुंभकर्णोऽस्ति । शरीरिणां मृत्युरेक एव । प्राणाः सर्वथा क्षयिणः । ज्ञात्वैवं यशोरक्षां कुरुत । वयं सर्वे मिलित्वैनं निशाचरं युद्धे प्रापयितुं शक्ताः । इत्यंगदगिरा सालतालाचलायुधाः प्लवंगमवीरास्ते कुंभकर्णमभिजग्मुः । ततो वानरभुजोज्झिता गुरवोऽपि गिरस्तस्य गात्रेषु कणशो ययुः । ततो द्विविदस्तस्मै यं पर्वतं प्रचिक्षेप । स कुंभकर्णमनवाप्याऽपरान्निशाचरान् निष्पिपेष । एतदालोक्य कोपाकुलो रावणानुजः पद्भ्यामेव प्लवगान्निष्पिष्य रक्ततटिनीं ससर्ज । एवं हरिरक्षसां घोरनिर्घोषे समरे प्रवृत्ते क्षणमपि कश्चित्पराङ्मुखो न बभूव । किम्बहुना । ब्रह्मलोकाभिकामानां प्राणैरानृण्यकांक्षिणां च तेषां मिथो महाक्षयोऽभवत् । ततो वानराः प्रहारोद्यतस्य तस्य विकरालं रूपं दृष्ट्वा दिशो जग्मुः । एवं पलायितेषु तेषु परिवृत्यांगदो जगाद । अहोनु क्षणसंक्षयिणोऽस्य जीवितस्य कृते कोऽयं वः स्त्रीजनोचितः संत्रासः ? साध्वसं विनिवार्य चेतोऽचंचलं क्रियताम् । जगत्यस्मिन् वीराः कीर्त्यर्थं जीवंति द्विजन्मानश्च तपश्चर्यायै प्राणान् धारयंति । किम्बहुना । मोक्षारोहणसोपानपंक्तिरियं खड्गपरंपरा पुण्यविहीनानामंगेषु नहि पतति । रामस्यार्थे सर्वस्वं त्यक्ष्याम इति सुग्रीवाग्रे भवद्भिः प्रतिज्ञातं तदद्य सत्यं क्रियताम् । यतो मानिनां वित्तं सत्यमेव । जगति त एव धर्मबान्धवा जयंति । येषां मुखकमले सत्यप्रतिष्ठिता सरस्वती सदा वसति । युद्धेऽपलायनमेव शूरव्रतम् । किन्तु द्यूत इव जयपराजयौ तु भाग्यायत्तौ । इत्यंगदवचसा बलार्णवे परावृत्तप्लवगरक्षसां पुनस्तुमुलं युद्धं बभूव । ततो जाम्बवन्तं पुरस्कृत्य नीलकुमुदगवाक्षांगदा युगपत्कुंभकर्णं समाद्रवन् । अत्रान्तरे मैन्दचन्दनमारुतयस्तस्मै सालतालकुलाचलान् प्राक्षिपन् । यैः कुंभकर्णरथो भग्नो भूत्वा पृथिव्यां निपपात । ततो विरथो रावणानुजः शूलमुद्यम्य कपिक्षयं चकार । एतदालोक्य हनूमान् राक्षसनायकाय गिरिं प्राहिणोत् । कुंभकर्णः शूलाग्रेण तं सहसा न्यपातयत् । ततो रावणभ्रात्रास्तनान्तरे शूलेनाहतो वायुसूनुर्मुखादसृग्वमन् ननाद । एतदालोक्य वानराः सपदि पलायांचक्रिरे । एवं मारुतसुते व्यथिते नीलः शैलं चिक्षेप । कुंभकर्णो हस्ताभ्यां तमपि निवारयामास । सोऽथ कोपाकुलः पाणिभ्यां गृहीत्वा शरभमुख्यान् मुखे प्रक्षिप्य न्यगिलत् । विलोक्यै-

तच्छ्रुत्वार्ताः कपियूथपा राघवं शरणमयासिपुः । अथ कोपकम्पितः सुग्रीवश्चैत्यवृक्षेण कुंभकर्णं वक्षसि जघान । तेनाभिहतः स विहस्य सुग्रीवाय घोरं शूलं व्यसृजत् । महावीरः सुग्रीवस्तं पाणिभ्यामपवार्य जानुसंध्यग्रे नीत्वा च बभंज । अथ शूलभंगात्प्रकुपितः कुंभकर्णो गिरिशृंगेण हरीश्वरं निजघान । येन स मूर्छितो भूत्वा पृथ्वीतले निपपात । ततः प्रहृष्टो रावणानुजस्तं समादाय लंकां प्रययौ । अत्रान्तरे निशाचरैः स्तूयमानं तं प्रयान्तं च विलोक्य हनूमानचिन्तयत् । अहो विसंज्ञोऽस्मत्सेनापतिः संग्रामे शत्रुणा गृहीतः । अतोऽस्य सचिवान् धिक् । एपोऽहं मुष्टिप्रहारेण क्षणदाचरं हत्वा स्ववर्गं प्रसादयामि । अथवा लब्धसंज्ञ एप यथोचितं प्रतीकारं करोतु । नूनं परेण मोचितोऽहमितिलज्जां नाऽयं सहते । अतोऽहं तावद्भग्नसैन्यानां विनिवर्तनं करोमीति चिन्ताकुलिते हनूमति सुग्रीवः सुप्तोत्थित इव शनकैः संज्ञां समवाप्तवान् । सोऽथ वेगाद्वपुर्विधूय कुंभकर्णस्य कर्णनासिके चकर्त । ततः स्रवद्रुधिरनिर्झरः स पार्श्वे कपिं निष्पिपेष । ततो लब्धावकाशः सुग्रीवः खमुत्पत्य यत्र सलक्ष्मणो राम आसीत्तत्र जगाम । अथाऽन्येद्युः पुनः कुंभकर्णो रणांगणे समागत्य घोरं वानरसैन्यकदनं चक्रे । किम्बहुना । कोपाकुलः स कपिभिः सह मुखे राक्षसानपि प्रचिक्षेप । एवं त्यक्तमर्यादं तं दृष्ट्वा त्रस्तानि सर्वभूतानि कालोऽयमिति मेनिरे । ततो रक्षसा भग्नेपु क्षपितेपु च प्लवंगेपु सलक्ष्मणो राघवश्चापं समाकृष्य तमभ्याद्रवत् । अथ रघुनंदनः शोणिताक्तसर्वांगं कपिरक्षोभिश्च वर्जितं तं दृष्ट्वा जगाद । क्षणदाचर ! त्वं महामोहग्रस्तोऽसि । यः प्राप्तैश्वर्योऽधम इव स्वान् परांश्चापि न जानीषे । एषोऽहं पापवृत्तानां निग्रहीता । त्वां दशास्यस्य यमवर्त्मपुरस्सरं करोमीति रघुवरवचः श्रुत्वा सौमित्रिशरदारितोऽपि रावणानुजो विहस्य प्रोवाच । राम ! नाऽहं खरदूषणमारीचविराधकवंधतुल्योऽस्मि । किन्तु मां निर्जितसुरासुरं विद्धि । काकुत्स्थ ! शक्रादीनामपि भयंकरं कुंभकर्णं मां विजानीहि । किम्बहुना । लोकपालवसादिग्धं मे मुद्गरं पश्येति ब्रुवाणस्य तस्य शरीरं रामसायका विविशुः । एतदालोक्य कोपाकुलः स सुरसंहारसचिवं तं मुद्गरं समुद्यम्य राममभ्याद्रवत् । अत्रान्तरे रामो रौद्रमस्त्रं ससर्ज । येन विद्धस्य तस्य वक्त्रादर्चींपि निश्चेरुः । ततो हृदि निमग्नबाणस्य तस्य करात् गिरिगौरवो मुद्गरः सहसा पपात । अथ भुजायुधः स कोपात् पुनः कपिरक्षसां संहारं चकार । एतदालोक्य लक्ष्मणः कपियूथपान् प्रोवाच । भवंतः सर्वेऽस्य शरीरं समारुह्य गात्रसंमर्दं कुर्वन्तु । तच्छ्रुत्वा जाम्बवन्तमग्रे कृत्वा गवाक्षकुमुदांगदा जवात् समारुरुहुः । एवं ज्ञात्वा सोऽसुरो गात्रं

विधूय दिक्षु तानारूढान् वानरान् प्रचिक्षेप । सोऽथ कृत्तवामभुजः कोपं कृत्वा वृक्ष-मुद्यम्य च राघवमभ्यधावत् । एतदालोक्य रामः शाक्रास्त्रेण तमपि ससालं भुजं चिच्छेद । ततो राक्षसः पादप्रहारैर्वानरान् जघान । ज्ञात्वैवं रामोऽर्धचन्द्राभ्यां तस्य चरणौ छित्त्वा शक्रदत्तेन शरेणास्य राक्षसपुंगवस्यशिरोऽपि चकर्त । ततस्तस्य शिरसि काये च निपतिते वह्वो रणांगनस्थाः कपिराक्षसा अपि समाक्रान्ताः क्षयं प्रापुः । एवं सदिवौकसां मुनीनां कण्टके विध्वस्ते सातंका लंका तु चकंपे । शेषा च वेददेवहितैषिणी भुवनावली निष्कंटकेव भूत्वा चकाशे । एवं भ्रातरं निहतं श्रुत्वा भग्नमानो रावणः शोकसंतापमेत्य कनकासनात्पपात । ततो देवान्तकनरान्तकातिकायास्त्रिशिरसो मुखाद्वृत्त-माकर्ण्य शुचा पितरं रुरुदुः । अथ महोदरमहापार्श्वावपि नृपं निश्चेष्टमालोक्य शोकग्रस्तौ वभूवतुः । ततो दशाननः कृच्छ्रेण संज्ञामवाप्य पुनः पुनः प्रललाप । हा कुंभकर्ण ! मया किन्तवाऽपकृतम् ? यन्मां व्यसनार्णवे परित्यज्य गतोऽसि । हे देवेन्द्रसेनासरसी-विलोडनमहागज ! मे जीवितेन किम् ? यस्य दक्षिणो भुजः कुंभकर्णश्च्युतः । भ्रातस्त्वं युधि सिंहोपमं शक्रं विजित्याऽपि जम्बुकतुल्येन मर्त्येन राघवेण कथं हतोऽसि ? अधुना मम सीता का ? राज्यं धिक् । जीवितेनाऽपि च किम् ? वत्स ? त्वां विनाऽहं तु जगत्त्रयीं शून्यामेव मन्ये । हा दुर्विनीतेन मया यत्तथ्यं पथ्यं च विभीषणवचो न श्रुतम् । तस्य पापपादपस्याऽयं विपाकः प्रादुरासीत् । हा महाभिमानिना मया विनीतो भ्राता विवासितः । तद्वाक्यातिक्रमणादेव दुःसहोऽयं पराभवः प्राप्तः । एतदाकर्ण्य त्रिशिराः स्वदुःखं नियम्य प्रोवाच । राजाधिराज ? एवमेतत् । भवता हितमपि विभीषणवचनं नाङ्गीकृतम् । अधुना प्रलापेन पश्चात्तापेन वा किम् ? धैर्यसागराः साधवोऽतीतं नहि शोचंति । तात ! त्वदर्थं कुंभकर्णस्य जीवितव्ययो जातः स तु सर्वथैव श्लाघ्यः । वस्तुतो धन्यानामेव प्राणिनां संग्रामे प्राणत्यागः संजायते । देव ! क्षीणपापं समुज्वलयशसं च कुंभकर्णं मा शोचः । यतो रणे हतानां शूराणां शोकेन प्रतिक्रिया न भवति । राजन् ! सुदृढोरथः, प्रौढा शक्तिः, कार्मुकं धनुः संख्यातीताश्च शिलीमुखा भवत्सन्निधौ वर्तन्ते । तर्हि चिन्तया किम् ? भुजानां विक्रमस्य च समुचितं क्रियताम् । भ्रातृवधक्रोधश्च क्षिप्रं शत्रुषु विनिपात्यताम् । महाराज ! स्थितेष्वस्मासु विधेयेषु रामः कः ? सौमित्रिः कः ? वराकाः प्लवंगमाश्च के ? इति त्रिशिरसो वाक्यान्मंदशोके दशाननेऽतिकायप्रभृतयो वाढमित्यूचुः । ततस्तेऽपरेऽन्हि पितृशासनं मूर्ध्ना समादाय युद्धार्थं निर्ययुः । अथ ते कपिसैन्यसागरं समासाद्य शरवर्षेण दुःसहं क्षोभाविभ्रमं चक्रिरे । ततः कपिप्रवराणां

यातुधानगणैः सह शिलाशस्त्रास्त्रदुःसहं निर्विभागं युद्धमभूत् । अथ देवान्तकादिभिर्विदारिताः प्लवगाश्छिन्नपक्षा गिरय इव निपेतुः । एवं राक्षसैर्वध्यमानेषु प्लवंगमेषु सुग्रीवशासनादंगदस्तूर्णं नरान्तकमुपाद्रवत् । एतदालोक्य तुरगारूढो नरान्तको महाजवं प्रासं वालिपुत्रवक्षसि चिक्षेप । सोऽस्य शिलापीठकठिनं वक्षस्थलमवाप्य क्षणाद्भग्नाननो भूत्वा निपपात । ततोऽगदः कोपात्तस्य वल्गुवल्गितं तुरंगमं मुष्टिप्रहारेण शीर्णवक्रशिरोधरं चक्रे । ततस्तयोर्द्वन्द्वयुद्धमभूत् । तत्र पूर्वं नरान्तको मुष्टिना वालिसूनुं मूर्ध्नि निजघान । ततो रुधिरक्लिन्नमुखोऽपि वालिनंदनो वज्रकल्पेन मुष्टिना तं प्रतिजघान । येन स सत्वरमेव वीरगतिमवाप । एवं नरान्तके हते त्रिशिरसं पुरस्कृत्य देवान्तकमहोदरप्रभृतयो लब्धलक्ष्यं वालिसूनुं समुपाद्रवन् । एतदालोक्यांगदो देवान्तकाय महापादपं चिक्षेप । रणदक्षस्त्रिशिराः शरैस्तं तिलशश्चकार । ततोऽगदः क्रुधा तस्मै शालशैलावलीं प्राहिणोत् । त्रिशिराः परिघाग्रेण तामपि तूर्णं बभंज । अत्रान्तरे महोदर ऐरावणसमं सुदर्शनं गजं समारुह्यांऽगदं छिन्नतोमरं चक्रे । देवान्तकश्च परिघेण तमपीडयत् । ततो बली गजदंतं समुत्पाट्य तमुरसि प्राहरत् । अथ तैस्त्रिभिर्वीरैर्युगपदाक्रान्तोऽप्यंगदो युधि न व्यचलत् । एतस्मिन्नेवावसरे नीलवज्रांगौ कपियूथपौ तत्रागत्य तैस्त्रिभिः साकं शिलाशस्त्रास्त्रदुःसहं युद्धं चक्राते । ततो मारुतिर्देवान्तकं मुष्टिपादाहतं गतासुं च कृत्वा तत्याज । एवं देवांतके हते त्रिशिरसार्दितो नीलः संज्ञामासाद्य महोदराय भूधरं चिक्षेप । तेन गाढनिष्पिष्टो दुर्लक्षावयवश्च स धरणीपृष्ठे निपपात । एवं पितृव्यं निहतमालोक्य क्रोधमूर्छितस्त्रिशिराः शरैस्तरस्विनां वानराणां कदनं चकार । सोऽथ वायुपुत्राय प्राणहारिणीं शक्तिं प्राहरत् । पवनात्मजस्तां समादाय सहसा बभंज । एतदालोक्य क्षणदाचरः खड्गमाकृष्य स्फारोरसि हनुमन्तं जघान । ततोऽसिप्रहारकुपितो वज्रांगस्तलाग्रेण तमुरसि निजघान । येन च्युतायुधः स मूर्छामवाप्य धरातले पपात । एवं त्रिशिरसि हते महापार्श्वः कोपं कृत्वा गदया प्लवंगमान् पिपेष । सोऽथ त्रिदशभंगदां गदां ऋषभस्योरस्यपातयत् । यया पीडितो महाकपिः कृच्छ्रेण संज्ञामवाप । ततो वरुणात्मजो जवेनास्य गदां हृत्वा तथा जघान । येनाऽसौ मूर्छितो भूत्वा प्राणांस्तत्याज । अत्रान्तरे राहुध्वजेन रथेन राममतिकायो दुद्राव । तमालोक्य राघवो विभीषणं पप्रच्छ । सखे ? शौर्यार्जिताकृतिरयं कः ? तच्छ्रुत्वा सोऽब्रवीत् । रघुराज ! अयं पौलस्त्याग्रजोऽतिकायः । एष धर्मनिष्ठः सदैव सत्यव्रतं पालयति । किम्बहुना । दिवि देवांगना अपि अस्य परमपवित्रं चरित्रं गायंतीति विभीषणेनोक्ते रघुराजस्तं चिरमैक्षत । उक्तं च ।

गुणलुब्धाःसाधवः सदाऽतिविरुद्धेऽपि सादरा भवंति । ततोऽतिकायो निःशस्त्रभग्नभीतपराङ्मुखान् विहाय समरे युध्यमानानां क्षयं चकार । एवं तेन वज्रोपमैः शरैराहतेषु सैन्येषु मैन्दद्विविदमुख्यानामप्यपूर्वः संभ्रमो बभूव । ततो लक्ष्मणोऽभ्येत्य मन्युना तं दीप्तानां बाणानामिव पात्रीचकार । अथाऽतिकायो यान् यान् बाणान् लक्ष्मणाय प्राक्षिपत् । सौमित्रिस्ताँस्तान् विशिखैः खण्डशः कृत्वा न्यपातयत् । एवं लक्ष्मणस्य हस्तलाघवं विलोक्यातिकायोऽतीव विस्मितो बभूव । ततः सौमित्रिणा ललाटे पत्रिणा हतः स श्रमन्नस्तारुणोष्णीष इव भूरि शोणितोऽभवत् । अथ रक्षसा सायकेन वक्षसि हतो रुधिरोक्षितो लक्ष्मणः पुष्पच्छन्नोऽशोक इव चकाशे । ततो रामानुजोऽसौ यदाग्नेयमस्त्रं ससर्ज । वीरोऽतिकायस्तत् सौरास्त्रेण निष्फलं चकार । एवमालोक्य लक्ष्मणो वारुणास्त्रं व्यसृजत् । राक्षसः पवनास्त्रेण तत्प्रतिजघ्ने । ततः सौमित्रिमुक्ताः पत्रिणोऽतिकायस्य ब्राह्मंकवचं विभेद्य क्षितिं प्राविशन् । अथ मारुतिः सौमित्रिं समभ्येत्य कर्णेऽवदत् । सखे ! ब्रह्मदत्तवरं राक्षसं ब्रह्मास्त्रेणैव जहीतिवाक्यं समाकर्ण्य राघवानुजो ब्राह्ममस्त्रं प्रादुश्चकार । किम्बहुना । येनाऽखिलं विश्वमप्यकम्पत । ततस्तदस्त्रं तस्यातिकायस्य दीप्तामप्यायुधपरंपरान्निहत्य स्फुरन्मुकुटकुण्डलं तच्छिरोऽप्याशु जहार । एवमतिकाये देवलोकं गतेऽसुरवाहिनी सहस्रधा क्षिप्रमयासीत् । एवमतिकायप्रमुखान् निहतानाकर्ण्य रावणः पुनः पुनः स्वकुलं शुशोच । अत्रान्तरे मेघनादस्तमुवाच । तात ! विक्रमकालेऽस्मिन् विलापंकर्तुन्नार्हसि । देव ! भुजाधीने शत्रुक्षये नारीजनोचितैर्बाष्पैरलम् । यदि शत्रुकृता चिन्ता तवाऽपि हृदि निमग्ना तर्हिमिथ्याशत्रुजयोर्जितैर्मे यशोभिः किम् ? अहमद्यैव लोकमवानरमराक्षसं च विधाय शस्त्रसेतुनाऽवमानोदधेः पारं गच्छामीति निगद्य सहसा निकुंभिलां जगाम । सोऽथ कृष्णच्छागकण्ठास्रैः पूर्ववत्पावकं हुत्वा युद्धमहीं च गत्वाऽन्तर्हितोऽभवत् । सा रात्रिस्तस्य मायेव वनौकसां दुर्लक्ष्या बभूव । ततो हरिशरीरेषु व्योम्नः प्राणहारिणी शस्त्रपरंपरा पपात । एवं राक्षसप्रेरितशरशूलपरश्वधैः प्लवंगेषु बाध्यमानेषु तुमुलो निर्घोषो बभूव । ततश्छिन्नजानुशिरोग्रीवैः खण्डितपादशिरोरुभिश्च वानरभटैः पृथ्वी दुःसंचारा बभूव । ततो नलनीलसुषेणेषु निहतेषु गजगवाक्षकुमुदद्विविदादिषु च विह्वलेषु शराच्छादितविग्रहो रामो लक्ष्मणं जगाद । वत्स ! ब्रह्मास्त्रेण गर्वितस्य शक्रजितो युद्धं पश्य । अहोवत खलेनाऽनेन पक्वं क्षेत्रमकालेऽशनिवर्षिणा मेघेनेव मम सैन्यं क्षणान्निर्दलितम् । सर्वा दिशो निःसंचारा, व्योम्नि राक्षसा अदृश्या ब्रह्मास्त्रं चाऽप्रतिहतमतोऽत्र प्रतिक्रियां न विद्मः । एतदाकर्ण्य रामवचनं लक्ष्मणो याव-

त्प्रतिवचनं दातुमुत्सहते तावद्राक्षसमायया विमोहितो भूत्वा सहसैव चेष्टां तत्याज । एवमद्भुतं युद्धं कृत्वा विजयोर्जितः शक्रजिल्लंकां प्रविश्य पितुर्हर्षमतनोत् । एवं तस्मिन्निरालोके रजनीमुखे उल्कां प्रज्वाल्य हनूमता सह विचरन् विभीषणः कपिसैन्यं निपतितं विलोक्य विस्मयाविष्टो बभूव । सोऽथ शरतल्पगतं वृद्धं जाम्बवन्तं प्रोवाच । आर्य ! धन्योऽसि । तच्छ्रुत्वा कण्ठप्राणोल्पजीवितश्च जाम्बवान् शनैर्जगाद । पौलस्त्य ! दिष्ट्याऽन्ते त्वत्संगमं प्राप्तवानस्मि । त्वामहं स्वरेण जानामि किन्तु चक्षुषा न पश्यामि । इष्टसंदर्शनं, प्रशंसाश्रवणं, यथाशक्तिदानं च प्राणानां दीर्घप्रवासेऽस्मिन् परं दुःखप्रमार्जनं भणितम् । कच्चिन् मारुतिर्जीवति ? तद्विरहितं जगदिदं निरालोकमिवेति तद्वचः श्रुत्वा विभीषणो मारुतेः समक्षं तत्परीक्षार्थं प्रोवाच । ऋक्षराज ! ययोरर्थे वयं सर्वे स्वजीविते निरपेक्षास्तौ राघवौ कस्मान्न पृच्छसि ? अथवा प्रभुं सुग्रीवं युवराजमङ्गदमन्यान् दयितान् सुहृदश्च परित्यज्य कस्य हेतोर्हनूमन्तमेव पृच्छसि ? तच्छ्रुत्वा सोऽब्रवीत् । रावणानुज ! तस्मिन् संनिहिते रामः सर्वथा कुशली । तस्मिन्हते सर्वं सैन्यं हतं । तस्मिञ्जीवति च सकलं जीवतीति कथयित्वा जाम्बवान् विरराम । अथ रावणानुजस्तस्यैतद्वचनं यथार्थं मत्वा प्रोवाच । महानुभाव ! एष जीवन् हनूमाँस्त्वामवलोकयितुं समायातः । ततो मारुतिर्जाम्बवन्तमभिवाद्य तद्व्यथामनुभूय च निश्चलो बभूव । अथ जाम्बवान् वायुसूनुं पार्श्वस्थं विज्ञाय सादरं प्रोवाच । हरिशार्दूल ! एह्येहि । मे गात्रं च पाणिना स्पृश । दिष्ट्याऽद्य त्वामानंदबांधवमक्षततनुं पश्यामि । सखे ! सुग्रीवादिकपीश्वराणां घोरेऽस्मिन् विनाशकाले त्वमेवैकः परायणमसि । पूर्वं जलधिं समुल्लंघ्य कैलासमारोह । अत्र तत्र स्वर्णशृंगोपरि दीप्तौषधिवर्गं विलोक्य ततो भासुराश्चतस्रो महौषधीस्तूर्णमाहर । विशल्या, वर्ण्या, जीवनी संधिनी चेति तास्त्वयेहाऽऽनीता व्यसनेऽस्मिन् प्रतिक्रियां करिष्यंति । तच्छ्रुत्वा हनूमान् बाढमित्युक्त्वा च ततः प्रतस्थे । सोऽथ सागरं प्रणम्य व्योम्नि पुप्लुवे । ततः स जाम्बवतो वाक्यमनुस्मरन् महर्षिगणसेवितं हिमवन्तं दृष्ट्वाऽतितरां जहर्ष । सोऽथ ब्रह्मकोशाद्रजताद्रिं जगाम । ततः शक्रालयं गत्वा रुद्रनगं प्राप । अथ हयाननं दृष्ट्वा ब्रह्मशीर्षमगमत् । ततोऽग्नियमकुबेरादीनां स्थानान्यतिक्रम्य स पिनाकिनः स्थानं कैलाशमारुरोह । ततस्तद्ग्रहणत्रासात् सहसौषधमंतर्हितम् । एतदालोक्य महावीरः समग्रमौषधिगिरिशृंगमुत्पाट्य जवात्प्रययौ । सोऽथ मुहूर्तेन स्वसैन्यं समासाद्य महौषधिरश्मिभिः सर्वा दिशो वितिमिराश्चकार । ततो दिव्यौषधिगंधेन विशल्यौ रूढव्रणौ च रामलक्ष्मणौ क्षणात्संज्ञामवापतुः ।

एवमौषधिगिरेर्विप्रकीर्णेन सामोदवायुना वानरा अपि विशल्या भूत्वा सुप्तोत्थिता इव बभूवुः । ततः कृतकार्यो हनूमान् तं दीप्तमौषधिशेखरं निजपदे प्रतिष्ठाप्य ततस्तूर्णं समागत्य च सर्वान् सहृदयानानंदयामास । अथ प्रहृष्टाः प्लवंगमाः परस्परं परिष्वज्य राक्षसक्षयशंसिना नादेन क्षोभं चक्रिरे । ततो महौजसस्ते सुग्रीवशासनं समासाद्योल्कासहस्रैर्लंकां प्रदीपयामासुः । अथ दशाननः प्राकाराट्टालमालिकां लंकां प्रदीप्तामालोक्य क्रोधात्प्रजज्वाल । ततस्तदिंगितज्ञौ महासैन्येन कुंभकर्णात्मजौ समरभूमिं गतौ । ततो निशि वानरैः सह रक्षसां घोरे समरे प्रवृत्ते दीप्तायुधांशुभिर्दिशः समुन्मीलिता इव बभुः । अथ तस्मिन्निर्मर्यादे रणे कम्पितारातिः कंपनो गदयांऽगदं जघान । ततस्तयाभिहतो वालिसूनुः पूर्वं तु विचलितोऽभवत् । किंतु पश्चात् स संज्ञामवाप्य गिरिशिखरं चिक्षेप । तत् प्रहारार्दितः कंपनो भुवि न्यपतत् । सोऽथ रुधिरोक्षितोऽपि समुत्थाय पुरः समायातं द्विविदं बाणेन हृदि विव्याध । अथ विह्वले द्विविदे भुवि निपतिते मैन्दः शिलां समुद्यम्य रुषा कुंभमभ्याद्रवत् । एतदालोक्य कुंभः पंचभिः शरैस्तेन क्षिप्तां शिलां निपात्य पृथक्पत्रिणा मैन्दमपि विव्याध । ततो मूर्छिते मैंदे मातुलस्नेहादंगदः कुंभाय द्रुमं प्राहिणोत् । युद्धकोविदः कुंभः शरैस्तं छित्त्वांऽगदमपि बाणविद्धं चक्रे । विलोक्यैतज्जाम्बवत्प्रमुखाः कपयः कोपात्कुंभमभ्याद्रवन् । कुंभः शरवर्षेण तानपि निरुरोध । किम्बहुना ते लज्जया नाभिमुखमाजग्मुर्न च प्रययुः । अत्रान्तरे सुग्रीवोऽभिपत्य सालतालशिलाशतैः कुंभं पीडयितुमारेभे । रणकुशलः कुंभः शरैस्ता द्रुमशिलाश्छित्त्वा सुग्रीवमपि समाच्छादयामास । ततो वीरवरः सुग्रीवो रथमाप्लुत्य कराभ्यां तस्य कार्मुकं द्विधा विधाय च प्रोवाच । निशाचर ! दर्पे रावणाधिकं बले कुंभकर्णाधिकं शौर्ये च मेघनादाधिकं त्वां जाने । साम्प्रतं मे भुजयोर्वेगं पश्येति ब्रुवाणं सुग्रीवं राक्षसो मुष्टिनाऽवधीत् । ततः कोपाकुलः सुग्रीवस्तं मुष्टिना प्रतिजघान । येन कुलिशेन भूधर इव कुंभो धरातले निपपात । एवं सुग्रीवेण कुंभे हते निकुंभः परिघाघातैः कपिवाहिनीं पिपेष । सोऽथ मारुतिवक्षःस्थले परिघमपातयत् । येन पवनात्मजश्चकंपे । ततो व्यथितोऽपि हनूमान् मुष्टिना निशाचरं निजघान । एतदालोक्य निकुंभो भुजबन्धेन हनूमन्तं परिवेष्ट्य पीडयामास । ततो मारुतिः स्वपौरुषेण भुजपंजराद्विमुक्तिं लब्ध्वा पृष्ठे निपतितं क्षपाचरं मुष्टिप्रहारैर्भग्नशिरोधरं च कृत्वा न्यपातयत् । इत्थं हनूमता निकुंभे निहते प्लवंगसंगरे रक्षसां कोऽप्यपूर्वो भंगोऽभूत् । ततो रावणशासनात् खरसुतो मकराक्षो योद्धुमभ्याययौ । सोऽथ शरैः कपिवाहिनीं विदार्य क्व रामः क्व लक्ष्मण इति परान् मुहुर्मुहुरपृच्छत् । सोऽथ रामं

समासाद्य प्रोवाच । राम ! त्वामद्य रणांगणे निपात्य पितृवधात् क्रुधः पारं गच्छामीत्यभिधाय विविधैः शरै राममाच्छादयत् । एतदालोक्य रामः शितैर्बाणैस्तदुत्सृष्टां शरवृष्टिं छित्त्वाऽस्य रथं सूतं धनुश्चापि चिच्छेद । ततः कोपाकुलो राक्षसो राघवाय ज्वलनप्रभं शूलं चिक्षेप । शस्त्रास्त्रप्रयोगदक्षो रामः सहसा त्रिभिः शरैस्तं चकर्त । ततो दष्टौष्ठो राक्षसस्तिष्ठ तिष्ठेति गर्जन् राघवं दुद्राव । एतदालोक्य रामः पावकास्त्रं प्रादुश्चकार । येन निर्भिन्नहृदयो निशाचरो भूमितले निपपात । एवं मकराक्षे हते कोपाद्विजयोर्जितो मेघनादो राक्षससेनाग्रगो भूत्वा पुनर्युद्धभूमिं समागच्छत् । सोऽथ प्लवंगमै राक्षसानिके समावृते क्रुद्धो रुद्र इव तेषां संहारं चकार । किम्बहुना । बाणेनैकेनैव स यातुधानो नव सप्त च वानरान् प्रधने जघान । एवं नलनीलगंधमादनादिषु तद्बाणभिन्नदेहेषु दश दिशो विद्रुतेषु स पुनरपि नगरं प्रविश्य पितृशासनात् पूर्वोक्तेनैव विधिना हुताशनं तर्पयामास । ततः स तिरोहितो भूत्वा यत्र सलक्ष्मणो रामोऽयुध्यत तत्र गतवान् । सोऽथ तयोरुपरि दुस्सहं शरासारं ववर्ष । येन क्षणेन बाणमयो लोकोऽभवत् । एवमिन्द्रजिद्भुजनिर्मुक्तैः शरैर्यदा रामलक्ष्मणावदृश्यौ बभूवतुस्तदा दिवौकसामपि विस्मयोऽभूत् । एतदालोक्य करुणानिधी रामः सर्वभूतक्षयभयात् तच्छरोत्करं सेहे । तस्मिन्नेवावसरे कपटविग्रहो मेघनादो रथे मायामयीं सीतां कृत्वा कृपाणेन च तां हन्तुं समुद्यतोऽभवत् । एतदालोक्य पापिष्ठ ! विषमं कर्म मा कृथा इति ब्रुवाणो मारुतिर्गिरिशृंगं समुद्यम्य च तमभिदुद्राव । ततः पश्यतो मारुतेः स नृशंसः खड्गेन साक्रंदां सीतां निहत्य तत्र चिक्षेप । ततो मारुतिर्जवात् पर्वतोपमां यां शिलां राक्षसाय चिक्षेप । चतुरसारथिर्वश्यतुरंगैस्तं रथमपसार्य तां विफलप्रयासां चक्रे । अथ शरीरनिरपेक्षाणां हरीणां राक्षसैः सह घोरं युद्धं प्रावर्तत । एतदालोक्य मेघनादः शत्रुजयाय निकुंभिलां गत्वा विधिना होमं कर्तुं प्रचक्रमे । ततो मंत्राभिसंस्कृतोग्निः प्रजज्वाल । अत्रान्तरे पवनात्मजः प्राणत्यागकृतोद्यमान् प्लवंगमान् प्रोवाच । सखायः ! यदर्थमयमुद्योगः सा सीता सती तु रक्षसा हता । साम्प्रतं भाग्यतिरस्कृता वयं रामाय वृत्तमावेद्य यथोचितं करिष्यामः । इत्युक्त्वा सोऽञ्जनीतनयो महासेनां विनिवर्त्य यत्र सानुगो राघवोऽतिष्ठत्तत्र प्रययौ । ततो राघवः श्रमश्वासप्रयासितैः कपिबलैर्युक्तं मारुतिमायान्तं दृष्ट्वा सहसा सादरो बभूव । अथ हरिपुंगवो धैर्यं विहाय रामं जगाद । देव ! त्यक्तधैर्योऽहं दुःसहं विज्ञापयितुं त्वां समुपस्थितोऽस्मि । संहारसारेऽस्मिन् संसारे त एव सुखभागिनः संति । ये प्रियजनस्य क्षयमदृष्ट्वैव परलोकं यान्ति । श्रीमती पतिव्रता सीता विनष्टचेष्टैरस्माभिः शक्रजिता

हृता सीताऽवलोकितेतिवाक्यमाकर्ण्य महामोहेनाहतः स्रस्तबाणशरासनो रामः सहसा भूमौ निपपात । अथ लक्ष्मणस्तं भुजाभ्यां परिष्वज्य सगद्गदमुवाद । अहोवत लोकः सदाचारे मिथ्यैव सादरो भवति । यस्य फलोदयः षंढस्य सुत इव निष्फलोऽद्य मयाऽवलोकितः । धर्मं धिक् । यद्दुःखार्हा अपि धर्मिष्ठाः कष्टं लभन्ते । पापाय पुनः पुनः प्रणतिरस्तु । यस्मिन् संसक्तो जनः प्रत्यहमभ्युदयमभ्येति । श्रीमताऽऽर्येण मिथ्यैव क्लेशाय धर्मः परिसेवितः । तेन धर्मेण किं यो विपत्कालेऽपि स्वभक्तं नहि रक्षति । धर्मानुरोधादेव श्रीराघवेण पितृवाक्यं मत्वा वंशक्रमागतं राज्यं परित्यक्तम् । प्रज्ञा, श्रुतं, यशः, रूपं, वयः, कुलं च सर्वं धनेनैव लभ्यते । किन्त्वेतैर्धनं नैवाप्यते । केलिलीलासु बालकः, संभोगसमये युवा, संमानपूजासु च वृद्धो धनवानेव भवति नाऽपरः कश्चित् । तेषां शीलं तेषां कुलं तेषामेव च प्रगल्भताऽस्ति । येषां गजेन्द्राणामिव समुज्ज्वला भूतिर्विभूषणं वर्तते । निर्धनो बंधुर्लज्जया जनैः पर इत्युच्यते । धनाढ्यः परोऽप्यभिमानार्थं परैर्बन्धुरिति समभिधीयते । येन धनं नोपार्जितं तेन नूनं धर्मकामौ हतौ । तेन पुष्पफलं छिन्नं येन तरुमूलं हतम् । मित्राणां बांधवानां च ते जंतवो न जीवंति । येषां जीवितस्यापि जीवितं धनं न विद्यते । जना धनहीनं स्वजनं तु त्यजंति किन्तु सधनं कुष्ठिनं प्रेम्णा परिरक्षंति । किम्बहुना धनहीनः पिता पुत्रेण त्यज्यते । निर्धनश्च पतिः पत्न्याऽपि परिभूयते । रघुशार्दूल ! समुत्तिष्ठ । मया च सायकैर्युधि निहतं पौलस्त्यजं च पश्य । इति लक्ष्मणेनाभिहिते युद्धासक्तो विभीषणो विपुलं संघातं दृष्ट्वा सहसा तं देशं समाययौ । सोऽथ भूतलाखण्डलं रघुनाथं भुवि स्थितं विलोक्य तान् कष्टकारणं पप्रच्छ । सोऽथ हनुमन्मुखात्सीतामरण वृत्तान्तं श्रुत्वा धिगेतन्मिथ्यावृत्तमिति सासूयमुवाद । ततः स सस्मितमवादीत् । देव ! शीघ्रमुत्तिष्ठ । रावणे जीवति न कश्चित्तां हन्ति । किम्बहुना । दुरात्मनस्तस्य तत्प्रणये वांछा हतस्याऽपि नहि शाम्यति । एषा तु मेघनादस्य मायाऽस्ति । स निकुंभिलायामग्निं हुत्वा घोरेऽस्मिन् संहारकर्मणि प्रवृत्तः । कर्मण्यपूर्णे तस्य वधे शीघ्रमुद्यमः क्रियताम् । समाप्तकर्माणं तु तं सुरासुरा अपि जेतुं न शक्ताः । तव शासनात् । सौमित्रिस्तूर्णं तं हन्तुं तत्र प्रयातु । एषा मायामयी सीता हता । त्वं वृथैव शोकं मा कृथाः । अपूर्णे यागसमये यो युद्धधीस्त्वामुपेष्यति तस्य त्वं वध्योऽसीति विधिः पूर्वमिन्द्रजितं प्रावोचत् । निशम्यैतद्विभीषणवचनं रघुनंदनस्तथास्त्विति व्याहृत्य च विगतशोको बभूव । अथ राघवशासनात् प्लवगसैन्येन वृतः सौमित्रिर्मेघनादेन सह योद्धुं प्रययौ । सोऽथ विभीषणादिष्टवर्त्मना निकुंभिलां गत्वा तत्र मेघसंघातसन्निभं राक्षसव्यूहं ददर्श । ततः स विभीषण

गिरा वाणैराक्षससैन्यं विदार्य तस्येन्द्रजितः क्रतुदीप्तिं सुदृश्यां चक्रे । एतदालोक्य कोपाविष्टो मेघनादः सहसा यागमुत्सृज्य युद्धार्थं निश्चक्राम । एवमसमाप्ते मखविधौ निर्गते रावणतनये उभयोरेव सैन्ययोर्महान् सुभटक्षयो बभूव । ततो रावणात्मजो घोरघोषेण रथेन मारुतिं समुपाद्रवत् । एतदालोक्य विभीषणानुमत्या लक्ष्मणः सपदि तत्पुरतोऽभूत् । ततो मेघनादः समीपस्थ विभीषणं प्रोवाच । रे कुलांगार ! त्वं नितरां शोच्योऽसि । यत् स्वजनं परित्यज्य शत्रूणां किंकरत्वं गतोऽसि । यः स्वजनं परित्यज्य परपक्षं समाश्रयति स कृतघ्नः । स्वार्थसाधनानन्तरं तमप्येकदा त्यक्ष्यत्येव । किम्बहुना । त्वद्दर्शनसंक्रान्तपातकस्याऽस्य नेत्रस्य वर्षशतैरपि वैमल्यं न जायते । निशम्यैतन्मेघनाद-वचनं विभीषणः प्रत्यवदत् । अहो स्वजनवात्सल्यात्त्वं गुणवानिव संभाषसे । मया दुरा-चारस्तव पिता पुनः पुनः प्रबोधितः । मह्यं पापं नहि रोचते । योऽत्र यद्वृत्तः स तद्वृत्ते रमते-ऽत्र संदेहो नास्ति । त्वं वृथैव मामुपालभसे । न्यग्रोधान्तर्हितेन त्वया निकुंभिला वने हुत्वा यद्युद्धं कृतं । तत्किं कपटकृत्यं नास्ति ? एतदाकर्ण्य कोपादिन्द्रजित् पुनः सौमित्रिमुपेत्यं शरासारैः संपूरयामास । एतदालोक्य लक्ष्मणोऽपि स्वशरैस्तस्य सायकान् प्रतिजग्राह । उक्तं च "शूरो हि शूरं जानाति न च कातरः" अथेंगितज्ञो विभीषणो लक्ष्मणं जगाद । सखे ! हताशोऽयं शत्रुस्ते वधमर्हति । तच्छ्रुत्वा प्रत्युत्पन्नमतिर्लक्ष्मणः कार्मुकमाकृष्य रात्रिं सहसा पत्रिमयं व्यधात् । ततो रणदक्षो मेघनादो लक्ष्मणशरार्दितोऽपि विभीषणहनुमत्प्रमुखान् वाणैर्विदार्य सौमित्रिमपि समाच्छादयामास । ततोलक्ष्मणः स्व रक्षणं कृत्वा विशिखैरस्य हेममयं कवचमपि सत्वरं चिच्छेद । एतदालोक्य तीव्रकोपविधुरः सोऽपि निजदोर्दंडतोमरैर्घोरं कपिसंहारं चकार । अथ विभीषण-गिरा जाम्बवत्प्रमुखा अपि रणे घोरं रक्षसां क्षयं चक्रुः । ततो विभीषणो युद्धेऽ-ग्निमिव वर्धमानं मेघनादं विलोक्य विपुलोत्साहान् मारुतिप्रमुखान् प्रोवाच । भद्राः ! बल-वत्तरैर्भवद्भिः शत्रुसैन्यं हन्यताम् । यतोऽस्मिन् स्वल्पावशेषेऽपि कार्येसर्वथा विलम्बो नोचितः । सखायः ! यद्यपि राघवार्थं ममाकार्यं लोके किंचिन्न विद्यते । तथापि स्वहस्तेना-ऽस्य वधे मे घृणा स्वयमुपजायते । एवमभिधाय स्वयं रावणानुजोऽशनिगौरवैः शरै राक्षसचमूं जघान । एतदालोक्य शक्रजित् तूर्णं तं शिलीमुखैः संपूर्य लक्ष्मणमपि सायकांकितं विदधे । किम्बहुना । तयोस्तदद्भुतं युद्धं द्रष्टुं जंभारिप्रमुखा देवा अपि विमा-नान्यारुह्य समाययुः । ततः कृतहस्तयोस्तयोराधानसंधानलक्ष्यलाघवमौष्ठवे कश्चिदप्यन्तरं न ददर्श । अथ दिनाधिनाथे पिहिते सुरसिद्धर्षिसंघेषु त्रस्तेषु तमसा संवृताः ककुभः प्रलयोपद्रवं

प्रापुः । ततः सौमित्रिः शरेण तस्य सूतं न्यपातयत् । अत्रान्तरे प्लवंगमास्तुरंगमाञ्जघ्नुः । अथ विरथोऽपि रावणिः शरैः सौमित्रिं समाच्छाद्य विभीषणायाऽप्युग्रं याम्यमस्त्रं विससर्ज । एतदालोक्य लक्ष्मणः कौवेरास्त्रेण तदस्त्रं निपात्य वज्रिणा समर्पितं रौद्रास्त्रं समाददे । सोऽथ रामो यदि सत्यधर्मास्पदं तदा तु तेन सत्येन मेऽस्त्रं साफल्यं प्रयात्वित्युक्त्वा मेघनादाय व्यसृजत् । ततस्तेन महास्त्रेण कृत्तं शक्रजितः कुंडलमण्डितं शिरः सपदि निपपात । एतदालोक्य रामदले हर्षस्वनोऽभवत् । रावणसैन्ये च हाहाकारो बभूव । अथ सौमित्रिर्विभीषणप्रमुखैः सहाऽग्रजं द्रष्टुं प्रययौ । ततो राघवो मेघनादं हतं श्रुत्वाऽपि लक्ष्मणं निकृत्तांगं च दृष्ट्वाऽतीव व्यथितो बभूव। सोऽथ साश्रुलोचनो भ्रातरं परिष्वज्याऽङ्के धृत्वाऽस्य शल्यसंहतस्रुतशोणितगात्रं च पस्पर्श । ततो रामशासनात् कपियूथपः सुषेणो विशल्यकरणीं दिव्यां महौषधिमाजहार । ततो लक्ष्मणस्तां समाघ्राय क्षणाद्विशल्यो निर्व्रणश्च बभूव । अत्रान्तरे दशमुखः पुत्रं निपातितं श्रुत्वा छिन्नशीर्षः फणीव न ददर्श न च शुश्राव । ततो लब्धसंज्ञः स शोकक्रोधाग्निसंततैः श्वासैर्दिशो दहन्निव मुहुर्मुहुः शक्रजितं शुशोच । हा देवराजविजयोदारयशः कुसुममाधव ! व्यसनकालेऽस्मिन् मामेकाकिनं परित्यज्य क्व यातोऽसि ? अहोवत मघोनोऽपि भयदीक्षागुरुर्गुरुस्तव भुजस्तंभः कथं नाम लक्ष्मणे लघुतां गतवान् ? वत्स ! त्वया पुत्रेण पिनाकिनश्च वरेण मम शिरसां श्लाघ्या समुन्नतिर्जाता । अधुनाऽस्मिन् मम जीविते राज्ये च का शोभा ? यस्य कुलचूडामणिः सुरेन्द्रजित्पुत्रो हतः । हा हा पुत्र ! सहसा क्व गतोऽसि ? वृद्धस्य मम विलापं श्रुत्वा क्षणमात्रं स्वाननं दर्शयेति प्रलापिनस्तस्य शोकः क्रोधाग्निना पुनः प्रजज्वाल । ततः स मेघनादवधे सीतामेव मूलकारणं मत्वा खड्गेन सीतां हन्तुमशोकवनिकां जगाम। ततः कृपाणपाणिं तं विलोक्य पतिव्रता सीताऽतीवभयभीता बभूव । अथ सुपार्श्वो नाम वृद्धराक्षसो दोर्भ्यामाकृष्य सीतां हन्तुं रावणं दृष्ट्वाऽस्यक्रोधमूर्छितस्य व्यवसितं विनिन्दन्नवदत् । राजन् ! पूर्वं तु विशुद्धतमे परमेष्ठिकुले जन्म, ततस्त्रिजगद्विजयोर्जितं दिक्षु विश्रुतं चरितम्, अथ वेदविभूषिता बुद्धिः, पुनर्मानोन्नतं च शिरो, यथा तव वर्तते। तथाऽन्यस्य कस्य लोके समवलोक्यते ? स त्वं सत्त्ववतामग्र्यो भूत्वा स्त्रीवधे कथमुद्यतोऽसि ? पौलस्त्य ! श्रुतं, विवेकः, दमः, कारुण्यं, साधुसमागमश्च पंचैते मोहप्रपंचेऽस्मिञ्जगति पापसंचयवंचकाः संति । एतामबलां तूर्णं त्यज । सहसा कीर्तिविप्लवं मा कृथाः । किम्बहुना । यैरिन्द्रजिद्धतस्तेष्वयं कोपो विनिपात्यताम् । इति सुपार्श्वेनेत्यभिहिते दशाननो विनिवृत्य संग्रामकर्मणि निजानीकं समादिदेश । ततो दुर्मदा

राक्षसा गजवाजिभिर्मेघप्रस्ता इव दिशः कुर्वन्तो युद्धाय विनिर्ययुः । अथ प्रभाकरे समुदिते प्लवंगमैः सह तेषां शस्त्रास्त्रप्रस्तरनिर्घर्षामलपिंगलं युद्धमवर्तत । तस्मिन्नवसरे नखदंतप्रहारिणां वानराणां शतं शतमेकैकस्य च रक्षसोऽग्रे समदृश्यत । ततो राक्षसक्षयदीक्षितो रामचापश्चुकूज । किम्बहुना । कृष्टैरद्धोद्धतैर्निर्गतैर्निष्पतद्भिश्च रामचापच्युतै र्विशिखैर्दशाऽपि दिशो नाऽदृश्यन्त । अथं हस्ती हतः, सोऽश्वो निपातितः, अत्र रथः, समुन्मथितस्तत्र सारथिर्मृत इति राक्षसानां विपुलः शब्दो बभूव । ततो रामशराशनिनिर्भिन्ना निशाचरा दिवि दिक्षु महीतले च भयाद्रामसहस्राणि विलोकयामासुः । एवं रामप्रयुक्तेन संमोहनास्त्रेण मोहितास्ते रजनीचराः शक्तिशूलप्रासासिपट्टिशैः परस्परं जघ्नुः । ततश्छिन्नोरुबाहुचरणैः स्तब्धाननशिरोरुहैः पतितैराक्षसानीकैश्च पृथ्वी निःसंचारा बभूव । अथ भुजशालिषु राक्षसवर्गेषु भग्नेषु हतशेषाः क्षपाचरा यत्रास्ते पौलस्त्यस्तत्र तूर्णं जग्मुः । ततो निहतनाथानां राक्षसयोषितां करुणस्वनः प्रलाप उदभवत् । अहोवत पावकशिखेव मनस्विनी सीता राक्षसेन्द्रेण स्ववर्गक्षयायैव हृता । जगत्यस्मिन् समरे को रामशराशनिं सोढुं शक्तः ? यस्य प्रतापाग्नौ पतित्वा नक्तंचराः पतंगवन्नाशं याताः । हा ! खरमारीचविराधादयःक्षणदाचरा रामस्य विप्रियं कृत्वा तूर्णमेव यमालयं गताः । यो वालिकंकालं कोपकापालिकस्य केतुतान्निनाय । स रामो राक्षसेन्द्रेण कथन्न श्रुतः ? लंकासंरोधबन्धुना सेतुबंधेन तथा कुंभकर्णवधेनाऽपि दशाननो न प्रबुद्ध इति गृहे २ राक्षसानां विपुलप्रलापमाकर्ण्य सामात्यस् तुरंगसैन्यसमेतश्चः दशग्रीवः निर्ययौ । ततो राक्षसा वानरान्प्रति शरीरान्तकरान् शरखड्गपरिघपट्टिशपरश्वधान् चिक्षिपुः । वानरा अपि शैलान् द्रुमांश्च राक्षसान्प्रति प्राक्षिपन् । एवं संग्रामे प्रवृत्ते यद्रज उदपतत् । तद्रक्षसां वानराणां च शोणितविस्रवैः शांतमभूत् । ततो वानरास्तीक्ष्णैर्नखैर्दशनैश्च रक्षसां कर्णललाटनासिकाश्चकर्तुः । तस्मिन्नवसरे यथा शकुनयो वृक्षमन्वधावन् तथा वानरा एकैकं राक्षसमन्वसरन् । एतदालोक्य पर्वतोपमाः राक्षसा घोरान्वानरान्निजघ्नुः । एवं राक्षसैर्विध्वस्ता वानरचमूः शरण्यं रघुपतिं जगाम । ततो महातेजा रामो धनुरादाय राक्षससैन्यं प्रविश्य च शरवर्षं ववर्ष । एष गजानीकं हंति महारथानेष निहंति, तीक्ष्णैः शरैरेष वाजिभिः सह पदातीन् छिनत्तीति राक्षसानां कोलाहलो ऽभवत् । ततो गान्धर्वास्त्रेण मोहिता राक्षसा रणे रामसहस्राणि पश्यंतिस्म । अथाग्निशिखोपमैः शरैरेकेन रामेण कामरूपिणां रक्षसां चतुर्दशसहस्राणि निहतानि । एतदालोक्य सगंधर्वा देवगणा रामस्य तत्कर्म साधुसाध्विति वदंतः समपूजयन् ।

अथ क्रुद्धो दशाननः कपीनामनीकेषु महत्कदनं चकार । एतदालोक्य कृत्तगात्राः कपयः क्रोशन्त इतस्ततो दुद्रुवुः । ततो दुर्निमित्तान्यनुभवन्नपि रावणो रणे त्वरितं राघवमाससाद । अस्मिन्नेवावसरे सुग्रीवो रणे भग्नान् कपीन् दृष्ट्वा गुल्मे च सुषेणं निक्षिप्य युद्धे मतश्चक्रे । एतदालोक्य सर्वे वानरयूथपास्तमनुजग्मुः । ततो वानरेश्वरो ऽनेकान्निशाचरान् ममर्द । ततो विरूपाक्षो रथादवतीर्य गजस्कंधमारुरोह । ततः स शिलीमुखैर्बहून् वानरान् गतप्राणान् कृत्वा भूमौ न्यपातयत् । एतदालोक्य क्रुद्धः कपीश्वरः पादपप्रहारेणाऽस्य गजं निजघान । ततः पदातिर्निशाचरः खड्गं नीत्वा सुग्रीवमाससाद । अथ सुग्रीवो यां शिलां प्राक्षिपत् । राक्षसोऽपक्रम्य तां खड्गेन विनिवार्य च वानरेश्वरं प्राहरत् । ततस् तेनाऽऽहतो वानरो विसंज्ञ इव मुहूर्तमात्रंभूमावभवत् । सोऽथ सहसोत्थाय राक्षसवक्षसि मुष्टिं पातयामास । ततः सहनशीलो राक्षसोऽस्मै यावच्छूलं प्रक्षिपति । ततः पूर्वमेव वानरोऽस्य शंखदेशे वज्रोपमं तलं न्यपातयत् । तेनाभिहतः स पृथिव्यां निपपात । एतदालोक्य वानरा जहर्षुर्निशाचराश्च शुशुचुः । ततः स्वबलसंक्षयेण विरूपाक्षवधेन च रावणो दैवविपर्ययं मेने । सोऽथ समीपस्थं महोदरं प्रोवाच । महाबाहोऽस्मिन्काले मे जयाशा त्वय्येवास्ति । त्वमितो गत्वा शत्रुं जहि । तच्छ्रुत्वा महोदरस्तथाऽस्त्विति व्याहृत्य च पतंगः पावकमिव रिपुसेनां विवेश । सोऽथ भर्तृवाक्येन वानराणां कदनं चक्रे । एतदालोक्य महासत्वा वानरा अपि विपुलाः शिलाः प्रक्षिपन्तो ऽखिलं जघ्नुः । ततो महोदरः शरैर्वानराणां पाणिपादोरु जघान । ज्ञात्वैतत् सुग्रीवस्तद्वधाय महीधरशिलां चिक्षेप । रणदक्षो महोदरस्तामापतन्तीं शिलां बाणैर्बिभेद । ततः सुग्रीवः सालमुत्पाट्य चिक्षेप । राक्षसस्तमपि चिच्छेद । अथ सुग्रीवो भुवि पतितं परिघं समादाय तेनास्य हयान् जघान । एतदालोक्य राक्षसो रथादवप्लुत्य च गदां जग्राह । ततो गदापरिघहस्तयोस्तयोर्द्वंद्वयुद्धमभूत् । ततः क्रुद्धो रजनीचरोऽस्मै गदां चिक्षेप । हरीश्वरः परिघेण तामाजघान । अथ सुग्रीवो वसुधातलादायसं मुसलमुद्यम्य प्राक्षिपत् । सोऽप्यस्य गदां चिक्षेप । एवं तावन्योऽन्यमासाद्य महीतले पेततुः । ततो भिन्नायुधौ तौ मुष्टिभ्यां युयुधाते । अथ राक्षसो भुवि पतितं कृपाणं नीत्वा तं सद्यावर्मणि पातयामास । कपिकुंजरोऽप्यन्येन खड्गेनास्य प्रहारं विनिवार्य पृथक् प्रहारेणाऽस्य शिरश्चकर्त । एतदालोक्य रावणदलं सहसा विगतप्रभं बभूव । एवं महोदरे निहते महापार्श्वोऽङ्गदचमूं मार्गणैः क्षोभयामास । सोऽथ शिलीमुखैः सुग्रीवस्य पश्यतः कपिमुख्यानामुत्तमांगानि चिच्छेद । एतदालोक्य कोपाकुलो बालि-

सूनुः परिघमादाय महापार्श्वे पातयामास। तेन प्रहारेण स विचेतनो भूत्वा स्यन्दनान्निपपात। ततो महापार्श्वो मुहूर्ताच्चेतनां लब्ध्वांऽगदं भूयोऽपि बाणैर्विव्याध। सोऽथ त्रिभिर्बाणैर्जाम्बवन्तं चतुर्भिश्च गवाक्षं जघान। एतदालोक्य क्रोधमूर्छितोंऽगदो भुजाभ्यां परिघं भ्रामयित्वा महापार्श्वाय चिक्षेप। सोऽस्य सशरं धनुः शिरस्त्राणं च न्यपातयत्। ततोंऽगदस्तलेनाऽस्य कर्णमूलेऽभ्याहनत्। अथ महापार्श्वोऽतिवेदनामपि विस्मृत्य तैलधौतं परश्वधं वालितनये पातयामास। लघुगतिर्वालिसूनुः प्रहारं तं सहसैव निवारयामास। ततो रणकुशलोंऽगदस्तस्य राक्षसस्य स्तनाभ्याशे मुष्टिं न्यपातयत्। तेनास्य राक्षसस्य हृदयं प्रास्फुटत्। सोऽथ गतप्राणो भूत्वा पृथ्वीतले निपपात। एवं महोदरमहापार्श्वावपि हतौ दृष्ट्वा कोपकंपितो रावणः सूतं प्रोवाच। सारथे! ऽद्याहं तौ रामलक्ष्मणौ हत्वा हतानाममात्यानां निरुद्धस्य नगरस्य च दुःखमपनेष्यामि। सोऽथ रथघोषेण दिशो नादयन् सहसा राघवमभ्याद्रवत्। एतदालोक्य हृष्टो राघवः कार्मुकं जग्राह। अत्रान्तरे लक्ष्मणः प्रथमं योद्धुमिच्छन् धनुरानम्य पावकशिखोपमान् बाणान्मुमोच। एतदालोक्य महातेजा रावणो बाणैर्बाणान् प्रत्यवारयत्। ततो दशाननो लक्ष्मणमतिक्रम्य रणेऽपरं शैलमिव स्थितं दाशरथिमाससाद। सोऽथ पूर्वं रामाय शरवर्षाणि व्यसृजत्। राघवस्तीक्ष्णैर्भल्लैस्तांञ्छरौघांश्छिच्छेद। ततो राघवो रावणं रावणश्च राघवमन्योऽन्यं विविधैः शरवर्षैर्विव्यधतुः। एवमन्योऽन्यजयकांक्षिणोस्तयोर्वृत्रवासवयोरिव महायुद्धमभूत्। ततो रावणो रामललाटे यां नाराचमालाममुंचत्। वीरराघवो रौद्रचापप्रयुक्तां तां शिरसा धृत्वाऽपि व्यथां नाऽभ्यपद्यत। अथ मंत्रानभिजपन् क्रोधमूर्छितो रामो पि रावणाय यान् विशिखांश्चिक्षेप। ते कवचं स्पृष्ट्वैव पतितास्तस्य व्यथां नाजनयन्। ततो रावणो वराहादिमुखान् बाणान् रामं प्रति ससर्ज। ते सर्वेऽपि राघवास्त्रसमाहताः सपदि विलयं जग्मुः। एतदालोक्य हृष्टाः कपयः पुनः पुनर्दाशरथिं प्राशंसन्। अथाऽन्येद्युर्दशाननो मयविहितं रौद्रास्त्रं राघवायोत्स्रष्टुं प्रचक्रमे। अत्रान्तरे गदाशूलमुसलमुद्गरा अपि राक्षसगणैः प्राक्षिप्ता निपेतुः। महामतिदाशरथिर्गांधर्वेणास्त्रेण तदस्त्रं जघान। एतदालोक्य रावण अस्त्राणि प्राक्षिपत्। राघवो बाणैस्तान्यपि चिच्छेद। ततो रावणो दशभिर्बाणै रामं मर्मसु विव्याध। गिरिगौरवो राघवो बाणविद्धोऽपि नाकंपत। अत्रान्तरे रामानुजो रावणाय सप्त बाणान् प्राक्षिपत्। तैः सायकैः सारथिर्हतो धनुर्भग्नं ध्वजश्च निपतितः। अस्मिन्नेवावसरे विभीषणः समुत्प्लुत्य गदयाऽस्य घोटकाञ्जघान। ततः कोपाकुलो रावणो विभीषणाय शक्तिं चिक्षेप। लक्ष्मणस्त्रिभिः शरैस्तामप्राप्तामेव चिच्छेद। एतदालोक्य कोप-

कम्पितो दशाननोऽष्टघंटारवोत्कटां मयकृतां शक्तिं लक्ष्मणायोत्ससर्ज । त्रिदशत्रासकारिणी सा तस्य हृदयं भित्त्वा सहसा वसुधां विवेश । अथ रामो मूर्छितं लक्ष्मणं विलोक्य विह्वलोऽभवत् । ततः स्वस्त्यस्तु लक्ष्मणायेति निगद्य कराभ्यां च तां समाकृष्य बभंज । सोऽथ ससुग्रीवं हनूमन्तं प्रोवाच । वानरोत्तमा ! लक्ष्मणं परिवार्यैव तिष्ठंतु । अहमधुनैव देहं पातयामि वाऽर्थं साधयामि । अथवा भ्रातरं विना युद्धेन किम् ? प्राणैर्वा किम् ? साम्प्रतं तु विजयोऽपि मह्यं न रोचते । किं बहुना:—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥

हा सुतवत्सलां सुमित्रां किन्नु वक्ष्यामि ? कौसल्यां वा किं कथयिष्यामि ? यदा भरतः "येन सह वनं यातः सम्प्रति तेन विना कथमायात" इति प्रक्ष्यति तदाऽहं तं किन्नु व्याहरिष्यामि ? हा मयाऽन्यजन्मनि किं दुष्कृतं कर्म कृतं । येन मे धार्मिको भ्राताऽग्रतो निहतः स्थितोऽस्ति । हे भ्रातः ! मां विहाय कथमेकाकी परलोकाय प्रस्थितोऽसि ? वत्स ! शीघ्रमुत्तिष्ठ । विलपन्तं मां किमर्थं न भाषसे ? एवं ब्रुवाणं रामं समाश्वासयन् सुषेणोऽब्रवीत् । पुरुषोत्तम ! वैक्लव्यकारिणीमिमां बुद्धिं त्यक्त्वाऽस्य सुप्रभं मुखं विलोकय । नेदृशं रूपं गतासूनां दृश्यते । रघुवीर ! वृथा विषादं मा कृथाः । शत्रुसूदनोऽयं सप्राणोऽस्ति । सोऽथ समीपस्थं मारुतिं प्रोवाच । सखे ! शीघ्रमितो हिमालयं गत्वा दक्षिणे शिखरे जातां महौषधिं समानय । विशल्यकरणीं, सावर्ण्यकरणीं, संजीवकरणीं तथा च संधानीं त्वं सम्यगवगच्छमीत्यभिधाय सुषेणो विरराम । ततो हनूमान् गरुडगत्या तत्र गत्वा सुषेणनिर्दिष्टं तमौषधिगिरिमेव समानिनाय । अथ तस्मात्सुषेणोद्धृतां संजीवनौषधिं नासायोगेन समाघ्राय लक्ष्मणः सद्यः पूर्ववत् स्वास्थ्यं समवाप्तवान् । अथाऽपरेऽह्नि रावणो मायाविनिर्मितं पृथुहयोदग्रं च रथं समारुह्य युद्धार्थं समाजगाम । क्षितितलस्थस्य काकुत्स्थस्य रथस्थस्य रावणस्य च क्रूरक्रोधोद्धतं युद्धं प्रावर्तत । एतदालोक्य देवगंधर्वकिन्नरा नैतत्समं युद्धमित्याहुः । तच्छ्रुत्वा देवराजो मातलिं समाहूय मम रथेन शीघ्रं रघुनाथं याहीत्यादिदेश । ततो मातलिर्बाढमित्युक्त्वा हरितहयैः स्यन्दनोत्तमं संयोज्य त्रिविष्टपादवतीर्य च काकुत्स्थमुपाजगाम । अथ रामो मातलिमुखान्महेन्द्रशासनं समाकर्ण्य रथं समारुरोह । ततो रामरावणयो रोमहर्षणं युद्धं बभूव । तत्र रावणशरासनमुक्ताः शराः सर्पा भूत्वा राघवमभ्यवर्तंत । एतदालोक्य रामो घोरं गारुत्मतमस्त्रं प्रादुश्चक्रे । ततस्ते सुपर्णरूपाः सहसा तान्जघ्नुः । अथ क्रुद्धो दशाननः शरव-

हस्तेण राममर्दयित्वा मातालिमपि विव्याध । किम्बहुना । ऐन्द्रानश्वानपि जघान । अस्मिन्नवसरे रावणराहुणा ग्रस्तं रामचन्द्रं विलोक्य सविभीषणा वानरेन्द्रा व्यथिता बभूवुः। ततो रामं सुसंक्रुद्धं दारुणानुत्पातांश्च विलोक्य रावणस्याऽपि भयं बभूव। तस्मिन् समये राक्षसास्तु रावणं विजयी भवेत्याहुः । देवगणाश्च दाशरथिं विजयं लभस्वेत्यूचुः । ततो रावणः शूलं गृहीत्वा राघवाय चिक्षेप। रणदक्षो राघवः शरौघेण सपदि तमापतन्तं वारयामास । एतदालोक्य यदा क्रोधाविष्टो राक्षसोऽपरं शूलं प्राक्षिपत् । तदा रामोऽपि वासवसंमतां शक्तिं चिक्षेप । तया भिन्नो गतद्युतिश्च शूलो धरातले निपपात । ततो देवाः साधुसाध्विति वदन्तो रामं प्रशशंसुः । अथ क्रुद्धो राक्षसाधिपो राघवोरसि शरसहस्राणि निजघान । एतदालोक्य शोणितसमादिग्धोऽपि काकुत्स्थो विहस्य रावणं परुष वचनं प्रोवाच । राक्षसाधम ! जनस्थानात् त्वया मम भार्याऽज्ञानाद्धृता । तस्मात्त्वं वीर्यवान्नासि। कापुरुषोचितं कर्म कृत्वा शूरोऽहमिति मन्यसे। दुर्मते ! तस्याद्य सुमहत्फलमवाप्नुहि । मंदात्मन् ! दिष्ट्या मम नयनगोचरोऽसि । त्वामिदानीं सायकैर्विद्ध्वा यमालयं नयामीति वदन् स समीपस्थं रावणं शरैरवाकिरत् । अत्रान्तरे विदितात्मनो रामस्याग्रे सर्वाण्यस्त्राणि प्रादुर्बभूवुः । ततो हरीणामश्मनिकरै राघववाणवर्षैश्च हन्यमानो दशग्रीवो ऽतितरां विघूर्णहृदयो बभूव । एतदालोक्य प्रत्युत्पन्नमतिः सारथिर्जलदस्वनं रथं विनिवार्य समरात्सुरक्षितं स्थानं जगाम । अथ कृतान्तबलचोदितो रावणः सारथिमवोचत् । दुर्बुद्धे ! मामवज्ञाय किमर्थं शत्रुसमक्षं मे रथमपवाहितवान् । किम्बहुना । अनार्य ! त्वयाऽद्य मम चिरकालमुपार्जितं यशः, तेजः, वीर्यं, प्रत्ययश्चापि विनाशितः । यावद्रिपुर्नाभ्येति तावद् द्रुतं मम रथं निवर्तय । तच्छ्रुत्वा सूतः सानुनयं प्रोवाच। देव ! माऽन्यथा गणय । तस्मिन् समये मे वाजिनो रथोद्वहनखिन्ना अभूवन् । बहूनि दुर्निमित्तान्यपि च प्रादुरभवन् । प्रभो ! भर्तृस्नेहपरीतेन मया यत्कृतं तत् क्षमस्व । निशम्यैतत्सूतवचनं संतुष्टो रावणस्तस्मै हस्ताभरणं दत्वा प्रोवाच। भद्र! शीघ्रमिमं रथं राघवाभिमुखं प्रापय। ततः सारथिर्द्रुतं घोटकान् प्रचोद्य क्षणेन रामरणाग्रतो बभूव। अत्रान्तरेऽगस्त्यो भगवान् रामं समुपेत्य प्रोवाच । महाबाहो ! सनातनमादित्यहृदयाख्यं स्तोत्रं शृणु । यज्जपमात्रेण नरः सर्वत्र जयं लभते । एषोऽर्यमा आदित्यः इन्दुपोषकः उमेशः ऋषिरक्षकः, एकाकी, ऐश्वर्यदः ओङ्कारस्वरूपः, अंशुमान् कमलबन्धुः खगसुखदः, गभस्तिमान्, घनानंददाता, चक्रवाकसुहृत्, छंदोनिधिः जगच्चक्षुः, तमोहन्ता, दिवाकरः, धनदः, निरुपमः, प्रभाकरः, पूषा फलदाता, ब्रह्ममूर्तिः, भगः, भास्करः, मित्रः, यमपिता, रश्मि-

माली, लोकपालमणिः, विभवदः, शुद्धः, सहस्रार्चिः हरिदश्वश्चाऽस्ति । एनमेव पूर्वं प्रणम्य ततः कार्यमारभस्व ।

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानामीशाय दिनाधिपतये नमः ॥
जयाय जयभद्राय हर्यश्वाय नमोनमः ।
नमोनमश्चण्डधाम्ने आदित्याय नमोनमः ॥
नम उग्राय वीराय सारंगाय नमोनमः ।
नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तुते ॥
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सवभक्षाय श्रीरौद्रवपुषे नमः ॥
तमोघ्नाय हिमघ्नाय शत्रुघ्नायाऽमितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥
तप्तचामीकराभाय हरये विश्वकर्मणे ।
नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥

देव ! त्वमेव सुप्तेषु जागर्षि । त्वमेवाग्निहोत्रफलं वितरसि । त्वमेव सर्वेषु लोकेषु परमप्रभुरसि । एवं यः पुमान् भक्त्याऽऽपत्सु भयेषु कान्तारेषु च भगवन्तं दिनाधिनाथं स्तौति । स सदैव विजयं युद्धे समवाप्स्यति । रामभद्र ! त्वमस्मिन् क्षणेऽवश्यमादित्यं स्मरेति निगद्य महामुनिरगस्त्यो यथागतं जगाम । अथ रामः श्रीमदादित्यदेवं प्रेक्ष्य तं प्रणम्य च तुष्टाव । ततस्त्रिराचम्य धनुरादाय च विजयार्थं रावणमुपागमत् । एतदालोक्य रावणोऽपि युद्धार्थं तत्परो बभूव । ततो रामो बालचन्द्राननं धनुर्विस्फालयन् मातलिं प्रोवाच । सारथे ! रिपुरथं दृष्ट्वाऽऽशु सावधानो भव । निशम्यैतद्रामवचनं मातलिर्दशग्रीवरथमपसव्यं कुर्वन् चक्रसंभूतरजसा तमाच्छादयामास । ततः क्रुद्धो रावणः सायकै राममवधूनयामास । अथ परस्पराभिमुखयोर्दृप्तसिंहयोरिव महायुद्धमभूत् । अत्रान्तरे रावणविनाशाय दारुणोत्पाताः समुत्पेतुः । ततो येन येन पथाऽस्य रथो याति । तेन तेन मार्गेणैव भ्रममाणं गृध्रकुलमेनं पुनः पुनः प्रधावति । अथ तस्य च रथाश्वा अकस्मान्नेत्रेभ्योऽश्रूणि मुमुचुः । तस्मिन्नेवावसरे रामस्य शिवानि निमित्तानि प्रादुर्भूतानि । ततो राघवरावणौ निमित्तानि विलोक्याऽपि ह्यभीतवद्युयुधाते । अथ रावणो ध्वजमुद्दिश्य यान् बाणान् प्राक्षिपत् । ते तमनासाद्य धरणीतले निपेतुः । ततो रामः

केतुमुद्दिश्य यं सायकं समर्ज । स रावणध्वजं भित्त्वा महीं जगाम । एतदालोक्य रोपताम्राक्षो रावणः शरवर्षं ववर्ष । रामोऽपि स्वदाक्षिण्येन तत्प्रतीकारं चकार । ततो रावणो गदामुषलवर्षेण रामं रणे प्रत्यर्दयत् । किम्बहुना । रामरावणयोर्युद्धं रामरावणयोरिव निरुपमं बभूव । ततो मातली रामं स्मारयामास । रघुराज! त्वमस्य वधाय ब्रह्मास्त्रं विसृज । सुरैर्योऽस्य विनाशकालः कथितः सोऽद्य वर्तते । तच्छ्रुत्वा राघवो वेदोक्तविधिना ऽगस्त्यदत्ते कार्मुके ब्रह्मदत्तं शरं संदधे । ततः संक्रुद्धः स कार्मुकं भृशमायम्य रावणाय मर्मविदारणं शरं चिक्षेप । स वज्र इव रावणोरसि न्यपतत् । सोऽथ रावणप्राणान् हृत्वा धरणीतलं प्रविवेश । ततो नैर्ऋतेन्द्रो रथाद्वज्रहतो वृत्र इव भूमौ निपपात । एतदालोक्य हतशेषा निशाचरा भयमवाप्य सर्वतो दुद्रुवुः । ततोऽन्तरिक्षे त्रिदशदुंदुभिर्व्यनदत् । सुखप्रदश्च वायुर्ववौ । अथ प्रतापपुंजो राघवः सुग्रीवांगदविभीषणान् सफलमनोरथान् कृत्वाऽत्यानंदमवाप । एवं स्थिरप्रतिज्ञो दाशरथिः प्रतिज्ञार्णवं समुत्तीर्य कृतकृत्यो बभूव । ततो विभीषणो रणे भ्रातरं निहतं दृष्ट्वा विललाप । वीर ! नीतिशास्त्रपारदृश्वाऽपि त्वं दुराग्रहमवलम्ब्य शत्रुणा निहतः किं भुवि शेपे ? हा प्रहस्तमेघनादकुंभकर्णादिभिर्दर्पान्न प्रबोधितस्तस्योदर्कोऽयं समुपस्थितः । हाऽद्य सुनीतीनां सेतुर्गतः । सुहृत्तानां गतिर्गता । सत्त्वरथ संक्षेपः पलायितः । वेदमूर्तिधर्मस्य च विग्रहस्तिरोहितः । इति शोकग्रस्तस्य विभीषणस्य परिदेवनं श्रुत्वा रामः प्रोवाच । सखे ! नैवं विधा रणशूराः शोच्यंते । समरे नैकान्तविजयः कदाचनभूतपूर्वः । वीरः परैर्हन्यते वा परान्निहंति । एवं बहुविधैर्वाक्यैः प्रबोधितो विभीषणो धैर्यं धृत्वा रघुपतिं प्रत्यवदत् । प्रभो ! सत्यमेतत्तथापि सहसा ममता न विनश्यति जीवस्य । देव ! तव प्रसादात्संप्रत्यस्य प्रेतकृत्यं कर्तुमिच्छामीति विभीषण वचः श्रुत्वा राघवो जगाद । भद्र ! वैराणि तु मरणान्तानि भवंति । नः प्रयोजनं वृत्तम् । अतोऽस्य संस्कारः क्रियताम् । अधुनाऽयं यथा तव तथा ममापिसत्कारार्हः । अत्रान्तरे समरे सुरैरप्यवध्यं दशाननं हतं श्रुत्वा मंदोदरीप्रमुखाऽन्तःपुरांगनास्तूर्णं तं देशमाययुः । ततस्ता गतासुं तं गाढमालिंग्य बाष्पसलिलं सृजन्त्योऽतितरां शुशुचुः । नाथ ! येन त्रिदशा अपि विवशाः कृताः । सोऽद्य परैर्निःशेपितस्त्वं कथं भूमौ शेपे ? आर्यपुत्र ! कैलासोल्लासलांछना एते तव भुजा मंत्रात्ता भुजगा इव भूभागे शेरते । प्राणपते ! रूपलुब्धेन पतंगेन पावकशिखेव त्वयाऽऽत्मविनाशाय जानकी स्पृष्टा । येन जलनिधिः स्थलीकृतः कुंभकर्णश्च रणे निपातितः । स त्वया काकुत्स्थो मर्त्य इति कथं मिथ्या चिन्तितः ? नूनमयं विष्णुर्मानुषरूपेण पृथिव्यामवतीर्णः । नाऽत्रात्र संदेश-

लेशः । प्रभो ! पूर्वं तु हितैषिणां बान्धवानां वचनं नाङ्गीकृतम् । किन्त्वधुना रजःपुटेनेव मुखं ह्रिया किं विनिगूहसे ? परस्त्रीलुब्ध ! स्वदारानपि परित्यज्य कथं गच्छसि ? अधुना साधुसंमतोऽयं विवेकस्तव केनोपदिष्टः ? अनाथा एते सामात्या भृत्याः सनाथा भविष्यंति । वसुन्धराऽप्येषा पुनर्भर्तारं समवाप्स्यति । किन्तु त्वयि नाथे गते विनाथोऽयं वधूजनः कं शरण्यमुपयास्यति ? ततो मंदोदरी बहुमानात् तं परिष्वज्य प्रोवाच । नूनं पतिव्रतातपसा त्वं दग्धोऽसि । लोके शुभकृच्छुभं पापकृच्च पापफलं लभते । महाबाहो ! दैवयोगाद्वानराणां राक्षसानां तव च विनाशोऽयं समुपस्थितः । हा सत्यवाक्यस्य देवरस्याऽपि वाक्यं त्वया न श्रुतं तस्यैतत्फलं विद्यते । एवं नानाविधैर्वाक्यैर्विलप्य रावणज्येष्ठपत्नी मुहुर्मुहुःस्वदौर्भाग्यमपि निनिन्द । अत्रान्तरे तत्रागतो विभीषणोऽपि भ्रातृजायां प्रबोधयामास । ततो रघुपतिवाक्यात् त्वरमाणो विभीषणो हतं भ्रातरं रावणं संस्कारयितुमारेभे । सोऽथ लंकां प्रविश्य रावणस्याऽग्निहोत्रं निर्यापयति स्म । ततोऽश्रुपूर्णमुखा द्विजा वस्त्रालंकारपुष्पादिभिर्विभूषितं रावणं पताकाभिरलंकृतायां सौवर्णीशिविकायां प्रतिष्ठाप्य विभीषणं पुरस्कृत्य च दक्षिणस्थं श्मशानक्षेत्रं ययुः । ततस्ते तत्र चंदनकाष्ठैश्चितां रचयित्वा पितृमेधविहितं कर्म प्रचक्रुः । अथ विभीषणः स्नात्वाऽर्द्रवस्त्रेण तिलदर्भविमिश्रितान् सलिलांजलीन् विधिवत् प्रेताय समर्पयामास । सोऽथ ताः स्त्रियः पुनः पुनः सांत्वयित्वा ताभिः सहैव नगरं विवेश । ततः स रामपार्श्वं गत्वा विनीतवत् तस्थौ । अथ विमुक्तकवचः शिथिलीकृतकार्मुकश्च रघुपतिः प्रीत्या मातलिं विसृज्य सौमित्रिमुवाच । वत्स ! संप्रति पूर्वोपकारिणोऽस्य विभीषणस्य राज्याभिषेकमहोत्सवं द्रष्टुमिच्छामि । अनुरक्तस्य सदैव हितानिरतस्य स्निग्धस्य च मित्रस्य कृत्स्नाऽपि पृथ्वी स्वल्पमूल्यमस्ति । निजयशः शुभ्रोष्णीषविभूषणो विभीषणो लंकाशासनमलंकरोतु । एवंविधः सदाचारसम्पन्नो विद्वान् कृपालुश्च प्रभुः प्रजाभिर्महापुण्यैः समवाप्यते । धनी दानशीलः, गुणवान्नम्रः, शूरः क्षमावान्, द्विजोऽक्रोधी, भूपतिश्च धर्मनिष्ठः सर्वमेतत्कृतयुगस्य मूलम् । किम्बहुना । श्रुतशीलदयादाक्षिण्यादिसद्गुणेषु विभीषणोपमो बुधेषु विबुधेषु च कोऽपरोऽस्ति ? सद्वर्त्मनिस्थितं तनयं, व्यसनग्रस्तं शत्रुं, विभवारूढं च मित्रं पुण्यात्मान एव पश्यंति । संसारवारिधेः सन्मित्रं, सत्कलत्रं, सत्पुत्रः सद्गुरुः सद्भर्ताचेति रत्नोत्तमानि संति । सोऽयं मम मान्यः सुहृदभिषेकार्द्रः क्रियताम् । इति रघुनाथेनोक्ते शुभलक्षणो लक्ष्मणः स्वर्णरत्नघटन्यस्तसर्वौषधिफलाक्षतैर्मंगलैर्विभीषणं मित्रं साम्राज्यसंपदां क्षेत्रं विदधे । ततोऽभिषिक्तो विभीषणः कृपासागरं रघुनाथं समस्तं मित्रवर्गं च मुहुर्मुहुर्हृदयेनाऽभ्यनंदत् । अथ

रघुनाथशासनान्मारुतिः सन्तुष्टः सन् सीतामुपसृत्य तस्यै च विजयवृत्तान्तमावेदयामास । साऽथ भर्तृसंदेशं श्रुत्वाऽमृतनिर्झरैः क्षीबेव क्षणं वक्तुन्न शशाक । ततश्चिरेण जनकात्मजा पवनात्मजं बभाषे । मारुते ! हर्षाधिक्येन निरुद्धं मे वचनं न प्रवर्तते । अस्य प्रियाख्यानस्य मूल्यं सर्वैषा वसुन्धरा । अतः किमहं ते ददानि ? महोपकारिन् ! दैन्येन मे चेतः संतोषं नाधिगच्छति । निशम्यैतत्सीतावचनं मारुतिर्वैदेहीं प्रत्यभाषत । मातः ! तवेदं वचनमेव परमपारितोपिकमस्ति । त्वमिदानीं हतामित्रं स्वप्राणेशं पश्य । याभिस्त्वं कृच्छ्रे तर्जिताऽभूस्तासां निग्रहं आज्ञयैव कुर्विति मे प्रसादः सत्वरं विधीयताम् । इत्युक्ते वायुपुत्रेण सीता जगाद । वीर ! परतंत्रासु प्रेष्यासु क्रोद्धुं नार्हसि । यतो महाशयो वधार्हेऽप्यपराधे क्षमामेव समालम्बते । इति व्याघ्रस्य पुरतः कश्चिन्मुनिरभाषत । इति वैदेहीवचनं श्रुत्वा स प्रतिनिवृत्य यत्र राघवोऽतिष्ठत् । तत्राऽऽययौ । सोऽथ तस्मै सानंदां जानकीं विनिवेद्य प्रोवाच । प्रभो ! देवी त्वां द्रष्टुमुत्कण्ठते । एवं हनूमतो वाक्यमाकर्ण्य धिया सुचिरं विचार्य च हर्षशोकसमाविष्टो राघवः कृच्छ्रेणोवाच । कृतोदको गताशौचश्च स्वयं राजा विभीषणो स्नातामलंकृतां च सीतां समादाय समुपगच्छतु । एतदाकर्ण्य पावनिर्लंकां गत्वा विभीषणाय सीतार्थं यथावृत्तं निवेदयामास । अथ वृद्धामात्यैः परिवृत्तो विभीषणः स्नातां शशिमुखीं वस्त्राभरणभूषितां रत्नशिविकारूढां च सीतां कृत्वा काकुत्स्थं प्रति जगाम । ततः कौतुकाकुला वानराः सीतां समालोक्य वैदेही किन्नु वक्ष्यति ? रामश्च किं प्रतिवक्ष्यतीति जिज्ञासमाना बभूवुः । धन्याऽस्याः कान्तिर्यदर्थमयं रावणो निहतः । शीघ्रमेव दम्पत्योः समागमो भवत्विति वदन्तः सर्वे वानराः समुत्सुका दत्तदृष्टयश्च तस्थुः । ततो विभीषणो वेत्रिप्रवरैर्दर्शनसंगतं जनं निरस्य प्रणतिपुरस्सरं प्रोवाच । रघुराज ! कलानिधेः कौमुदीव किं वा मूर्ता जयश्रीरिव च श्रीमती जानकीयं तवाग्रे स्थिता । निशम्यैतत् लंकेशवचनं रघुपतिः क्षणं प्रमोदक्रोधदैन्यानां तुल्यं विधेयतां प्राप । सोऽथ राजसेवकान् प्रोवाच । किमर्थमयं जनो मिथ्या पुरः प्रोत्सार्यते । युद्धसहायका इमे स्वजनाः कथं नु परतां प्राप्ताः ? विस्मयावहोऽयं सेतुरपि पुरुषार्थमेषां प्रकटयति । राज्ञः प्रजाः पुत्रपक्षे वर्तन्ते । तस्माल्लोका विहाय संकोचं वैदेहीं पश्यंतु । व्यसनोत्सवयुद्धेषु राजदारा नादृश्या भवंति । नार्यो यथा शीलेन पूज्या भवंति । तथा नाऽन्तःपुरैर्नपटव्यवधानैर्नपुरो जनोत्सारणैश्चाऽपि । यथा विद्या विवेकेन शोभते । सरस्वती सत्येन दीप्यते । प्रज्ञा धर्मेण राजते । तथा नारी शीलेन प्रकाशते इति रघुनाथेनोक्ते राक्षसैः सह वानराः समुपसर्पन्तीं सीतां ददृशुः ।

अथ रामाश्रिरसंभृतलावण्यनालितान्तामवलोक्य सहसा कोपस्नेहाकुलो बभूव । ततः स तद्वदनांभोजाद् दृशमपसार्य संकोचात् क्षितिं निरैक्षत । अथ सुग्रीवलक्ष्मणप्रभृतय एवं प्रत्याख्यातामधोमुखीं च तां दृष्ट्वा वाससा मुखमाच्छाद्य भृशं रुरुदुः । अथ कोपाग्निना प्रज्वलन् काकुत्स्थः प्रोवाच । वैदेहि ! यद्यपि दारहरणे यत् कुलोचितं वैरनिर्यातनं कर्तव्यमासीत् । तत्समरेऽस्माभिःकृतं । तथापि लज्जावमानपंकेन यन्मेऽखिलं यशोलिप्तं तन्निहताराातिवनितावाष्पाम्बुनिर्झरैरपि न क्षालितम् । सम्प्रति त्वमितो गच्छ । ते दशापि दिशः स्वाधीनास्संति । परिभूतस्य मानिनः, कृशधनस्य दातुः, दारेषु च च शंकितस्य, कुतो निद्रा ? कुतश्च सुखम् ? त्वमधुना देवराणां गृहे वस । वा सुग्रीवगृहं गच्छ । अथवाऽत्रैव तिष्ठ । किम्बहुना । गतत्रपस्य खलस्य च गृहे स्थितां त्वां परधृतां मालामिव कथं नु धारयामि ? इति प्रियस्याऽप्यप्रियवचनमाकर्ण्य निर्दोषा सीताऽश्रुबिन्दुभिः कुचयोरसूत्रहारं विदधे । ततो मृगेक्षणा सा वस्त्रेण वाष्पजलं परिमृज्य दीर्घं निश्वस्य च प्रोवाच । अहो नाथ ? त्वया जनसन्निधौ कुलवधूरहं परुषं श्राविता । ते साशंकं मनः स्थाने । भवंति हि स्त्रियस्तरलाशयाः । किन्तु प्रभो ! त्वं तु सर्वज्ञोऽसि । पुनः कथमेवं भाषसे ? अहं जनकराजकुले जाता । दशरथस्नुषा रामपत्नी भूत्वा च कथमिमां दूषणां सहे ? प्राकृतस्त्रीसमुचितैरसंगतैः प्रलापैः किम् ? मिथ्याव्यलीकस्याऽस्यप्रमाणं मे हुताशनदेव एव । सौमित्रे ! शीघ्रं चितां रचय । नाऽहमिदानीं जीवितुमुत्सहे । तच्छ्रुत्वा शोकविह्वलो लक्ष्मणो राघवेङ्गितं विज्ञाय वैदेह्या मिथ्यादोषस्य भेषजं जातवेदसं दुःखसदृशं ज्वलितं विदधे । ततः पतिव्रता जनकात्मजा पावकाभिमुखी भूत्वाऽभ्यधात् । देव ! मनोवाककायचेष्टाभिर्यथाऽहं रघुनाथात्परं दैवतन्नाभिजानामि । तेन सत्यव्रतेन मां पाहीत्युक्त्वा देवेभ्यो ब्राह्मणेभ्यश्च मनसा प्रणामं कृत्वा सपदि हुताशनं प्रविवेश । अत्रान्तरे महेन्द्राद्या लोकपालाः शिवविरिंचिप्रभृतयो देवगणाश्च विमानारूढा दृष्टिगोचरा बभूवुः । अथ ते दशरथं पुरस्कृत्य रामं प्रोचुः । रघुवीर ! पृथग्जन इव निजकीर्तिमिव विशुद्धां सीतां कथं त्यजसि ? अहोवताऽच्युत ! स्वयमात्मानमपि त्वं न जानासि ? जगन्निवासस्य तव प्रभावः कथं विस्मृतः ? ततः शक्रप्रेरितो विधाताऽब्रवीत् । रघुनाथ ! त्वं साक्षान्नारायणोऽसि । त्वमनंतः, आदिपुरुषः, इंदिरापतिः, ईश्वरः, उमेशसखः, एकः, ऐश्वर्यवान्, ओंकारमूर्तिः, कमलापतिः, खगेशवाहनः, गदाधरः, घनश्यामः, चतुर्भुजः, छलरहितः, जगन्नाथः, तपःफलदाता, देवाधिदेवः, धर्मरक्षकः, नारायणः, पद्मनाभः, फलदः, ब्राह्मणप्रियः, भव्यदर्शनः, मर्यादापुरुषोत्तमः,

यज्ञकर्ता, रमाकान्तः, लक्ष्मीनिवासः, विष्णुः, शांतिसागरः, सर्वदेवमयः, हरिः, क्षमासिन्धुः, त्राता ज्ञाननिधिश्चाऽसि । किम्बहुना । तव गुणा वर्णनातीताः । तव सर्वावतारलीलासु विस्रंभसाक्षिणी लक्ष्मीरेषा जनकनंदिन्येव । इति पितामहेनोक्ते स्वयं भगवान् विभावसुः सीतां समादाय प्रत्यदृश्यत । सोऽथ काकुत्स्थं समभ्येत्य प्रोवाच । रघुकुलकेतो ! इमां पवित्रमूर्तिं सीतां गृहाण । अत्र विमोहजननीं मिथ्या शंकां कर्तुं नार्हसि । तच्छ्रुत्वा कृतांजली रामः प्रत्यभाषत । देवदूत ! तव शासनादियं वैदेही मया गृहीता । किंत्वस्याः शुद्धिः संसारप्रत्ययकारिणी विहिता । अत्रान्तरे महेशशासनाद् दिवि स्थितो दशरथोऽपि रामं जगाद । वत्स ! यथा सुपुत्रेणाऽष्टावक्रेण कहोलस्तारितस्तथाऽहं त्वया संतारितोऽस्मि । एषा स्नुषाऽपि धन्या । यस्या नामस्मरणमात्रेण मंगलं जायते । पुत्र ! ममवरात्त्वं स्वच्छन्ददेहविरहो भविष्यसि । एतदाकर्ण्यपितृवाक्यं प्रणतशेखरो रामस्तथास्त्विति व्याजहार । ततो राजोवाच । प्रियवर ! कौसल्यानंदन ! यो मद्विप्रवासकोपस्ते केकयीं प्रत्यभूत् । या तदुद्भूतो भरतेऽभवत् । तयोः शापो विनिवर्ततामित्युक्त्वा राजाऽन्तर्हितो बभूव । ततो राघवो न्यायमवलम्ब्य हतानां कपिवीराणां जीवितं ययाचे । अथ शक्रोत्सृष्टेन पीयूषवर्षेण सहसैव लब्धजीवा वानराः समुत्तस्थुः । ततो रघुपतिं समाभाष्य पुनः पुनस्तं पूजयित्वा च ससिद्धगन्धर्वा देवा यत्र तत्र प्रययुः । अथ रामवचसा रत्नैर्वानरानापूर्य स्वपुरीं गन्तुमुद्यतो विभीषणस्तमुवाच । कृपासिन्धो ! अहं देवराजस्येव भवदभिषेकं द्रष्टुमिच्छामि । इदं मयनिर्मितं विमानाग्र्यं पुष्पकं समारुह्य सनाथीक्रियताम् । एतदाकर्ण्य जानकीजानिस्तथेत्युक्त्वा सानुजः सविभीषणश्च तद्विमानं समारुरोह । ततो वानरराजस्य बलजयोर्जितं सैन्यं त्रिविक्रम इव भुवनोल्लंघनाय समुद्यतमपि राघवाज्ञया कैलाससंनिभं पुष्पकमारुह्य वेगाद् गगनं जगाहे । ततो रत्नमण्डितेन पुष्पकेन व्रजन्नागो व्योम्नः क्ष्मां विलोकयन् वैदेहीं जगाद । देवि ! एतद्रणांगणं यत्र मेघनादप्रभृतयो वीरा वीरगतिं प्राप्ताः । भामिनि ! एनं तरंगमालिनं रत्नाकरं पश्य । यं तीर्त्वा मारुतिनन्दनोऽस्माकं महोपकारं कृतवान् । सोऽयं गिरिनिबद्धः सेतुर्मया तवहेतोर्बद्धः । येन भुजोर्जितानां प्लवगर्षभाणां यशांसि सततं तरंति ।

अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः ।
सेतुबंध इतिख्यातो महापातकनाशकः ॥

सोऽयं महेन्द्रो यत्र जलधिलंघनसमये मारुतिर्विश्राममनवाप्य हताशो बभूव । जानकि ! एतदनंगरंगं माल्यवतः शृंगं संदृश्यते । यत्कन्दरे रत्नोज्ज्वला वानरराजजुष्टा राजधानी विराजते ।

प्रियतमे ! त्वया विहीनेन मयाऽस्यशिखरे नवमेवकालः कृच्छ्रेण नीतः । किम्बहुना । सेन्द्रायुधानि वारिदमण्डलानि नृत्यन्मयूराणि वनानि च स्मृत्वा मे चेतोऽद्यापि वियोग-दुःखं न जहाति । प्राणेश्वरि ! एतत्पंकजपरागपिशंगं सारसनादहृद्यं च पंपासरः । यस्य च तीरे वियुक्तैश्चक्रवाकैः सह मया त्वद्विरहे बह्व्यो निशा नीताः । सुमुखि ! स एवाऽयं वनस्पतिरस्ति । यत्र गृध्रराजस्त्वदर्थे हतः ! यशः शरीरः सन् स सर्वत्र जनसाधुवादं शृणोति । सुभ्रु ! पवित्रकीर्तेरगस्त्यस्यायमाश्रमः । अयं च महामुनेरत्रेः । उभयत्रा-ऽपि स्वाभाविकं वैरं विहाय पशुपक्षिणो निवसंति । हंसगते ! सोऽयं चित्रकूटो यत्र सौजन्यसुधाकरेण भ्रात्रा भरतेन मे समागमो बभूव । मानिनि ! समुद्रपत्नीनां गंगा-यमुनासरस्वतीनां संगमप्रदेशं तीर्थराजं पश्य । यत्र स्नानात् पूतात्मनां तनुत्यजां तत्व-ज्ञानेन विनाऽपि शरीरबंधो नास्ति । शुचिस्मिते ! ऽत्र नेत्रसुखप्रदो भरद्वाजमुनेराश्रमो विभाति । यस्याऽविदूरे मेऽत्तया प्रीतिरिव गुहनगरी विराजते । इयं सा सरयूरस्ति । या ब्राह्मनरसः समुद्भूवा रघुराजधानीमयोध्यां भूषयति । एषाऽयोध्या नगरी । या भरतकीर्तिरिव सौधशतैर्विराजत इति निगद्य रामः श्रीभरद्वाजं द्रष्टुं विमानादवततार । ततः स मुनिमवाप्य तं विधिवत्पूजयामास । सोऽथ तस्मात् सप्रजस्य राज्ञो भरतस्य कुशलं निशम्यैतस्मै शुभसमाचारमावेदयितुमभिन्नहृदयं पवनात्मजं विससर्ज । अथ मारुतिः प्रभुशासनेन पूर्वं गुहाय सर्वमावेद्य ततो धर्म्यं भरतधाम जगाम । सोथ महा-व्रतकर्पिताङ्गं भरतं दृष्ट्वा प्रणम्य च पुनः पुनस्तस्य भ्रातृस्नेहं प्रशशंस । ततः स पूजां समवाप्य रघुनंदनस्य सीतावियोगव्यसनार्तिकृच्छ्रं दशाननोच्छेदवृत्तं चास्मै निवेद-यामास । ततो भरतः सुग्रीवविभीषणाद्यैर्विजयश्रीसचिवैः सह सीतासहायं रघुपतिं समायातं श्रुत्वा नवेन हर्षेण निस्पन्दमूर्तिर्बभूव । सोऽथ शनैर्धैर्यं समासाद्य पुनर्जातमिव जगदाकलय्य च कराग्रेण कपिं स्पृशञ्जगाद । सखे ! दिष्ट्या स महाभागः कुशली हतारिश्च त्वत्तोऽत्र श्रुतः । किन्तेऽस्य प्रियाख्यानसुखस्य मूल्यं हेम्नः कोटीसहस्राणि ददानि ? इह प्रहर्षो वर्षशतादपि जीवन्तं नरं समायातीति सत्योऽयं किल लोकवादो मेऽपि योग्यं प्रतिभा तीत्युक्त्वा पुरोत्सवसत्क्रियासुप्रकृतीर्नियोज्य सामात्यो भरतो जननीजनेन सार्धमग्रजं पुरस्कर्तुं प्रतस्थे । अथ भरतो वानरानीकमहाब्धिमध्ये समायान्तमनंतकीर्तिं च राघवं विलोक्य प्रहृष्टो दूरात्प्रणनाम । ततः सरामो रामो महाव्रतकर्पिताङ्गं भरतं मुहुर्मुहुः समालिङ्ग्याऽमृताभिषिक्त इव बभूव । सोऽथ स्वयं कुबेराय विमानं समुत्सृज्य कुलगुरुं वशिष्ठं प्रणम्य च जननीजनं ववंदे । ततो भरतेन न्यास इव स्वराज्ये रामाय समर्पिते

लोकाः पुनः पुनर्भरतं प्रशशंसुः। ततस्तत्र राघवेण भरतस्य गुणप्रकर्षे वर्ण्यमाने विलज्जिताभ्यां सुग्रीवविभीषणाभ्यामन्यत्र सर्वे तथेत्याहुः। अथ नूतनसंगमेन प्रहृष्टाः सर्वे मिथः प्रणामैः परिष्वज्य ते भ्रातरस्ता जनन्यः सीतायाः स्नुषाश्च चिरं ननंदुः। ततो दशवदनकारागारबंधनमुक्तानानाकौकसां कलत्रैः समर्पितकुसुमैराकीर्यमाणो रघुराजचन्द्रः स्वां पुरीं प्रविवेश। ततो विशुद्धवेशाः पुष्पोज्ज्वला रत्नविभूषिताश्च ते राघवा वसन्ते वृक्षा इव तारुण्यमवाप्य बभुः। अथ कौशल्यया वसनमाल्यरत्नाभरणैः प्रसाधिता तन्वी मैथिलराजपुत्री नवचैत्रलक्ष्म्या विभूषिता लतेव चारुतरा बभूव। ततः सुग्रीवागिरांऽगदप्रभृतयो वानरपुंगवाश्चतुर्भ्यः सागरेभ्यो नदीशतेभ्यश्च जलपूर्णान् सुवर्णकुंभान् समानीयाऽऽजग्मुः। अथ महर्षिवशिष्ठप्रमुखैः समस्तमुनिभिर्वेदोक्तविधिनाऽभिषिक्तः सागतवृंदैर्विविधोपहारैश्च संपूजितो रत्नासने राजा रराज। एवं श्रीमद्रामचन्द्रराज्याभिषेकोत्सवं दृष्ट्वाऽऽकाशे देवसिद्धगंधर्वा मिथः प्रोचुः। महाभागाः! यथैव चरिताभिरामो रामस्तथाविधं नृपं नैव स्मरामः। तस्मिन्महोत्सवे महनीयकीर्तेस्तस्य यशःशुभ्रं छत्रं शत्रुघ्नो दधार। सुग्रीवविभीषणौ श्वेतचामराभ्यां रघुपतिमसेवेताम्। सुरासुरेन्द्रैः प्रहिता नवरत्नाभरणपूरितहस्ताः समुद्रा अव्यग्रतया राघवेन्द्रमुपतस्थुः। ततोऽयोध्याधिपतिर्नलनीलांगदजाम्बवत्प्रभृतिभ्यो वानरपुंगवेभ्यो यथार्हं दिव्यविभूषणानि प्रादात्। एभिर्भूधरविग्रहास्ते शक्रचापसंविभक्ता मेघा इव बभुः। अथेंगितज्ञा सीता हारं विमुच्य हनुमते प्रादात्। स संपूर्णतुषाररश्मितारेण तेन हारेणाऽतितरां रराज। अथ रामः सुग्रीवविभीषणावपि रत्नाभरणैः संपूजयामास। ततो यथायोग्यं सत्कारं समवाप्य स देवगणा अन्येऽपि स्वकीयान् लोकाञ्जग्मुः। ततः सौमित्रिर्यदा दाशरथिना समादिष्टमपि यौवराज्यं न जग्राह। तदा प्रणयेन नियुक्तो भरतस्तत् प्रपेदे। ततो रामराज्ये तरवो नित्यफलाः पर्जन्यः कामवर्षी मारुतश्च सुखस्पर्शो बभूव। धरित्री च सकला स्वर्गोपमाऽऽसीत्। श्रीमद्भगवतो रामस्यादरः सुचरितेऽभवन्न सितातपत्रे। संचयश्च धर्मोज्ज्वलेषु गुणेषु चासीन्न भूषणेषु। किम्बहुना। नृपतिमुकुटरत्ने श्री राघवे क्ष्मां शासति जनः सर्वसमृद्धिपूर्णः सुतपरिजनयुक्तः प्राज्यजीवश्च बभूव।

इतिश्री गद्यरामायणे लंकाकाण्डं समाप्तम्।

---

ओन्नमः शिवाय ॥

# अथोत्तरकाण्डं समारभ्यते ।

——:–o–:——

जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥

अथैकदा मुनिजनाः शरांशुनिहतारातितिमिरं तेजोनिधिं राज्योदयस्थं च काकुत्स्थं द्रष्टुं समाययुः । तत्रादावगस्त्यः अत्रिः आपस्तम्बः ऋष्यशृंगः कश्यपः कपिलः कौत्सः गौतमः गर्गः च्यवनः जाबालिः दीर्घतमसः देवलः नारदः पराशरः पिप्पलादः बलायनः बोधायनः भारद्वाजः रोमहर्षणः लोकाक्षः वसिष्ठः वामदेवः विश्वामित्रः शांडिल्यः सनंदः सुमन्तुः हारीताद्याश्च पृथग्द्रव्यादिसंचयाः समागच्छन् । ततस्ते प्रधानपुरोहितेन विधिवत् संपूजिता हेमरत्नासनजुषः प्रणतं रघुनाथं प्रोचुः । महावीर ! दिष्ट्या त्वया सानुगो रावणो निहतः । यस्मिन् स्मृतेऽपि दिवौकसः संत्रासं न त्यजंति । राम ! हताऽमित्रं त्वां विलोक्य जगत्त्रयीं पुनर्जातामिव मन्यामहे । यदा यदा हि धर्मस्य ग्लानिरधर्मस्य चाऽभ्युत्थानं भवति । तदा तदा लोकरक्षणाय भवद्विधा महानुभावाः खलु जायंते । काकुत्स्थ ! महाब्धौ सेतुबंधः कल्पान्तपर्यन्तं स्थित्वा त्वद्यशः स्मारयिष्यति । किम्बहुना । त्रैलोक्यरक्षार्थं धनुः, यज्ञार्थं धनं, साधुवादार्थं जीवितंचैतत् त्रयं तव सर्वथैव श्लाघ्यम् । ततः प्रसंगे समुपस्थिते ब्रह्मज्ञानसारमुपदिदेश श्रीमद्दधीचिसुतो महर्षिः पिप्पलादः । समाहितः सच्चासच्च सर्वमात्मनि संपश्येत् । सर्वं ह्यात्मनि संपश्यन्नधर्मे मनो न कुर्यात् । सर्वा देवता आत्मैव । सर्वमात्मन्येव प्रतिष्ठितमस्ति । एष शरीरिणामात्मा हि कर्मयोगं जनयति । बाह्यमाकाशं स्वोदरस्थे गगने सन्निवेशयेत् । एवं बाह्यं वायुं देहस्थे वायौ, सूर्याग्नितेजसी नेत्रज्योतिषि, बाह्यं जलमाभ्यन्तरे जले, पृथ्वीं च पार्थिवे भागे धारयेत् । एवं मनसि चन्द्रमसं, श्रोत्रे दिशः, क्रान्ते विष्णुं, बले हरं, वाच्यग्निं, उत्सर्गे मित्रं, जनने प्रजापतिं च भावनया साधयेत् । यः सर्वेषां प्रशासिता, अणोरप्यणीयान्, रुक्माभः, स्वप्नबुद्धिगम्यश्चाऽस्ति । तं परमपुरुषं विजानीयात् । एतमेकेऽग्निं वदंति । अन्ये मनुं व्याहरंति । केचित् प्रजापतिं भाषन्ते । इन्द्रमपरे कथयंति ।

ततः स प्रयतो विप्रो वशिष्ठो ब्राह्मणैः सह ।
रामं रत्नमये पीठे ससीतं संन्यवेशयत् ॥ १ ॥
छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ २ ॥



सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिंचद्भरतं महात्मा ॥ ३ ॥
अरजे वाससी दिव्ये शुभान्याभरणानि च ।
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥ ४ ॥

बहवः प्राणं शेषाश्च शाश्वतं ब्रह्म प्रतिपादयंति । एष पंचभिर्मूर्तिभिः सर्वाणि भूतानि व्याप्य तिष्ठति । जन्मवृद्धिक्षयैश्च सदा चक्रवत् संसारयति । एवं यः सर्वभूतेष्वात्मना-ऽऽत्मानं पश्यति । स सर्वसमतां समभ्येत्य ब्रह्मणः पदं समवाप्नोति । तथाचोक्तम् । ईशाद्युपनिषत्सु ।

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
दिव्योह्यमूर्तः पुरुषः सवाह्याभ्यंतरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥
भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ।
क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥
यतो वाचो निवर्तंते अप्राप्य मनसा सह ।
आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥
यस्मिन् सर्वाणिभूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥

एतदाकर्ण्य परितुष्टो दाशरथिर्गंतुकाममगस्त्यमपृच्छत् । महर्षे ! कृपया हनूमज्ज-न्मकथां कथयेति राघवेणोक्तो महर्षिः प्रोवाच । राजन् ! महानुभावोऽयमंजनायां केसरिणोऽनिलाज्जातः । किम्बहुना । प्रबलाशयादयं शैशवेऽपि बालार्कमादातुमुत्पपात । एतस्मिन्नेव काले राहुः पर्वणि सूर्यग्रहणोद्यतं कपिं दृष्ट्वा चुकोप । सोऽथ सभास्थितं शक्रं जगाद । बत युष्माकं सत्यवादिता मिथ्यैव ! यो मे शिरश्छित्वा ग्रासाभ्यासविनोदं कृतवान् । मयाऽद्यैव सूर्यग्रहे द्वितीयो राहुर्दृष्टः । एतदाकर्ण्य स्थितिविपर्ययाच्छंकितचेता मघवा समारुह्यैरावतं राहुं पुरस्कृत्य च तत्र जगाम । यत्र रणमदोद्धतो निर्भयः सिंहिकासुतो वदनं विस्तार्य च सहस्रांशुं समुपाद्रवत् । एतदालोक्य हनूमान् जिगी-षया तमभ्यधावत् । ततः शक्र ! शक्रेति भयविद्रुतो राहुश्चुक्रोश । त्वया न भेतव्यं न भेतव्यमिति वज्रिवचनं श्रुत्वा पवनात्मजो राहुं परित्यज्य गजारूढं देवराजमभ्याक्रमत् । ततः पाकशासनः कोपाद्वज्रेण तं जघान । येनास्य गिरौ पतितस्य वामो हनुरभज्यत । अथ पुत्रप्रहारकुपितः प्रभंजनस्तानि सर्वथा काष्ठभूतानि चकार । अथ जगत्त्रयभया-द्देवैः संप्रार्थितो ब्रह्मा स्वयं तत्र गत्वा वायुप्रसादाय पुत्रं जीवयामास । ततः पितामह-करस्पृष्टं तनयं लब्धजीवितं दृष्ट्वा प्रहृष्टः पवनः क्षणाज्जगत् स्वस्थं चक्रे । अथ

प्रजापतिगिरा सर्वे त्रिदशाः पवनसूनवे वरान्प्रददुः । येनाऽयं महावीरोऽभवत् । ततो देवराजोऽस्य हनूमानिति नाम कृत्वा वज्रविभेदिनीं विद्यां ददौ । भास्करोऽस्मै तेजोभावं प्रादात् । वरुणोऽमरत्वं यमश्च स्वदण्डादभयं प्रायच्छत् । कुवेरः शस्त्रास्त्रप्रहारसहन-शक्तिं व्यतरत् । भवः शूलपाशुपतादिभ्योऽभयं दत्तवान् । प्रजापतिर्ब्रह्मास्त्रादिभ्योऽवध्य-त्वमदात् । विश्वकर्मा च सर्वायुधप्रतीघातं दत्त्वाऽस्य महोत्साहं प्रावर्धयत् । एवमेप वरसंपूर्णः पितृगेहे क्रमशो व्यवर्धत । सोऽथ तपस्विनां मुनीनां तपोवनं गत्वा वालचापलाद्वल्कलाजिनभाण्डेपु विकारमकरोत् । एतदालोक्य कोपाविष्टा मुनय एनं विस्मृतवलं चक्रुः । शापवशादयं विस्मृतवलोऽभवत् । तस्माद्वालिवधेऽस्य वुद्धिर्नोऽस्फुरत् । श्रीमत्सूर्यदेवादयं समग्रं व्याकरणमधीतवान् । महानुभावोऽयं सकलाश्चर्याणां भूमिः सत्व-सागरश्चाऽस्ति । अस्य गुणान्वक्तुं कः शक्तः ? किं बहुना । जिह्वासहस्रेणाऽपि स्तुतिरस्याऽ-वर्णनीयेत्यभिधाय श्रीरामं समामंत्र्य च कुंभोद्भवप्रभृतयो महामुनयः सत्वरं स्वस्वतपोवनं जग्मुः । अथाऽपराह्ने काकुत्स्थोऽभिषेकार्थं समायातान् भूपान् रत्नैः संपूज्य निजदेशान् विससर्ज । ततो मैथिलो जनकः केकयाधिपो युधाजित् प्रतर्दनः काशिराजोऽपि च रामं समामंत्र्य ययौ । ततः सुग्रीवांगदमुख्या वानरेश्वरा अतुलां पूजां समासाद्य किष्किन्धां ययुः । अथ विभीपणोऽपि सत्कारमवाप्य रामाज्ञया लंकां जगाम । ततो गंतुकामो हनूमान् राघवं प्रणिपत्य प्रोवाच । प्रभो ! त्वयि मे सर्वदा परमस्नेहो भक्तिश्च तिष्ठतु । किंच यावन्महीतले रामायणकथा प्रचलिष्यति । तावन्मम शरीरे प्राणा वसंत्विति ब्रुवाणं मारुतिं रघुवीरो वरासनादुत्थाय सस्वजे । अथ रामः स्नेहात् प्रत्यवदत् । कपि श्रेष्ठ ! तथास्तु । त्वं कल्पान्तयशस्वी भूयाः । किम्बहुना ।

एकैकस्योपकाराय प्राणान्दास्यामि ते कपे ।
शेपस्येहोपकाराणां भवाम ऋणिनो वयम् ॥

इत्युक्त्वा हृदयस्थं हारं कंठादवतार्य तस्मै प्रादात् । ततः पवनात्मजे स्वपदं प्रयाते राघवश्चिरेण धृतिमाससाद । अथ सीतामुखांभोजमधुपो राघवो मदनोदग्रसंभोग सुभगाः क्षपा निनाय । कदाचित् सुकृती स ज्योत्स्नासिते हर्म्यतले, कदाचित् कुसुमास्मि ते कानने, कदाचिच्च हारस्मितेस्तनतटे रतिं लेभे । अथैकदा ससीतो रघुनंदनो ऽशोकवनिकां प्रविश्य शुभासने निषसाद । ततस्तत्र हस्तेन शुचि मधु मैरेयकं सीतां पाययामास । अत्रान्तरे किंकरा रामस्याभ्यवहारार्थं विविधानि फलानि मांसानि चानयन् । ततो नृत्यगीतविशारदा अप्सरसोऽनृत्यन् । एवं मुदायुक्तो रामः सुरसुतोपमां सीतां

प्रत्यहं देववद्रमयामास । धर्मवित्स पूर्वाह्णे धर्मकार्याणि कृत्वा शेषेदिवसभागार्धमन्तः पुर-गतो बभूव । एतस्मिन्नेवावसरे व्योममार्गात्पुष्पकमवतीर्य दिव्यवपुषा राममवदत् । रघु-पते ! वैश्रवणेन तेऽहं विसृष्टः । भुजोर्जितस्य मम भोगादनुग्रहः क्रियताम् । तच्छ्रुत्वा रामस्तं कुसुमैः संपूज्य विहर त्वं स्वैरं स्मृतः समं समेष्यसि । ततः पुष्पके प्रयाते रामः प्रजाकार्ये दत्तचित्तो बभूव । एवं सीताऽपि पूर्वाह्णे देवकार्याणि कृत्वाऽवकाशसमये सर्वासां श्वश्रूणामविशेषतः पूजां चक्रे । महात्मा भरतोऽपि यौवराज्यमवाप्य पुत्रवत्प्रजाः पालयामास । लक्ष्मणशत्रुघ्नावपि रामभरतयो राजकार्येषु सदैव सहायकावभूताम् । अथैकदा शशिमुखी सीता दौहृदलक्षणं दधौ । अत्रान्तरेऽरुन्धतीं पुरस्कृत्य राममातरो यज्ञे जामातुराश्रमं ययुः । ततोऽन्येद्युरष्टावक्रो रामं समभ्येत्य स्वस्तिवामित्यवोचत् । अथ सीतारामौ प्रणम्य तमपृच्छताम् । निर्विघ्न सोमपीथी आवुत्तो भगवानृष्यशृंग आर्या च शान्ता ? सोऽब्रवीत् । राजन् ! सर्वे कुश-लिनो यज्ञपुरुषप्रसादात् । किन्तु भगवान् वसिष्ठः सीतामिदमादिशति । श्रीमती वसुं-धरा भवतीमसूत । प्रजापतिसमो जनकस्ते पिता । महानुभावे ! त्वं तेषां पार्थिवानां वधूरसि । येषां कुलेषु सविता च वयं गुरवः स्मः । तत्किमन्यदाशास्महे । केवलं वीरप्रसूर्भूयाः । तच्छ्रुत्वा रामोऽब्रवीत् । ऋषे ! तर्ह्यनुगृहीता वयम् । लौकिकानां साधूनां तु वाणी सदार्थमनुसरति । किन्त्वाद्यानां महर्षीणां वाचमेवार्थोऽनुधावति । निशम्यैतद्राम वचनमष्टावक्रोऽवदत् । राजन् ! भगवत्याऽरुन्धत्या देवीभिः शांतया च भूयो भूयः संदि-ष्टम् । अस्या यः कश्चिद्गर्भदोहदो भवति । सोऽवश्यमचिरान्मानयितव्यः । एतदाकर्ण्य रामोऽवदत् । महाशय ! क्रियते यदेषा कथयति । एतदाकर्ण्याऽष्टावक्रः पुनरुवाच । रघुवीर ! श्रीऋष्यशृंगेणाऽपि संदिष्टम् । वत्से ! कठोरगर्भेति नानीताऽसि । वत्सो राम भद्रोऽपि त्वद्विनोदार्थमेव तत्र स्थापितः । तत्पुत्रपूर्णोत्संगामेवाऽऽयुष्मतीं द्रक्ष्यामः । तच्छ्रुत्वा सविनयं रामो जगाद । तथास्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि ? मुनिरुवाच । रघुनाथ ! शृणु । वयं तु जामातृयज्ञेन निरुद्धाः । त्वं बालएवासि । राज्यं च नवीनम् । ज्ञात्वैवं त्वं प्रजानुरंजने युक्तः स्याः । यद्वः परमधनं यश एवा ऽस्ति । रामोऽवदत् । सत्यमाह भगवान् वसिष्ठः । किम्बहुना । स्नेहं दयां च सौख्यं यदि वा वैदेहीमपि लोकानुरंजनाय मुंचतो मे व्यथा नास्ति । निशम्यैतत्सीतोवाच । अतएव मर्यादापुरुषोत्तम आर्यपुत्रः । ततोऽष्टावक्रे गते राघवो ललितलोचनां प्रियां विलोकयन् तृप्तिन्न लेभे । सोऽथ प्रीत्या तामपृच्छत् । सुभ्रु ! त्वमधुनाऽभिनवा गर्भाविर्भूतलक्षणा दृश्यसे ? अतोऽयं प्रणयिजनः किन्ते प्रियं करोतु ?

जगत्यस्मिन् यत्र ते मती रमते । तत्र दुर्लभमिति प्रणयात्पृष्टा जनकनंदिनी जगाद । आर्यपुत्र ! त्वया सह मुनिसेव्यानि काननानि पुनरपि क्षणं द्रष्टुं मे मनः समुत्कण्ठते । तच्छ्रुत्वा तां तथेत्यभिधाय रामोऽन्तःपुरं च गत्वा कामं निर्वृत्तं समवाप्तवान् । ततो रामः परिहासकथाशीलैर्नंदादिसुहृद्भिः सह गोष्ठीसुखमनुभवन्नासांचक्रे । अथ यशः प्रियो रामः कथान्ते भद्रं पप्रच्छ । पुरेऽस्मिन्वा जनपदे मम कीदृशः प्रवादः ? लोके जनाः किं शुभं किंवाऽशुभं प्राहुः ? यतो रहस्यं सर्वं ज्ञात्वा निर्दोषं गुणसंग्रहं कुर्याम् ? सुहृद्भिर्जनैः सर्वथा स्फुटं गुणदोषं वाच्यम् । यश्छन्नदोषं गुणं वक्ति स मित्रमुखो रिपुरस्तीतिरघुनाथेनोक्ते पंच चारास्तु राजप्रशंसामेव वर्णयामासुः । ततः पृष्टः प्रांजलिर्भद्रोऽवदत् । राजन् ! लोकोऽयं नानाविधः । शुभामशुभां वा कथां भाषते । कलत्रदोषे क्षमा सागरे च सेतुबंधश्चैतद्द्वयं राघवस्य महाश्चर्यमयम् । किम्बहुना । वयमपि सर्वे यथा कथंचिद् दारदोषान् सहामहे । यतः प्रजाः प्रायेण महाजनानुयायिन्यो भवंतीति वज्रस्पर्शसमं वचो निशम्य राघवो दुःखाच्चक्रारूढ इव बभूव । सोऽथ चिन्तातुरो मित्रमण्डलं विसृज्य द्वाःस्थं प्रेष्य च निजानुजानाजुहाव । ततो भरतलक्ष्मणशत्रुघ्नास्तूर्णं समागत्य बाष्पपूर्णनयनं रघुनाथं च विलोक्य सहसा कंपिताशया बभूवुः । ततः परिशुष्यता मुखेन काकुत्स्थस्तानुवाच । भ्रातरः ! वो भद्रमस्तु । मनोऽन्यथा मा कुरुध्वम् । सीताविषये पौराणां यादृशी कथा वर्तते । तां मत्सकाशाच्छृणुत । अहं महात्मनामिक्ष्वाकूणां कुले जातोऽस्मि । सीताऽपि च महानुभावानां जनकानां वंशजाऽस्ति । सौमित्रे ! यथा रावणेन विजने दण्डके सीता हृता । तथा त्वं जानासि । सच मया विध्वंसितः । ततः प्रत्ययार्थं यदा सीता ज्वलनं प्रविष्टा । तदा तव समक्षं हव्यवाहनो निर्दोषां सीतां गणयामास । ततो महर्षीणां सन्निधौ महेन्द्रेण मम हस्ते समर्पिता । मेऽन्तरात्मा सीतां यशस्विनीं वेत्ति । ततोऽहं वैदेहीं नीत्वाऽत्र समायातः । हा निर्दोषनिन्दको लोकस्तस्याः शीलं न वेत्ति । दुष्टाः खलु पौरजानपदाः । वत्स ! देवैरकीर्तिर्निंद्यते कीर्तिश्च लोकेषु पूज्यते । महात्मनां सर्वे समारंभाः कीर्त्यर्थमेव भवंति । किं बहुना । अहमपवादभयाज्जीवितमपि जह्यां किम्पुनर्जानकीम् ? सौमित्रे ! श्वः प्रभाते सुमंत्राधिष्ठितं रथं समारुह्य सीतां समारोप्य च गंगायाः परे पारे यत्र महामुनेर्वाल्मीकेराश्रमोऽस्ति । तत्रैनां विजने देशे परित्यज्य द्रुतमागच्छ । साऽपि तपोवनं द्रष्टुमिच्छति । विषयेऽस्मिन् भवद्भिर्मे प्रतिवचो न देयम् । एतदाकर्ण्य लक्ष्मणो बाढमित्युवाच । ततो राघवः सहसा शयनागारं गत्वाऽन्दशतोरमां रात्रिं निनाय । भरतादयो भ्रातरोऽपि चिन्ताप्रसला

स्वभवनमेत्य रात्रौ निद्रां न लेभिरे । अथ प्रभाते गूढशोकानलाकुलो लक्ष्मणः सीतामभ्येत्य प्रोवाच । देवि ! तपोवनावलोकने देवस्त्वामनुजानाति । तच्छ्रुत्वा हर्षनिर्भरमानसा सीता मुनियोषिताम् प्रदातुं विविधानि वस्त्राण्याभरणानि च जग्राह । ततो रथमारुह्य व्रजन्ती वैदेही म्लानमुखं लक्ष्मणं प्रोवाच । मनस्विन् ! अकस्मान्मे चित्तं वेपते वामनेत्रं च स्फुरति । पतिसंदर्शनार्थं पुनः पुनर्मे मनो धावति । किम्बहुना । पृथ्वीमपि शून्यां पश्यामीत्युक्त्वा प्रथमां रात्रिन्तु सा गोमतीतटे निनाय । अथाऽन्येद्युः स्यन्दनमारुह्य ससीतः सौमित्रिः प्रतस्थे । ततो नावा कल्लोलमालिनीं गंगां समुत्तीर्य परं पारं प्राप्तां जनकात्मजां लक्ष्मणोऽब्रवीत् । देवि ! जगति त एव धन्या ये विधिदुर्विलसितं न पश्यंति । नूनं मंदभाग्यस्य मम वज्रनिर्मितं जीवितमिति ब्रुवाणं सीता शोककारणं पप्रच्छ । ततः कृच्छ्रपतितः स व्यग्रचित्तां वैदेहीं प्रोवाच । धिङ्माम् । यस्य मुखात् सर्पस्येव वचोविषं निःसृत्य ते घोरां हृदयव्यथां करोति । मातः ! पुरे च जनपदे यस्तव मिथ्यापवादः प्रासरन् । स राघवस्य मर्माणि कृंतति । दुष्टोऽयं लोकः स्वदोषं विस्मृत्य परापराधं समीक्षते । जनापवादभीतेन जगतीभुजा परित्यक्ता त्वं पितृमित्रस्य महामुनेर्वाल्मीकेराश्रमे तिष्ठेति देवरवाक्यं श्रुत्वा विषण्णा जानकी छिन्नलतेव सहसा धरातले निपपात । साऽथ संज्ञामवाप्य गद्गदगिरा लक्ष्मणं जगाद । सौमित्रे ! नूनं विधात्रा मामकीयं तनूर्दुखाय सृष्टा । या निरपराधाऽपि पत्या परित्यक्ता यातनां सहते । हा ! पुरात्वहं रामपादानुवर्तिनी तपोवनभूमिष्ववसम् । किं त्वधुना तेन विजनीकृताऽहं कथमाश्रमे वत्स्यामि ? न खल्वद्यैव जीवितं जान्हवी जले त्यजेयं । किन्तु मे भर्तृराजवंशः परिहास्यते । आर्यपुत्र ! क्वनु ते स्मेरकान्तं कमललोचनं मुखं पुनर्द्रक्ष्यामि । अथवा किमनेन वृथाप्रलापेन । सौम्य ! तदाज्ञां कुरु । मां दुःखभागिनीं च त्यज । किंच ममेदं वचनं शृणु । पूर्वंतु प्रांजलिप्रग्रहेण श्वश्रूणां चरणावभिवंद्य पार्थिवं कुशलं ब्रूहि । अथ धर्मपरायणो नृपतिश्चापि वक्तव्यः । प्रभो ! अयशोभीरुणा त्वयाऽहं त्यक्ता । किन्तु निर्दोषदारपरित्यागोऽपि दोषमावहति । अथवा किमतिक्रान्तवर्णनेन । नार्याः पतिर्हि देवता, पतिर्हि बंधुः पतिरेव च गुरुः । तस्मात्प्राणैरपि तस्य प्रियं कुर्यात् । निशम्यैतद्वचनं दीनचेतनो लक्ष्मणः शिरसा धरणीमभिवंद्य किमपि वक्तुन्न शशाक । सोऽथ दुःखभारस्खलद्गतिस्तां प्रणम्य शून्ये वने परित्यज्य च निवर्तमानो व्यचिंतयत् । यदि संसारिणां सर्वं पर्यंतविरसं न स्यात् । तर्हि मुनयः शरीरशोषणं तीव्रं तपो न कुर्युः ? ततोदृक्पथादपयाते लक्ष्मणे जनकात्मजा हा राघवेति क्रोशंती मूर्छामवाप्य निपपात । साऽथ चिरेण संज्ञामासाद्य

प्रलापैर्निष्पन्दमीनमकरां सचिन्तामिव जाह्नवीं चकार । अत्रान्तरे यदृच्छागतः सशिष्यो मुनिस्तामभ्येत्य पुत्रीमिव समाश्वास्य प्रोवाच । वत्से ! त्वं निर्दोषा रघुभूभुजा परित्यक्ताऽसि । विषादं मा कुरु । अत्रत्यास्तापस्यस्त्वां प्रतिपालयिष्यंति । आश्रमोऽप्ययं सर्वथा तवैवेति निगद्य करुणासिन्धुर्मुनिस्तां स्वतपोवने प्रतिष्ठापयामास । ( १ )

अत्रान्तरे शोकाकुलो लक्ष्मणो नेत्रजं वारि मेघ इव वर्षन् सुमंत्रं समभ्यधात् । निष्करुणं रघुपतिदुःखैकसाक्षिणं च मान्धिक् । येन स्वगिरा निष्पापा-

---

## ( १ ) अद्भुत रामायणे-सीता जन्मकथा ।

अथैकदा सीता विषये पृष्टो महामुनिः शिष्यान्प्रोवाच । छात्राः ! पुराऽत्र गृत्समदाख्यो वेदवेदांगपारगो ब्राह्मणो बभूव । सचैकदा दुहित्रर्थे भार्यया संप्रार्थितः लक्ष्मीर्मे कन्या भूयादित्याशया कलशे दुग्धं निक्षिप्य मंत्रैः संस्कारमकरोत् । अत्रान्तरे रावणो दिग्विजयं कृत्वा दण्डकारण्यं समाजगाम । सोऽथ तत्राऽग्निकल्पान मुनीन् विलोक्य चिन्तयामास । एतानजित्वा कथमहं त्रैलोक्यभाक् ? वधेन चैतेषां श्रेयो न पश्यामीति विचिन्त्य-तान् समेत्य प्रोवाच । भोभो ब्राह्मणाः ! मह्यं करस्वरूपं किमपि दत्त । सोऽथ शराग्रक्षतान्छोणितं तदंगतः समाकृष्याऽकस्माद् गृत्समदरक्षिते कुंभे स्थापयापास । ततः स तमानीय स्वसदने च संस्थाप्य स्वपत्नीं मंदोदरी जगाद । सुंदरि ! कलशमिमं सदा रक्ष । किंबहुना । कलशस्थितं विषादप्यधिकं भयप्रदं गणय । नैतत्कस्यचिद्देयं न च भक्ष्यं । इदं मुनिजनशोणितमस्ति । अथैकदा सापत्न्यदुःख दुःखिता मंदोदरी मरणमांकांक्ष्य तद्रक्तमापिबत् । ततः कमलाशरणदुग्धेन मिश्रिताद्रुधिरात्सद्यो रावणकान्ताया गर्भोऽभवत् । ततः प्रोषितभर्तृका सा भयमवाप्य विमानमारुह्य च कुरुक्षेत्रं जगाम । साऽथ तत्र गर्भं विनिष्कृष्य भूमितले निचखान । ततः सरस्वतीतोये स्नात्वा च स्वमालयमाजगाम । अथैकदा राजर्षिजनकः कुरुक्षेत्रं समासाद्य तत्र च स्वर्णलांगलं समादाय च यज्ञभूमिं चकार । ततः स्वर्णलांगलसीतान्तः समुत्थिताऽभवच्छुभानना कन्यका । अथ कन्यकोपरि गगनात्पुष्पवृष्टिः पपात । एतदालोक्य राजा महदाश्चर्यमवाप । अत्रान्तरे व्योम्नि सरस्वत्यभूत् । राजन् ! कन्यामेतां गृहीत्वा पालय । महाभाग ! जगतोऽनया क्षेमं भविष्यति । इयं सीतातः समुत्थिताऽनोऽस्याः सीतेति नाम भविता । ततो राजा यज्ञं कृत्वा कृतार्थो बभूव । शिष्याः ! एषा धर्मतो रावणकन्याऽस्ति । अस्याश्चरित्रे दोषलेशोऽपि नास्तीति मन्ययुवगच्छत ।

सीता श्वभ्रे निपातिता । हा मत्समो नृशंसः कोऽस्ति ? येन निष्प्रतीकारत्रासभ्रमकातरा सीता विलोकिता । एवं पुनः पुनः शोचन्तं लक्ष्मणं धीमान् सुमंत्रः प्रोवाच । सौमित्रे ! चिन्तां मा कुरु । कालः सर्वंकषः । दैवस्य च गतयो विचित्राः । बहुधा भावानामेवंविधा एव पर्यन्ते शरारुता श्रुता च समवलोकिता । इदं सर्वं भवितव्यं दुर्वाससा प्रोक्तं वसिष्ठाश्रमे त्वत्पितुः पुरतो मयाऽपि श्रुतम् । एवं सुमंत्रः सौमित्रिं कौशिकीतटे समाश्वास्य तेनैव सार्द्धं क्षपां निनाय । अथान्यस्मिन्दिनान्ते विमनाः पुरीं प्रविश्य विषार्त इव रामानुजो भ्रातृमंदिरं विवेश । सोऽथ प्रियाहीनं साश्रुलोचनं मिथ्यापवादसंतप्तं च रघुनाथं विलोक्य जगाद । देव ! तव शासनान्निर्जने कानने मया सीता परित्यक्ता* । मा शुचः । कालगतयः किल सर्वकुटिलाः संति । भोगा वियोगरोगेण चारुयौवनं जरया निधनेन च जीवितं सर्वस्य परिणाम एवमेव । आर्य ! संसारतत्त्वं विज्ञाय विवेकालोकाविकलं शोकं कर्तुं नार्हसि । विचितात्मनां हृदये मोहः पदं न करोति । न हि रत्नप्रदीपानामग्रे तमस्तिष्ठति । महाशयानामेतदेव लक्षणं । यत् कृच्छ्रेषु न सीदंति सुखेषु च न नृत्यंति । येषां विद्यादर्पणं चेतः सत्यवसतिर्मतिर्धृतिनिवासो विवेकश्चास्ति ते कदापि न विमुह्यंति । निशम्यैतल्लक्ष्मणवचनं सदाचारवि-

---

*अथैकदा सीतात्यागविषये छात्रैः पृष्टो मुनिरुवाच । वत्साः ! विचित्रेयं कथा । यदि कुतूहलं तर्हि सावधानतया समाकर्णयत । पुरोपवनस्था जानकी शुकयोःसंलापं श्रुत्वा सखीर्जगाद । वयस्याः ! शनकैरेतन्मनोहरं पक्षियुगं गृहीत्वा मह्यं दत्त । ततस्ताभिर्गृहीत्वा दत्तं च पक्षियुग्मं सीतायै संक्षिप्तं रघुवंशचरित्रंवर्णयामास । तच्छ्रुत्वा सीतोवाच । भो मधुरालापनिसर्गपण्डितौ विनोदपरायणौ मधुराकारौ च भवन्तौ मद्गेहे सुखेनासीयास्थाम् । एतदाकर्ण्य प्रक्षुब्धौ तौ जानकीमवोचताम् । साध्वि ! वयं पक्षिणो वनवृक्षविहारिणः स्मः । अतो गृहे सुखिनो न भवामः । शुकी प्राह । साम्प्रतमहमंतर्वत्नी । अतः स्थानं गत्वा तत्र पुत्रकान् प्रसूय च त्वत् स्थानं समागमिष्यामि । नास्त्यत्र कश्चित् संदेहः । एवं तया प्रोक्ताऽपि सीता यदा तां न तत्याज । तदा शुकस्तां प्रोवाच । मैथिलि ! मे भार्यां त्यज । विपिने विहृत्याऽवसरे समेष्यावः । तच्छ्रुत्वा सीतोवाच । शुक ! चिन्तां मा कुरु । मत्पार्श्वे तवैतां प्रियां रक्षामि । निशम्यैतच्छुकोऽब्रवीत् । सुंदरि ! भार्यया विना नाऽहं जीवितुमिच्छामि । तस्मादेनां सपदि मुंच । एवं बहुविधैर्वाक्यैः प्रबोधिताऽपि सीता यदा स्वदुराग्रहं नाऽत्याक्षीत् । तदा कोपाकुला साऽशपत् । यथा त्वं स्वा-

चार्थी रघुनंदनः शुचं त्यक्त्वा तमुवाच । भ्रातस्त्वं सत्यं वदसि । बलवानयं कालप्रभावो मार्गनाशाय पर्यटति । प्रजाकार्याण्यशृण्वतो मे चत्वारो वासरा जाताः । नृपत्वधारणादिदं मे चेतो दहति । अयमेव भूपालानां नरकसंचये हेतुर्यद्द्वारे कार्यार्थिनो जनाः प्रवेशं न लभंते । एवं वृद्धपरंपरयाऽनुश्रूयते । आसीत्पुरा परमगोभक्तो नृगाभिधानो राजर्षिः । स पुष्करेषु ब्राह्मणेभ्यो गवामयुतं प्रादात् । अथैकदा तेन संघमध्यगताऽग्निवेशस्य होमधेनुरन्यस्मै विप्राय प्रतिपादिता । ततः स तामन्वेष्टुं वनेपूपवनेषु च सुचिरं विचचार । किन्तु प्रियां विद्यामिव तान्नाधिजगाम । अथैकदा स कनखले कस्यचिद् ब्राह्मणवेश्मनि विवत्सां जीर्णविग्रहां च तां धेनुन्ददर्श । वहले ! द्रुतमेहि द्रुतमेहीति दूराद्द्विजेनाहूता सा प्रीत्या हुंकारिणी जवात्तमेवानुससार । एवं द्विजेन ह्रियमाणां प्रतिग्रहात्तां च तां गां समालोक्य तयोर्मिथो महाकलहोऽभूत् । ततः प्रथमोऽब्रवीत् । एषा मम गृहे जाता । तच्छ्रुत्वा द्वितीयः प्रत्यवदत् । इयं तु मह्यं नृगेण दत्ता । एवं विवदमानौ तौ निर्णयार्थं नृपालयं जग्मतुः । ततो वादिप्रतिवादिनोस्तत्र स्थितयो र्दुर्गमे राजसदने सुचिरं प्रवेशो नाऽभवत् । ततस्तौ बहुभिर्दिनैः कृच्छ्राद्राजानमवाप्य मन्युसंतापमुद्गिरंतौ प्रोचतुः । नरनाथ ! कार्यार्थिनां स्वार्थनाशेऽपि यस्मान्न दृश्यसे । तस्माददृश्ये श्वभ्रे कृकलासो भविष्यसीति शेपतुः । ततः स्वप्रमादं स्वीकृत्य यदा राजाऽनुनयं चकार । तदा तावबादिष्टाम् । अष्टादशयुगे काले व्यतीते यदा श्रीविष्णुरवतीर्य जगतः कल्याणं करिष्यति । तदा स एव वसुदेवसूनुः श्रीकृष्णचन्द्रः शापात्त्वां मोचयिष्यति । तस्मिन्नेव समये वसिष्ठवंशे कुरुकुलप्रवर्तको व्यासः प्रादुर्भूय धर्म्यं महाकाव्यं रचयिष्यतीत्यभिधाय तौ द्विजौ कस्मैचिद् ब्राह्मणाय तां धेनुं दत्वा च जग्मतुः । ततः शापदष्टो नृगः पश्चात्तापं ययौ । ततः स वसुसंज्ञकं पुत्रमभिषिच्य जालवल्लीद्रुमैः सुखोचितं श्वभ्रदेशं कृत्वा कृकलासतां जगाम । ततो नरकविषये लक्ष्मणेन पृष्टो राघवोऽब्रवीत् । वत्स ! यः परवित्तं, परकलत्रं परापत्यं च हरति । यमकिंकरास्तस्य पातं तामिस्रे कुर्वंति । ये मृषा जंतूनां वधं कुर्वन्ति तेऽन्धतामिस्रे निपतंति । यो मातापितरौ ब्राह्मणं च द्वेष्टि स

---

मिनः सार्धं वियोजयसि माम् । तथाऽवसरे त्वमपि गर्भिणी रामेण वियुक्ता भविष्यसि । एवं दुःखितायां दशायां तस्याः प्राणा निरगच्छत् । ततो मृतायां भार्यायां परमं क्रोधमापन्नः स पक्षिराट् स्वर्णद्यां निपपात । सोऽथ दुःखितत्वात् क्रुद्धत्वात्सीतावमाननाच्च रजकत्वमवाप । एवं यो महतां दुष्टतामाचरन् क्रोधात्प्राणांस्त्यजति । सोऽन्त्यजत्वं प्राप्नोतीति निगद्य महामुनिर्विरराम ।

महारौरवे प्रक्षिप्यते । राजाऽदण्ड्यान्दंडयन् दंड्यांश्चाऽदंडयन् संसारेऽपयशो लब्ध्वान्ते नरकमवाप्नोति । ये गोब्राह्मणदीनान्धपतिविहीनानां स्वल्पं वाऽधिकं वित्तं हरंति । तेऽन्धकूपे पतित्वा नानादुःखानि सहंते । योऽतिलोलुपो देवद्विजमित्रपुत्रकलत्रादिभ्योऽदत्त्वा मिष्टान्नादिकमश्नाति स कृमिभोजने नरके पतति । ये दुष्टा वह्निदा गरदास्तथा कूटसाक्ष्यं च भजंति । ते सारमेयादने नरके पात्यंते । यो द्विजो रसनास्वादात् सुरां सेवते । तं यमकिंकरा लोहरसं पाययंति । यो गुरुनिन्दां वेदनिन्दां स्वामिनिन्दां विश्वासघातं च कुरुते । मृतः सोऽधोमुखः क्षारकर्दमे निपात्यते । तथाचोक्तम् ।

शारीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरंत्यजातिताम् ॥

एवं ज्ञानदाता विद्वान् भवति । भूमिदाता नृपश्रियं लभते । गोदाता वंशवृद्धिं समेति । सत्यवक्ता रत्ननिधानमेति । कन्यादानी वरवर्णिनीं भार्यां प्राप्नोति । अन्नजलौषधिदाता नीरोगतामधिगच्छति । भयत्राता विजयी भवति । अहिंसाव्रती दीर्घायुष्यमेत्य सदासुखमवाप्नोति । यज्ञकर्ता स्वर्गं लभते । निष्कामकर्मकर्ता भक्तो वीतरागो वा कैवल्यपदं लभते । सौम्य ! तस्मात् पृथ्वीपतिभिः सत्वरमेव कार्यार्थिजनदर्शनं कार्यम् । द्वारि विलम्बमानो महाजनोऽन्यथा गृहपतिं दहति । पुरेक्ष्वाकुकुले निमिर्नामको महीपतिरभूत् । स स्वकीयपुरुषार्थेनैव पुरं वैजयन्तं व्यधात् । अथ कदाचित्तेन यज्ञार्थं कुलगुरुर्वशिष्ठः समाहूतः । मुनिरुपेत्याह । राजन् ! देवराजेनाऽहं क्रतोः पूर्वमेव वृतोऽस्मि । तच्छ्रुत्वा राजा महामुनिं गौतमं समभ्यर्च्य हिमवत्पार्श्वस्थे महोदधितीरे यज्ञं चकार । तस्मिन्मखे दीक्षितस्य नृपस्य पंचवर्षसहस्राण्यभूवन् । शक्रस्य तु दीक्षा पंचवर्षशतान्यभूत् । अथ शतक्रतोर्विधिवद्यज्ञे परिपूर्णेऽवकाशवान् मुनिर्निमेर्यज्ञभूमिं प्रायात् । ततो राजदर्शनार्थी मुनिर्यावत्तत्र तं प्रतीक्षते । तावत्प्रौढगर्वान्वितो भूपतिर्न व्यबुध्यत । एतदालोक्य वसिष्ठोऽशपत् । राजन् ! यस्मात्त्वं चिरं न दृश्यसे । तस्मात् अदृश्यो देहहीनश्च भविष्यसि । ततः प्रबुद्धो महीपतिस्तच्छापं श्रुत्वा प्रोवाच । भवताऽहं सुप्तः शप्तोऽस्यतस्त्वमप्येवं भविष्यसि । अथ मिथः शापात्तावपि विदेहतामवाप्य वासनात्मानवदृश्यौ वायुभूतौ च विचेरतुः ।

अथ वसिष्ठेन देहार्थं याचितः कमलोद्भवः प्रोवाच । त्वमितो गत्वा मैत्रावरुणं तेजः समाविश । अत्रान्तरे वरुणसंगतो मित्रश्चोभौ स्वेच्छयागतां सर्वाङ्गसुन्दरीमुर्वशीं ददृशतुः । ततस्ताभ्यां तुल्यं वृता । साऽब्रवीत् । एकं विहाय नाऽन्यं भजे । एतदाकर्ण्य वरुणो-

ऽब्रवीत् । वरानने ! एषोऽहमपि तेजः कुंभे क्षिपामि । त्वं केवलं भावमेव मयि समुत्सृज । रतिसंगमश्च ते मित्रेण सहास्त्वित्युक्त्वा ज्वलनोपमं स्वतेजः कुंभे निचिक्षेप । ततस्तां समागतां वीक्ष्य कोपाकुलो मित्रोऽभ्यधात् । पुंश्चलि ! भावमन्यत्र निक्षिप्य किम्माम् प्राप्ताऽसि । चपले ! पापादस्मात् त्वं मनुष्यलोकं गत्वा पुरूरवसो राज्ञः कामं भोग्या भविष्यसीति शशाप । अथ तस्मात्कुंभान् मैत्रतेजसस्तु त्रैलोक्यपूजितो भगवानगस्त्यः प्रागजायत । ततो वारुणात् तेजसो महामुनिर्वसिष्ठः प्रादुर्बभूव । अथ निमियज्ञे मुनिजना मंत्ररक्षितं शरीरं रक्षन्तः सुरवृन्दैः सह कर्मणः पारं प्रययुः । ततो देववरप्रभावान्निमिः शरीरिणां लोचनेषु निमेषवासी बभूव । अथ यज्ञान्ते तस्य पुत्रार्थं मुनिभिररणिर्मथिता । सा मिथिमजनयत् । तेनाऽऽवासिता पुरी मिथिलाऽभवत् । जननाज्जनकोऽपि स बभूव । यत्र निमिर्विदेहोऽभूत् । तस्मात्तद्देशजा तद्वंश्या वा जना विदेहाः स्मृताः । एतदाकर्ण्य रामानुजो रघुनाथवचनं निर्निद्रोऽखिलां रात्रिं तं पुनः पुनः पप्रच्छ । रघुवीर ! दीक्षितो गुणज्ञश्च निमिः कस्मात् क्षमां न दध्रे ? तच्छ्रुत्वा काकुत्स्थोऽब्रवीत् । वत्स ! दुर्जनः साधुतामिव कोपः क्षमां न क्षमते । कोपनाः कातराः क्षमाशीलाश्च महावीरा भवंति । पुरा नहुषात्मजो ययातिर्नाम राजा बभूव । तस्य शुक्रात्मजा देवयानी प्रथमा वधूरासीत् । दानवेन्द्रवृषपर्वसुता च शर्मिष्ठा द्वितीया पत्नी बभूव । ततो देवयानी यदुमजीजनत् । शर्मिष्ठा च पुरुं सुषुवे । ततस्तयोर्भूपतेः पुरुः प्रियोऽभवत् । अथैकदा शिशुर्यदुर्मातरं देवयानीमुवाच । जननि ! त्वं तु भूपतेर्द्वेष्यासि । अतो राजा मयि न स्निह्यति । धन्योऽयं पुरुर्यो मातृसौभाग्यान्नरपतिवरवल्लभोऽस्ति ।

निशम्यैतत्पुत्रवचो देवयानी भृशं शुचा वाष्पसलिलं किरंती पितरं सस्मार । तया स्मृतमात्रो दिव्यचक्षुः शुक्राचार्योऽभ्येत्य पुत्र्या प्रोक्तं भर्तृद्वेषोद्भवं शुचं शुश्राव । ततः सुतावत्सलः स कोपेन नृपतिं शशाप । येनाऽसौ यौवनं त्यक्त्वा क्षणाज्जराजीर्णोऽभवत् । अथ कामिनिभोगेऽतृप्तोऽसौ दुःखमवाप्य पुत्रं यदुं तारुण्यमयाचत । तच्छ्रुत्वा यदुरुवाच । तात ! दयितं सुतं पुरुं याचस्वेति यदुनोक्ते रुषा ज्वलन्नरपतिस्तं शशाप । येन यादवा ययातिवंशजा अप्यराजभागिनो बभूवुः । ततः पितृभक्तो पुरुर्जरामादाय पित्रे यौवनं प्रादात् । येन प्रियासखः स कंचित्कालं विजहार । अथैकदा राजा तस्मै पुत्राय राज्यं दत्त्वा तपसा स्वर्गं जगाम । सौम्य ! एवं शुक्रेण शप्तोऽपि क्षमावान् ययातिर्निमिवत् प्रतिशापं न ददौ । एवं कथयतो रामस्य सा विमला चैत्ररात्रिर्ययौ । ततो रघुपतिः प्रातरुत्थाय कृतनित्यकृत्योऽनुजैः सह मुनिमंत्रिनृपाकीर्णराज-

सभां प्रविवेश । अथ सर्वे तं राजभास्करं सभासीनं च समालोक्य ववंदिरे । यस्योदयेषु सकला दिशा निर्दोषा भवंति । ततो नृपाज्ञया गतो लक्ष्मणो द्वारि कार्यार्थिनं जनं किंवा तत्र याचकं कमपि न हि दृष्टवान् । सोऽब्रवीत् । दक्षे त्वयि राजति दैवमानुषो विप्लवो नास्त्येव । लोकेऽस्मिन् स एव राजा राजते । यस्य पुरे वा जनपदे कार्यार्थिनो जना न चिरं इतस्ततश्चरंति । रघुराज ! त्वयि निःशेषां पृथिवीं शासति लोकस्य न शारीरो न च मानसः कोऽप्युपतापोऽस्ति । अथाऽन्येद्युः कार्यार्थदर्शने नियुक्तो रामानुजो द्वारि प्रहारभिन्नमस्तकं श्वानं दृष्ट्वा राजानमेत्य च प्रोवाच । महाराज ! किमपि वक्तुकामः कुक्कुरः सभादर्शनं वांछति । ततो भूपतिशासनात्तूर्णं सारमेयः प्रविश्य कौतुकालोकलोके सदसि भयं परित्यज्य च प्रोवाच । काकुत्स्थ ! भूपतेः प्रजापरित्राणादन्यत्कार्यं न विद्यते । यो राजा धर्मस्तंभेन भुजेन भूतधात्रीं बिभर्ति स धन्यः । इयं ते भूतेष्वभयदा स्थितिः सर्वथैव प्रशस्ता । यत् सभायां श्वाऽपि वक्तुं प्रगल्भते । इति शुनोक्ते राजा द्वाःस्थेन तं द्विजं समाहूय पप्रच्छ । ब्रह्मन् ! निर्दोषे प्रहारस्य कारणं सत्यं सत्यं कथय । किमयं श्वा त्वया दण्डेन हतः ? सर्वभूतेषु दयावानेष ब्राह्मणो मैत्र इत्युच्यते । पण्डिता अर्थाऽनर्थौ विशुद्धबुद्ध्या हि पश्यंति । क्षमा हि सर्वतपसां मूलमस्ति । तपः, दानं, यज्ञः, जपः, सत्यं, सुकृतं, च श्रुतं सर्वमशुचिना क्रोधेन स्पृष्टं सहसैवाऽपवित्रतां याति । यस्य सन्निकर्षस्थोऽप्यात्मा क्रोधावेशेन विस्मृतः । स दुर्मतिः परलोकस्थं धर्मं कथं स्मरति ? लुब्धो धनं पश्यति । कामी कामिनीमीक्षते । किन्तु भ्रमाविष्टः क्रुद्धः किंचिन्नावलोकते । तच्छ्रुत्वा रचितांजलिर्विप्रोऽवदत् । राजन् ! भिक्षाकालेऽतिक्रान्ते क्रोधाभिभूतेन मया किंचिदसांप्रतं कृतम् । श्वाऽयं मार्गमावृत्याऽतिष्ठत् । अतो दण्डेन ताडितः । एतत्पापं मया कृतं । तस्मात्तेऽहं शासनीयोऽस्मि । किम्बहुना । भवता कृतदण्डस्य मे नरकाद्भयं नास्ति । ब्राह्मणेनेत्यभिहिते सामात्याः कौत्सवसिष्ठात्रिभृग्वांगिरसगौतमा दण्डसंशये प्रोचुः । सूक्ष्मापराधेषु भूभुजा क्वचिद्विप्रो न दण्ड्य इति धर्मस्थैरभिहिते सारमेयो नृपमवदत् । राजन् ! किं कार्यमिति पूर्वं त्वया मे प्रतिश्रुतम् । विशेषेण दृष्टिपातादहं तवाऽनुग्राह्यः । देव ! मद्वचः श्रुत्वा कालांजरे गोब्राह्मणसुरान्प्रति कौलपत्येऽयं ब्राह्मणोऽभिषिच्यताम् । इति सारमेयेनोक्ते महीभुजाऽभिषिक्तः स द्विजाधिपो मातंगवरमारुह्य ययौ । ततस्तस्मिन्प्रमुदिते याते पृथुविस्मयाः सचिवाः शापोऽयं वरोपमोऽस्य दत्त इति पृथगूचिरे । एतदाकर्ण्य स्मितपूर्वाभिभाषी रामोऽब्रवीत् । रहस्यमस्य श्वैव जानाति । अथ राज्ञा जन्मान्तरस्थितिं

पृष्टः श्वाऽवदत् । पुराऽहं सत्रे कुलपतिरासम् । यद्यपि देवद्विजार्थेषु शुचिरभूवम् । तथाऽपि तामसीमधमांचेमां योनिमवाप्तवानास्मि । अयं तु पुरुषः स्वभावेन क्रूरः पुनः क्रुधा-ज्वलन् ब्रह्मबन्धुः कौलपत्येन न जाने किं भविष्यति ? यो गोब्राह्मणसुरार्थेष्वधिकारतां गच्छेत्तस्य पापशापसखी नरकाभिमुखी मतिर्भवति । योऽमर्यादोऽत्र ब्राह्मणादिधने स्पृहां कुर्यात् । देहान्ते तस्य नरके वासो निश्चित एव । एतदाकर्ण्य सामात्यो रामो विस्मयस्मेरलोचनो बभूव । ततः श्वाऽप्यनशनेन वाराणस्यां प्राणांस्त्यक्त्वा सद्गतिं लेभे । अथैकदा च्यवनादयो मुनिवरा रामं समभ्येत्य पाद्यासनादिसत्कारैः संपूजिताः प्रोचुः । रघुवीर ! मलिनाचारान् निशाचरान्निघ्नता प्रतापनिधिना त्वया जगद्वितिमिरं कृतम् । किन्तु देव ! दिनेष्वेतेषु मधुसुतो रावणस्वस्रेयश्च लवणो लोकान् बाधते । तत् पित्रा त्रिपुरान्तकात् एकपुत्रावधि शूलमिवासह्यं शूलं प्राप्तम् । स दुरात्मा रुद्रशासनाद्रौद्र-कर्माणि करोति । स शूलरहितस्तु वध्यः सशूलश्च द्विषां विघातकः । किम्बहुना तेन प्रतीचीदिक्तु मुनिविहीना कृता । भवानधुना प्रमाणमिति निगद्य महर्षयो विरेमुः । तच्छ्रुत्वा विरचितांजलिर्दाशरथिर्भवतामभीष्टं सत्वरं करोमीत्युक्त्वा तान्विससर्ज । ततः पृथुवि-क्रमः शत्रुघ्नः काकुत्स्थं लवणवधारंभे शासनं ययाचे । अथ रघुपतिस्तस्याऽभ्यर्थनामंगी-कृत्य तस्मै दीप्तं ब्रह्मास्त्रमपि दत्त्वोवाच । वत्स ! स दैत्यः शूलरहितो वध्योऽन्यथाऽवध्य इति । ततो रथिप्रवरोऽरिहंता विधिवदभिषिक्तः प्रतस्थे । सोऽथ व्रजन् रजनीमेकां प्राचेतसाश्रमे न्यवसत् । ततो भरतानुजो यूपांकितां भूमिं विलोक्य मुनिमपृच्छत् । भगवन् कस्यैषा यज्ञभूमिरभूत् ? मुनिराजोऽब्रवीत् । पुराऽत्र सूर्यवंशीयस्य सुदासभूपतेः सूनुः सौदास इति प्रसिद्धो राजा बभूव । स बाल एव मृगयाशीलोऽभवत् । अथैकदा स वने तौ सिंह-रूपिणौ राक्षसौ ददर्श । याभ्यां सकलं गहनं निर्मृगं कृतम् । ततस्तयोरेकस्तु तेन सायकेन हतः । द्वितीयश्च भयात्पलायितः । अथैकदा राजाऽश्वमेधं चकार । तत्र सोऽवशिष्टो राक्षसोऽपि स्वमित्रनिधनप्रतिक्रियांकर्तुमाजगाम । ततोऽवसरमवाप्य स वसिष्ठरूपं धृत्वा यज्ञान्ते नरेश्वरं मांसभोजनं ययाचे । अथ राज्ञा तथेत्युक्ते स सूदरूपो राक्ष-सो मनुष्यमांसं संस्कृत्य भोज्यगृहे तस्थौ । ततो वसिष्ठो राक्षससंस्कृतं राज्ञोपनीतं च तदशनं दृष्ट्वा कुपितस्तस्मै शापं व्यसृजत् । राजन् ! द्वादशवर्षाणि मनुष्यमांसभक्षको भविष्यसि । तच्छ्रुत्वा सोऽपि कोपाददा पाणिना शापजलं जग्राह । तदा महाराज्ञी मदयंती क्रुद्धं महीपतिमुवाच । आर्यपुत्र ! महामुनिर्वसिष्ठोऽयमस्माकं कुलगुरुः । तच्छ्रुत्वा पत्नीगिरा राजा तत्तोयं पादयोर्जग्राह । येन निर्धौतपादौऽसौ कल्माषपादतां जगाम ।

भरतानुज ! तस्य भूपालस्येयं यज्ञवसुधेति कथयित्वा महामुनिर्वाल्मीकिर्विरराम । तस्मिन्नेवावसरे तत्र तपोवने सीताऽश्विनीकुमाराविव यमजौ पुत्रौ प्रासूत । ततः शिष्यैः प्रियाख्यानादाहूतः करुणानिधिर्वाल्मीकिर्बालकयोस्तयोः कुशौ रक्षां विदधे । अथ शत्रुघ्नो रामस्य तनयौ जाताविति शुभसमाचारं श्रुत्वाऽत्यानंदेन प्रावृट्पयोधरैः श्यामां निशां तत्राश्रमे निनाय । सोऽथ प्रभाते मुनिमामंत्र्य सप्तभिर्दिनैर्गत्वा यमुनातीरस्थे च्यवनाश्रमे रात्रिमनैषीत् । ततः कथान्ते स कुतूहलाच्च्यवनं पप्रच्छ । महर्षे ! स भूतभयकृल्लवणः किं पराक्रमोऽस्ति ? तच्छ्रुत्वा भार्गवोऽब्रवीत् । दाशरथे ! तस्याऽसुरस्य घोरं कर्म वक्तुं न पार्यते । पुरा यौवनाश्वो मान्धाता नाम राजा बभूव । स समग्रां पृथ्वीं स्ववशे कृत्वा शक्रासने स्पृहां चक्रे । अथैकदा देवराजो देवलोकं जेतुमुद्यतं तं प्रोवाच । राजन् ! त्वया यदाऽखिला पृथ्वी न विजिता । तदा स्वर्गजये ते मतिः कथं जाता ? किम्बहुना । पूर्वं लवणासुरं जित्वा ततः साहसं कुरु । एतदाकर्ण्य मान्धाता ह्रियाऽधोमुखो भूत्वा निरुत्तरोऽभवत् । अथैकदा राजा तं दानवं जेतुं ययौ । ततस्तयोर्दैत्यनरेन्द्रयोर्घोरं युद्धमभूत् । येन सर्वभूतानामपि संत्रासविस्मयावभूताम् । अथ लवणेन प्रहस्य यच्छूलं प्रक्षिप्तं तत् क्षितिपतिं युधि क्षणेन भस्मसाच्चक्रे । एवं तस्मिन् सभृत्यबलवाहने भूपतौ निर्दग्धे तच्छूलं पुनरपि दैत्यपतिकरं ययौ । रिपुघ्न ! तस्मात् शूलरहितो युद्धे वध्योऽन्यथा दुर्जय इति मुनिगिरम् श्रुत्वा राजा बाढमित्युक्त्वा प्रतस्थे । अथ प्रभाते शत्रुघ्नो दैत्यकाननं गतः । तत्र प्राणिभारं नीत्वाऽऽयान्तं राक्षसं ददर्श । ततस्तेनाहूतो लवणः कोपात्पादपं समुत्पाट्य तस्मै चिक्षेप । रणदक्षः शत्रुघ्नः पत्रिभिस्तं चिच्छेद । एवं बहुशः क्षिप्तेषु वृक्षेषु क्षीयमाणेषु कोपाकुलो लवणः शत्रुघ्नमूर्ध्नि विशालं तरुं प्राक्षिपत् । ततस्तेन वेगादभिहतो विकीर्णहेमकवचो भरतानुजो धरातले निपपात । एवं तस्मिन्मूर्छिते दिवौकसां हाहाकारो मुनीनां च संदेहदोलाकुलितं मनो बभूव । अथ दैत्यः शत्रुघ्नं हतं विज्ञाय शूलं न जग्राह । यतो विनाशोन्मुखानां मणिमंत्रौषधादिलोपो हि भवति । ततो लब्धसंज्ञः शत्रुघ्नः कार्मुकमाकृष्य रघुनाथेन वितीर्णंशरं संदधे । ततस्तस्मिन् प्रादुर्भूते सर्वभूतानां प्रलयसूचको मोहो बभूव । अथ सिद्धसुरगंधर्वकिन्नराः पितामहं प्रोचुः । भगवन् ! शरोऽयं लोकक्षयार्थं सृष्ट उत लवणवधाय ? तच्छ्रुत्वा प्रजापतिरुवाच । महाशयाः ! दुरितापहरः शरोऽयं मुरारिणा मधुकैटभवधे निर्मितः । भवन्तश्चिन्तां विहाय शरेणानेन दारिततनुं दानवं पश्यंतु । यः सायकाद्भयं नास्ति । इत्युक्ते पद्मगर्भेण त्रिदशमण्डले च स्वस्थे शत्रुघ्नेन द्वारि निरुद्धो दानवः शूलं

न प्राप । अत्रान्तरे जवात् प्रक्षिप्तः स शत्रुघ्नशरो राक्षसस्य वक्षःस्थलं निर्भिद्य क्ष्मां प्रविश्य च पुनः शत्रुघ्नमाजगाम । एवं लवणे निहते शूलं पुना रुद्रकरम् ययौ । एतदालोक्य सुरसिद्धर्षिसंघाः शत्रुघ्नं संपूजयामासुः । ततः स तद्राज्यत्र यमुनावेणिकां मथुरां नाम पुरीं निर्ममे । अथ द्वादशाभर्वर्षैः श्रीरामदर्शनोत्सुकोऽरिहंता ससैन्योऽयोध्यां प्रययौ । ततो व्रजन् स रजनीमेकां वाल्मीकेराश्रमे निनाय । तत्र देवगणैर्गीयमानगुणं रामचरितं श्रुत्वा हर्षनिर्भरः स त्रिदिवस्थमिवात्मानं मेने । ततो भरतानुजः कतिपयैर्वासरैरयोध्यामवाप्य श्रीराघवं द्रष्टुं नृपालयं प्रविवेश । ततश्चरणानीतिशेखरः स रघुपतिं प्रणम्य प्रीत्या तेन परिष्वक्तो यथावृत्तं जगाद । सोऽथ महीभुजा प्रियतरैश्च पूज्यमानस्तत्र स्थित्वा कालेन भ्रातुराज्ञया मथुरामेव जगाम । अथैकदा कश्चिद् द्विजो मृतपुत्रं स्कन्धेगृहीत्वा राजद्वारमुपेत्य च गद्गद्गिरा रामं प्रोवाच । अहोवताऽयं वृद्धस्य मम जीवितं सुतः क्व गतः ? धर्मानुवर्तिना मया यदा न किंचिद् दुष्कृतं कृतम् ? तदा कस्येदम् कर्मणः फलं यद् गतजीवितं पुत्रं पश्यामि ? धर्मनिरते महीपतौ नाऽकालमृत्युः, न दुर्भिक्षं, न व्याधिर्न च तस्करा भवंति । किम्बहुना । पुण्यकर्मणां नृपाणां जनपदे करुणध्वनिरपि न श्रूयते । यत्र क्रियाहीना ब्राह्मणा, दुर्वृत्ताः क्षत्रियाः, कृपणा वैश्याः, सेवापराङ्मुखाः शूद्राः कुलयोषितश्च स्वैरिण्यो भवंति । तत्र जनाश्चाकालमृत्यवो जायंते । राजा तु पापानि कुरुते । दुर्बला जनता वृथैव पीड्यते । एकोऽपथ्यं सेवतेऽन्यश्च म्रियते । कुनृपादराजकता श्रेष्ठा । कुपुरुषाश्रयत्वान्नार्या वैधव्यमेव वरम् । वृद्धस्त्वहं जीवामि । किन्तु पंचवर्षोऽयं शिशुर्मृतः । अहो नु राजदोषेण मम कष्टमापतितम् । सुते मृते नाऽहं जीवामि । मयि मृते ब्राह्मणी न जीविष्यति । अहो पापस्य नृपतेरग्रे ब्रह्महत्यापरंपरोपस्थिता । एतदाकर्ण्य यथा केदारजलेन केदारः पूरितो भवति । तथा तद्दुःखेन दुःखिताशयो रामो बभूव । सोऽथ सामात्यं मुनिमण्डलं सभायां समानाय्याऽपि दुःखसंतापचिन्तया क्षणमात्रं तु वक्तुन्न शशाक । एतदालोक्यात्रिकौत्सवसिष्ठगौतमाः किंकर्तव्यविमूढा बभूवुः । नारदमौद्गल्यवामदेवमार्कण्डेया अपि विस्मयाविष्टा अभूवन् । भृगुकाश्यपकात्यायनाश्च चित्रन्यस्ता इव निश्चलास्तस्थुः । ततो भूभुजा बालनिधने कारणं पृष्टेषु तेषु क्षणं संचिन्त्य देवर्षिर्नारदस्तमभाषत । राजन् ! पुरा कृतयुगे एकवर्णं समक्रियं मृत्युहीनं ब्रह्ममयं च जगदासीत् । ततस्त्रेतायुगे ब्रह्मक्षत्रं समतपोबलं वैश्यशूद्रोपकरणमवधिजीवितं च बभूव । ततोऽनृताख्यं पादमधर्मो निदधे । येन धर्मस्त्रिपादभूत् । लोकाश्चारागद्वेषाकुला अभूवन् । अथाऽधर्मस्य यदा द्वितीयः पादः समपद्यत । तेन द्वापरसंज्ञकोऽसौ युगः प्रावर्तत । धर्मश्च

तदा द्विपादभिधीयते । युगेऽस्मिन् वैश्यानान्तपोवृद्धिः शनैः शनैर्भवति । शूद्रस्य तपः, नोपदेशः, न च व्रतमस्ति । शूद्रो यद्वह्नौ जुहोति, यत्तपः कुरुते, मंत्रदीक्षागुरुश्च भवति । तत्पूर्णं कलिलक्षणं ज्ञेयम् । कलौ प्रबलविप्रत्वे जनोऽयं शूद्रस्तपश्चर्यारतोऽस्ति । तेन कर्मविपर्ययेण ब्राह्मणसुतो मृतः । राजेन्द्र ! पूर्वं स्वयं तमन्विष्य ततो यथोचितं प्रतीकारं कुरु । यतो राजा प्रजानां पुण्यपापयोश्चतुर्भागहरः कथितः । निशम्यैवद्देवर्षिवचनं स खड्गो रामः सौमित्रिमुवाच । भ्रातः ! शिशारस्य संनिधानं तैलद्रोण्यां निधीयता मित्युक्त्वा स्मृतमात्रमुपस्थितं पुष्पकं समारुह्य व्योम्ना प्रययौ । सोऽथ प्रतीचीमवलोक्योत्तरां दिशं ययौ । किन्तूभयत्राऽपि जनताया स स्थितिविषयं न ददर्श । ततः स प्राचीं गतवान् । तत्रत्यामपि धर्ममर्यादां दृष्ट्वा रघुपतिरतीव प्रसन्नोऽभवत् । सोऽथ दक्षिणामाशां गत्वा तत्र गिरेरुत्तरपार्श्वतः पंकजरजः पुंजारतं सरोऽद्राक्षीत् । ततो रामस्तत्र विचरंस्तपः क्षामं लम्बमानमधोमुखं च पुरुषं दृष्ट्वा कस्त्वमुग्रतपोनिधिरिति तम पृच्छत् । ब्राह्मणोऽसि वा क्षत्रियः ? वैश्यजातीयो वा शुद्रः ? सत्यं सत्यं कथय । लोके सत्यमेवामृतम् । तपोऽपि सत्ये प्रातिष्ठितमास्ति । व्रतं हि सत्यमूलम् । सत्यशून्यं सर्वं धर्माङ्गं केवलं कायक्लेशायैव भवतीति राघवेण पृष्टे व्रतनिश्चलः सोऽधोमुखेन वपुषा वैपरीत्यं प्रदर्शयन्निव प्रत्यवदत् । राजन् ! जात्या शूद्रोऽहम् । मम नाम शम्बूकोऽस्ति । किंतु तपसाऽहं सशरीरो दिवं गन्तुमिच्छामि । एतदाकर्ण्य कुपितः काकुत्स्थो दुःखतरोर्मूलमिव खड्गेन तस्य शिरश्चिच्छेद । ततः शक्रादयो देवाः प्रीत्या पुष्पाणि विकीर्य वरं गृहाणेति रघुनंदनं प्रोचुः । निशम्यैतद्देवगणवचनं रघुपतिरुवाच । देवाः ! यदि यूयं प्रसन्नास्तर्हि ब्राह्मणपुत्रोऽयं जीवितं समाप्नोतु । इति सत्त्वानेधिना रामेणोक्ते त्रिदिवौकसः प्रोचुः । काकुत्स्थ ! संतापं त्यज । भवता यदैव शूद्रतपस्विनः शिरः कृत्तं । तदैव त्वज्जयशब्देन सहैव शिशुः समुत्थितः । रघुवीर ! वयमगस्त्याश्रमं गच्छामः । तत्रैव त्वया सह नेत्रपात्रामृतस्यन्दी नः समागमो भविष्यति । महामुनिरगस्त्योऽन्तर्जलाद् द्वादशभिर्वर्षैः समुत्थितोऽतस्तस्य तपश्चर्यासमाप्तिरद्यैव जातेत्युक्त्वा यातेषु तेषु निवर्तमानो रघुराजः कुसुमामोदमत्तालिवलयाकुलं काननं व्यलोकयत् । अत्रान्तरे स्थानविवादेन मिथः संजातकलहौ वृद्धौ गृध्रोलूकौ राघवं समभ्येत्य प्रोचतुः । राजन् ! परमैश्वर्यात् त्वामिन्द्रः, अमृतप्रदानात् त्वं सोमः, पापदहनात्पावकः दण्ड्यानां च शासनाद्यमोऽपि त्वमसि । सर्वदेवमयो विष्णुरपि त्वमेव । किम्बहुनाऽस्मिन् विवादास्पदे विषये भवानेव प्रमाणम् । ततः गृध्रोऽवदत् । एष उलूको ममालयं हरति ।

तच्छ्रुत्वोलूकोऽवादीद्यं ममावासं छिनत्ति । निशम्यैवमुभयोर्विवादं रामोऽपृच्छत् । गृध्र ! तवालये वसतः कियान् कालो जातः ? सोऽब्रवीत् । यदा द्विबाहुभिर्मनुष्यैर्भूर्मिर्व्याप्ताऽभूत् । तदाप्रभृति मे प्रभुत्वम् । अथ पृथक् पृष्ट उलूकोऽप्यवदत् । यदा पृथ्वी वृक्षैरावृताऽभवत् । तद् दिनादारभ्य ममाऽत्र निवासः । रघुनाथ एवमेतयोर्विवादं श्रुत्वा वृद्धामात्यैः सह विचार्य प्रोवाच । पद्मयोनेः सर्गेऽस्मिन् विष्णुर्यदा स्वांगमलोद्भूतौ मधुकैटभौ जघान । तदा तन्मेदसा पूर्णा भूमिर्द्रुमावृताऽभूत् । ततो मनुष्यैः संपूर्णाऽभवत् । तस्माद् गृध्रः पराजयं प्राप्तवानिति क्रुद्धेन रामेणोक्तेऽशरीरिणी वागुवाच । राजन् ! गृध्रस्यास्य त्वद्दर्शनाच्छापोऽद्य क्षयमगमत् । अयं पूर्वजन्मनि ब्रह्मदत्ताख्यो नरपतिरासीत् । भोजनं मांसमालोक्य गौतमेन शप्तो गृध्रतामिमां प्रयातः । एतदाकर्ण्य विरतप्रकोपे रामभद्रे गृध्ररूपं परित्यज्य ब्रह्मदत्तः सहसा दिवं जगाम । अथागस्त्यं पूजयित्वा यातेषु देवेषु रामोऽपि तं समभ्येत्य ववंदे । ततो मुनिवरोऽपि प्रतिपूज्य तस्मै तरुणार्कप्रभादीप्तं दिव्याभरणं प्रादात् । एतदालोक्य रामोऽब्रवीत् । भगवन् ! नाऽयं प्रतिग्रहो नः समुचितः । किंतु भवच्छासनमलंघ्यं मन्ये । प्रभोऽनुग्रहं कृत्वा किमप्युपदिशेति रघुनाथेनोक्ते कुंभयोनिरुवाच । पूर्वमराजके सर्गे क्षुवाभिधो राजा बभूव । शक्रस्तस्मै प्रभुतां प्रादात् । वरुणः स्वरूपमयच्छत् । कुबेरो धनादानप्रदाने ददौ । यमश्च शासनशक्तिं व्यतरत् । तस्मादैन्द्रेणांशेन पार्थिवा रत्नान्यर्हंतीति मुनिनोक्तो रघुराजस्तद्गृहीत्वाऽपृच्छत् । ऋषिराज ! पुरेदमाभरणं कस्यासीत् ? तच्छ्रुत्वा मुनिवरोऽब्रवीत् । राजन् ! समाकर्णय । पुराऽहं निःशब्दे, निद्रितविहंगमे, सस्य फलपुष्पाढ्ये, निर्जने च वने भ्रान्त्वा प्रफुल्लकमलसम्पन्नं तडागमपश्यम् । तस्मात् सरसश्चाऽदूरे मया कांतिमान् सजीव इव शवोऽपि दृष्टः । ततोऽहं विस्मयात्तत्रातिष्ठम् । अत्रान्तरे रत्नरुचिरं, हंससंयुतमप्सरोगणसेवितं च विमानमगद्राक्षम् । अथ चारुकेयूरकुंडलः कश्चित्पुरुषो विमानादवरुह्य शनैः शनैः शवान्तिकं प्रययौ । सोऽथ यथाकामं तस्य शवस्यातिपीवरं यथारुचिमांसं भुक्त्वाऽतिविमलसरसि सलिलं स्पृष्ट्वाऽतिभास्वरं विमानमारुरोह । तस्मिन्नेवावसरे को भवानिति मया पृष्टः सोऽब्रवीत् । मुनिराज ! अहं विदर्भराजस्य सुदेवस्य श्वेताभिधानः पुत्रोऽस्मि । सुरथश्च ममाऽनुजोऽस्ति । पुराऽहं वर्षसहस्राणि निहतकंटकं राज्यं भुक्त्वा कालेऽनुजमभिषिच्य तपसे वनमगमम् । तत्र त्रीणि वर्षसहस्राणि तपः कृत्वा ततो ब्रह्मर्षिगणसेवितं ब्रह्मलोकमगाम् । ततः संजातक्षुत्पिपासेन मया पृष्टो ब्रह्माऽवदत् । राजन् ! त्वयाऽऽश्रमेऽभ्यागताय न कदाप्यशनं दत्तम् ।

केवलमिदं स्वशरीरमेव पूरितम् । तस्मात्तवायं देह एवाऽऽहारोस्तु । यथारुचि भक्षय । सर्वं दत्तमेव समासाद्यते । नाऽदत्तं कुतो लभ्यते ? अस्मिन् कर्मक्षेत्रेऽनुप्तं भोगबीजं नह्युपजायते । एकदा क्षुधाक्रान्तो यतिस्तेगृहाद्विमुखो गतवान् । तस्मिन्नतृप्तेऽस्मिंल्लोके त्वमपि क्षुधा शुष्कतां यास्यसि। कालेन करुणां कृत्वाऽगस्त्योऽत्रागत्य कृच्छ्रादस्मात्त्वां तारयिष्यतीति स्वयं विरंचिना प्रोक्तोऽहं सदा स्वशरीरस्य नवं मांसं भक्षयामि । भगवन् ! स त्वं किल्बिषक्षयादद्य मया दृष्टः । कृपया भूषणमिदं गृहीत्वा मामुद्धर । तच्छ्रुत्वा करुणाकुलोऽहं भूषणप्रतिग्रहं कृतवान् । ततो विनष्टपूर्वदेहो राजा दिव्यवपुर्भूत्वा विमानेन पुण्यार्जितां दिवं जगाम । राघवेन्द्र ! तदेतद्भूषणं मया तस्मात्प्राप्तम् । त्वमेवास्य समुचितं धामाऽसीत्यभिधाय मुनिवरो विरराम । एतदाकर्ण्य रामः पुनरपृच्छत् । भगवन् ! तद्वनं जनवर्जितं कथमभूत् ? तच्छ्रुत्वा मुनिरुवाच । दाशरथे ! आसीदिक्ष्वाकुर्नाम महीपालः । तस्य दण्डनामकः पुत्रोऽभवत् । अथैकदा राजा पुत्रं दुराचारं विदित्वा तं विंध्यगह्वरभूमिषु नृपं चक्रे । सोऽथ तत्र मधुमत्ताख्यं पुरं कृत्वा पुरोहितमौशनसं च विधाय प्रजाकार्यरतो बभूव । अथैकदा राजा कुसुमोल्लासहासविकासिनि मधौ रुचिरे भार्गवाश्रमे विचचार । ततः स राजा तत्र राजीवलोचनामरजां शुक्रात्मजां विलोक्य मन्मथाविष्टो रतिसंगमं ययाचे । एतदाकर्ण्य साऽब्रवीत् । राजन् ! गुरुसुताऽहं ते सर्वथैवाऽगम्या । पतंग इव रूपलुब्धो भूत्वा त्वं क्षयोत्संगं मागमः । तच्छ्रुत्वा राजोवाच । सुभ्रु ! निर्जने लब्धां त्वां त्यक्तुं कथमहमुत्सहे ?, यद्यपि त्वां पितुरायत्तां जाने। तथापीदं स्मरस्फारानिलोद्धूतं मानसं कथं स्तभ्यते ? इत्युक्त्वा मातंगो नलिनीमिव विधूतकरपंकजां तां कन्यां बलाद्दूषयित्वा स्वनगरं जगाम । अथ शुक्रस्तमाश्रमं समभ्येत्य निम्नाननां साश्रुनयनामरजां च दृष्ट्वा खेदकारणं पप्रच्छ । ततो विदितवृत्तान्तो राजानं शशाप । तच्छापाद्दण्डभूपतिपुरे पांशुवृष्टिरभवत् । यया दग्धः सराष्ट्रो राजा क्षयमयासीत् । तदाप्रभृति जनोज्झितं दण्डकारण्यमभूत् । ततः पित्रादिष्टमेतदरजाख्यं सरो लोके प्रथितमभवत् । एवमाकर्ण्य संतुष्टो रामः प्रभाते मुनिं समामंत्र्य स्वपुरीं जगाम । सोऽथ राजधानीं प्रविश्य सभाभवनं समेत्य च रत्नासनस्थितोऽनुजदर्शने द्वाःस्थं समादिदेश । ततः सोत्कंठौ भरतलक्ष्मणौ प्रविश्य प्रणिपत्य च ब्राह्मणाशिशोर्जीवितावार्तिं जगदतुः । अथ कथांते रघुपतिस्तौ बभाषे । भ्रातरौ ! मे मनोरथो राजसूयसमारंभे वर्तते। तच्छ्रुत्वा कृतांजलिर्भरतोऽवदत् । भूपाल ! त्वमेवार्हसि । कोऽपरोऽस्य राजसूयस्याऽधिकारी वर्तते ? रघुराज ! यथा भवान् नृपश्रेष्ठस्तथाऽसावपि यज्ञप्रवरोऽस्ति । किंतु राज-

सूयान्ते जगत्क्षयो भवत्येव । पुरा सुधानिधेः सोमराजस्य संपूर्णे राजसूये तारकामयः संग्रामोऽभवत् । यत्र ज्योतिषां घोरः क्षयो बभूव । एवं वरुणस्याऽपि यज्ञे निर्वृत्तेसंगरोऽभूत् । देव ! पूर्वं शतक्रतुरपि यदा बृहद्यज्ञं चकार । तदाऽपि विश्वक्षयक्षमं देवासुरयुद्धमासीत् । महाराज ! राजर्षेर्हरिश्चन्द्रस्याऽपि यज्ञावसाने आडीवके युद्धे स्थावराणामपि विनाशोऽभवत् । पृथ्वीनाथ ! त्वं कारणादस्मात् सर्वसत्त्वाहितरतत्वमुपेक्ष्य त्रैलोक्यायासदं यज्ञं कथं कर्तुमाभिलषसि ? एतदाकर्ण्य रामो भरतं प्रशंसन् प्रोवाच । सर्वभूताऽभयं क्रतुशताधिको महायज्ञ इत्यहं मन्ये । ततो लक्ष्मणः सविनयं पृथिवीपतिं बभाषे । राजाधिराज ! राजसूयसमोऽश्वमेधोऽपि महामखोऽस्ति । पुरा विश्वविजयी वृत्रासुरो नाम दैत्यराजो बभूव । एकदा शक्रो वज्रेण तपसि स्थितं तं सहसा जघान । ततो ब्रह्महत्यापिशाचिका शक्रमालिलिङ्ग । ययाऽऽक्रान्तः स सर्वभूतानामदृश्यो बभूव । अथ विष्णुगिरा देवगणाः शक्रं समेत्य किल्बिषशांतये तं हयमेधे दीक्षितं चक्रिरे । ततो देवराजस्य विधिवद्यज्ञे समाप्ते देववृन्दैश्चतुर्धा विन्यस्ता ब्रह्महत्या तन्मुमोच । तत्राद्या जलस्थिता ब्रह्महत्या जलदूषकं प्रविशति । द्वितीया वृक्षस्था पर्वसु वृक्षच्छेत्तारमुपसर्पति । तृतीया रजस्वलासु नारीषु स्थित्वा तत्संसर्गिणं गच्छति । चतुर्थी च स्वयं ब्राह्मणहन्तारमभ्येति । राजन् ! एवं मघवाऽश्वमेधप्रभावान्निष्कल्मषो भूत्वा पुनः स्वपदवीमाससाद । एवं लक्ष्मणभाषणं श्रुत्वाऽतिसंतुष्टो रघुनाथोऽब्रवीत् । सौमित्रे ! त्वया यदुक्तं तत्तथैव । लोकेऽश्वमेधसमं पावनं नहि विद्यते । श्रूयते किल श्री कर्दमप्रजापतेः पुत्र इडो नाम बाल्हीकेषु राजाऽभवत् । प्रजारक्षणव्रतः स सुधाकर इव सर्वभूतानां प्रियदर्शनो बभूव । अथैकदा स महीपतिः ससैन्यः पुष्पेषुमित्रे श्रीचैत्रमहोत्सवे मृगयारसात् कानने विचरन्नकस्मात् स्कन्दजन्मवसुधां प्राप । तस्मिन्नवसरे तत्र भगवान् विधुशेखरः कुसुमसायकं जीवयन्निव भगवत्या सह रममाण आस्ते । किम्बहुना । तत्र स्वेच्छाविहारिणः श्रीकण्ठस्य शासनात् खगमृगवृन्दैः सह सर्वेऽपि गणाः स्त्रीत्वं प्रापुः । एवं सचराचरे सर्वभूतगणे स्त्रीभूते तत्र शशांकमौलिः सदाशिवो विललास । अत्रान्तरे सभृत्यबलवाहनो भूपतिरपि तं देशमवाप्य सहसा स्त्रीरूपो बभूव । सोऽथ रुद्रशासनं ज्ञात्वा तमेव शरणं गत्वा चोपोषितश्चिरं जपध्यानस्तोत्रपरायणो बभूव । अथैकदा गौरीपतिर्विहस्य तमुवाच । राजन् ! पुरुषत्वं विना यदभीष्टं तत्कथ्यताम् । तच्छ्रुत्वा किंचिद्भग्नमनोरथो नरपतिर्भगवतीं शरणमयासीत् । ततो गिरिराजसुता तस्याऽभिप्रायं ज्ञात्वा प्रोवाच । त्वं मासि मासि निजमतीतं रूपं न स्मरिष्यसि । इति देवीवचः श्रुत्वा

स्त्रीभूतैः सेवकैः सह निवर्तमानो वनान्तरं गत्वा च क्वाऽपि रुचिरं सरो ददर्श राजा। ततो हरशासनात् स्त्रीरूपं धृत्वा नूपुररवावाकृष्टकलहंसकुला सा जलजोदरान्निर्गताऽपरा लक्ष्मीरिव शनैः शनैः सरस्तीरे विचचार। अत्रान्तरे सोमसुतो बुधस्तत्र तपसि स्थितस्तां सुलोचनां बिम्बोष्ठीं च दृष्ट्वा सहसा कुसुमेषुशरार्दितो धृतेः पात्रं न बभूव। सोऽथ तदनुगाङ्गनाः समुपसृत्य प्रियं वचो जगाद। वरवर्णिन्यः ! एष रम्यपुष्पफलोचितो देशोऽस्ति। तत्र गत्वा किंपुरुषैः सह प्रियसंगमः क्रियताम्। तच्छ्रुत्वा ताः स्त्रियः किंपुरुषाश्रिते शैलतटे ययुः। ततस्तासु यातासु स तां कान्तां समेत्य सप्रश्रयं प्रोवाच। सितस्मिते! ऽखिललोके आनंदस्यंदिनी तवेयं कांतिर्मनोभुवः कीर्तिरिव विभाति। सुभ्रु ! तस्य स्मरमित्रस्य शर्वशिरोमणेः सुधासिन्धोरिन्दोश्च पुत्रोऽहं बुधोऽस्मि। कृपया मां भजस्व। एवं सुमध्यमा सा तस्य मधुरं वचः समाकर्ण्य मन्मथाविष्टा भूत्वा तथेति प्रत्यपद्यत। ततस्तेन रममाणा सा घनस्तनी नीतं मधिमासर्वं मासं क्षणमिव मेने। अथ मासावसाने सहसैव शयनादुत्थिता सा स्त्रीभावं विस्मृत्य सपदि महीपतिर्बभूव। सोऽथ बुधं समेत्यापृच्छत्। भद्र ! राजाऽहं मृगयारसात्काननं प्रविष्टवान्। न जाने मे तत् सैन्यं क्व गतम् ? सम्प्रति सैन्यहीनः कुत्र गच्छामि। अहमत्रैव वसामि। राज्यं तु ममानुजः शशिबिन्दुः स्वयमेव करिष्यतीति तेन भूभुजोक्ते बुधस्तं प्रत्यवदत्। राजन् ! तव भृत्यास्तु शिलावर्षेण गहने निषूदिताः। सुप्तेन त्वया न ज्ञाताः। वनेऽस्मिन् मया संपूजितस्त्वं कंचित्कालं प्रतीक्षस्व। तच्छ्रुत्वा स विविधाः कथाः कुर्वन् तत्रैव न्यवसत्। ततो मासे प्रयाते पौरुषं विस्मृत्य च कान्तैव बभूव। साऽथ नवमे मासि पूर्णे पूर्णचन्द्रोपमं पुरूरवसमात्मजं प्रासूत। ततो बुधो जातमात्रं तं तनयं चन्द्रगृहे निक्षिप्य भूपतेः स्त्रीभावविनिवृत्तये चिन्तां चकार। सोऽथ संवर्तच्यवनप्रमुखान्मुनीन् समानाय्य रुद्रप्रसादनोपायेन तां तां क्रियां चिन्तयामास। अत्रान्तरे समायातः प्रजापतिः कर्दमस्ताननुवाच। वत्साः ! महेश्वरोऽश्वमेधेन तुष्यतीत्यभिधाय गते मुनिवरे ते बुधाश्रमे यज्ञानुष्ठानं चक्रुः। ततस्तत्र नृपतिकृतौ संपूर्णे शर्वस्तुतोष। तद्वाक्याच्च भूपः पौरुषमवाप। प्रतिष्ठानपुरे तत्पुत्रः पुरूरवा अभूत्। अतोऽहं ब्रवीमि यदश्वमेधसमो यज्ञोऽपरो नास्ति। निशम्यैतद्रघुपतिवचनं भरतलक्ष्मणौ हर्षमवाप्य हयमेधसमारंभेऽतियत्नवंतावभूताम्। अथ सार्वभौमस्य दाशरथेर्नैमिषतटे यज्ञारंभे मुनिवराः केचिद् ब्रह्मलोकादपरे दिवोऽन्ये च पृथक् २ भूभागेभ्य समाययुः। ततः प्रभृति सुग्रीवविभीषणाद्या रामसखा माण्डलिकाः सामन्ताश्चाऽपि यज्ञमहोत्सवं द्रष्टुं समुपस्थिता अभूवन्। अथ हेमरत्नानां

राशिभिः पूरितेयज्ञनिवेशने पुथक्पृथग्देशेभ्योऽपि नागरिकाः समाययुः। अथ शत्रुघ्नादिभिः सुरक्षिते हयोत्सृष्टे रामाज्ञया चतुरंगिणी सेनाऽपि तमनुययौ। ततो महीमहेन्द्रस्य काकुत्स्थस्य नानार्थिसार्थसंपूर्णसर्वाशाकल्पद्रुमो महायज्ञः प्रावर्तत। तस्मिन् समये रामस्य या श्रीरभवत्। सा स्वप्नेऽपि सोमं नायाति। वरुणशक्रयोश्चातिदूरवर्तिनी। किम्बहुना। सा विभूतिः कुवेरस्याऽपि कुतः? तत्र कुशलशिल्पिभिः कृता हिरण्मयी सीता राघवप्रीत्या वनात्स्वयमागतेव शुशुभे। ततश्चतसृष्वपि दिक्षु परिक्रम्य सोऽश्वो वाल्मीकिमुनेराश्रममगात्। तस्य घोटकस्य कण्ठाभरणस्थाने पद्यमेतल्लिखितमासीत्।

एकवीराऽस्ति कौसल्या यस्याः पुत्रो रघूद्वहः।
तेन रामेण मुक्तोऽयं वाजी गृह्णात्विमं बली॥

एतदालोक्य लवोऽब्रवीत्। भो २ वटवः! तत्किमक्षत्रिया भूतधात्री? यदेवमुद्घोष्यते? परिवृत्य लोष्टैरभिघ्नंतो नयतैनमश्वम्। एष रोहितानां मध्ये वराकश्चरतु। तच्छ्रुत्वा ते प्रोचुः। कुमार! कृतमनेनाश्वेन। खड्गपाणयः सैनिकास्तु समीपे दूरेचाश्रमतस्तदेहि हरिणप्लुतैः पलायामहे। ततो विहसन् लवः पश्यतां सैनिकानां हयं तरुमूले ववंध। अथ विहसन् वाणान् किरन्तं लवं समवलोक्य चन्द्रकेतुः सारथिमुवाच। भद्र! पश्य पश्य। कोऽप्ययं वीरवालकोऽविरतगुणगुंजत्कोटिना कार्मुकेण समरे चमूनामुपरि शरतुषारं किरतु। तच्छ्रुत्वा सुमंत्रोऽब्रवीत्। आयुष्मन्! अतिशयितसुरासुरप्रभावं श्रीरामभद्रतुल्यरूपं शिशुमवलोक्य कौशिकमखद्विषां प्रमाथे धृतधनुषं कौसल्यानंदनं स्मरामि। निशम्यैतत्सोऽब्रवीत्। आर्य! सत्यमेतत्। किन्त्वयं सैन्यं संहरत्यस्माकम्। अतस्त्वर्यताम्। त्वर्यताम्। ततः सारथिना रथे सम्मुखे नीते चन्द्रकेतुस्तस्य हस्तलाघवं दृष्ट्वाऽवदत्। भो भो राजानः! क्व यूयं क्व चाऽयं? धिगस्मान्। अत्रान्तरे लवः स्वरक्षार्थं जृंभकास्त्रमामंत्रितवान्। एतदालोक्य विस्मयाविष्टश्चन्द्रकेतुः सुमंत्रमपृच्छत्। महाशय! विलोकय कौतुकम्। कुतोऽस्य जृंभकाणामागमः? सुमंत्रोऽवदत्। वत्स! पूर्वमेते कृशाश्वमुनिना जनिताः। तस्मात्कौशिकं प्राप्ताः। ततः संप्रदायेन श्रीरामभद्रं समुपस्थिताः। एवमपरेऽपि सत्वप्रकाशा मंत्रदृशः स्वयं सर्वं पश्यंति। अथाऽन्योऽन्यं दृष्ट्वा कुमारौ स्नेहार्द्राविभूताम्। ततश्चन्द्रकेतुः सारथिमवादीत्। आर्य! साम्प्रतम् स्यन्दनादवतरामि। तच्छ्रुत्वा सोऽपृच्छत्। कस्य हेतोः? चंद्रकेतुरुवाच। आर्य! एकतस्तावदयं वीरः पूजामर्हति। अपरंच "न रथिनः पादचारमभियुंजंतीति शास्त्रज्ञाः" परिभाषंते। किंवहुना। यदा तातमिश्रा अपि भवंतमर्थसंशयेषु

पृच्छंति । तर्हि का कथा मादृशानाम् ? सोऽब्रवीत् । वत्स ! एवं यथाधर्ममभिमन्यसे ? संग्रामेऽपि मर्यादापालनं राघवाणां कुलव्रतमस्ति । नूनं लक्ष्मणो भाग्यवान् । यस्य भवादृशो न्यायनिपुणो वंशरक्षकः । तच्छ्रुत्वा चन्द्रकेतुरवादीत् । आर्य ! रघुज्येष्ठेऽप्रतिष्ठे नः कुलस्य का प्रतिष्ठा ! त्रयोऽपरे नःपितरोऽनेनैव दुःखेन तप्यंते । सुमंत्र उवाच । वत्स ! हृदयमर्मदारणान्येव तव वचनानि । एवमाकर्ण्य लवो व्यचिन्तयत् । हन्त मिश्रीकृतो रसक्रमो वर्तते । यथा चन्द्रेसमुदिते कुमुदिनी सुखं व्रजति तथैवाऽस्मिन् मम दृष्टिः संतोषमेति । किंतु कलहकामोऽयं बाहुर्योद्धुम् प्रसरति । ततो रथादवतरंतं लवोऽवदत् । कुमार ! अतीव नाम शोभसे रथस्थ एव । कृतं कृतमत्यादरेण ? चन्द्रकेतुरुवाच । तर्हि भवानप्यन्यं रथं विभूषयतु । लवोऽब्रवीत् । को विचारः स्वेपूपकरणेषु । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः । एवमुभयोः संलापं श्रुत्वा सुमंत्रो जगाद । वत्स ! जानासि त्वं दर्पसौजन्ययोर्यथोचितमाचरितुम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा तस्य स्नेहेन हृदयमभिष्यन्देत । लवः प्रत्यवदत् । आर्य ! सुजनः स राजर्षिः श्रूयते । न खलु वयमप्येवंप्रायाः क्रतुप्रतिघातिनः स्मः । लोकेऽस्मिन् कः पुमान् गुणैस्तं महीपालं न बहुमन्यते ? तुरंगमरक्षिणां गर्वोक्तिरेव मे विकृतिमकरोत् । रघुवीरं हि दान्तं वयं शृणुमः । स किल नात्मना दृप्यति । नास्य प्रजा वा दृप्ता जायंते । तत्किं मानवास्तस्य राक्षसीं वाचं समुदीरयंति । मुनयो दृप्तोन्मत्तयोर्वाचं राक्षसीमाहुः । सा सर्ववैराणां योनिः । सा हि लोकस्य निष्कृतिरप्यस्ति । महात्मानोऽहंकारयुतां वाणीं निन्दन्ति । अथेतरां स्तुवंति । या कामान्दुग्धे । अलक्ष्मीं विप्रकर्षति । कीर्तिं सूते दुष्कृतिं च हिनस्ति । धीरा मंगलानां मातरं कामधेनुवत्सर्वाभीष्टप्रदात्रीं च तां सूनृतां वाचं व्याहरंति । तच्छ्रुत्वा सुमंत्रोऽब्रवीत् । वत्स ! यद्यपि त्वं प्राज्ञोऽसि । तथापि नैव खलु देवमैक्ष्वाकुं जानासि । येनैवं वदसि । त्वया तु सैनिकानां प्रमाथेन सत्यमोजायितम् । किन्तु जामदग्न्यस्य दमने निर्बन्धं कर्तुन्नार्हसि । तद्विरमातिप्रसंगात् । निशम्यैतद्वचनं लवोऽवदत् । आर्य ! जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ? द्विजानां प्रभुत्वं तु वाचि तिष्ठति । क्षत्रियाणां च महत्त्वं बाह्वोर्वसतीति लोके प्रसिद्धम् । ब्राह्मणो जामदग्न्यःशस्त्रग्राही । तस्यविजये रघुराजस्य का स्तुतिः ? तच्छ्रुत्वा चन्द्रकेतुरुवाच । आर्यसुमंत्र ! कृतमुत्तरोत्तरेण ? संप्रत्येषः कोऽपि नवीनः पुरुषावतारो जातः । अस्याग्रे भगवान्परशुरामोऽपि वीरो नास्ति । किंबहुना । अयं तु रघुपतिमहिमानमपि न

गणयति । तच्छ्रुत्वा लवोऽवदत् । अविचारणीयचरितास्ते वृद्धास्तिष्ठंतु । सुंदस्त्री मथनेऽप्यकुंठयशसस्ते लोके महान्त एव । खरो यदासन्नो भूत्वा स्थितस्तदा रामभद्र-श्चापकर्षणार्थं पदत्रयं निवृत्य तं जघानेति प्रसिद्धमेव । अथवा वालिनिधने यत्कौशलं तत्रापि जनोऽभिज्ञो वर्तत एव । तच्छ्रुत्वा चन्द्रकेतुरवदत् । आः तातापवादभिन्नमर्याद! मौनमवलम्बस्व । एतदाकर्ण्य लवोऽवदत् । वीरंमन्य ! यत्कर्तव्यं तत्कुरु । अहमत्रैव स्थितोऽस्मि । ततो जातक्षोभेण चन्द्रकेतुना पावकास्त्रं प्रयुक्तम् । ततस्तस्य प्रचण्डसंतापं सर्वतो विलोक्य लवो वारुणास्त्रं प्रयुक्तवान् । येन पावकास्त्रं प्रशान्तम् । ततो लवणप्रयुक्तेनास्त्रेण सर्वं सैन्यं चकितं बभूव । अत्रान्तरे समायातः शत्रुघ्नो बालकपराक्रमं दृष्ट्वाऽतिचकितो बभूव । सोऽथ नीलोत्पलदलश्यामं तं दृष्ट्वा चिन्तयामास । नूनमयं मैथिलीतनयः । यः समरे राघवचमूं विजित्य मृगराडिव दृश्यते । ततः परिचयं पृष्टः सोऽब्रवीत् । किन्ते नाम्नाथवा कुलेन वयसा वा प्रयोजनम् ? वीर ! यदि बलमस्ति । तदा तु वाहं विमोचयेत्युक्त्वा शरसंधानं च विधाय प्राहरत् । ततस्तयोस्तुमुलं युद्धं बभूव । किं बहुना लववाणेन विद्धः स शत्रुघ्नो मूर्छामवाप । सोऽथ संज्ञामवाप्य येन लवणो घातितस्तं बाणं चिक्षेप । एतदालोक्य रणकुशलो लवो महाबलिनं कुशं सस्मार । एवं तर्कयतस्तस्य हृदि स बाणोऽलगत् । येन स मूर्छितोऽभवत् । ज्ञात्वैवं भयाकुलाः केचिन् मुनिबालका वैदेहीमुपसृत्य प्रोचुः । मातः ! ते पुत्रो बलाद्धयमपाहरत् । ततस्तस्य सैन्येन सह घोरं युद्धमभूत् । पूर्वं तु स भूपं मूर्छितं कृत्वा जयमवाप । परंतु पश्चात्तेन प्रहृतः सोऽपि मूर्छितो बभूव । तच्छ्रुत्वा भीता सीताऽतीव विह्वला बभूव । ततो जानक्याः करुणां श्रुत्वा समायातः कुशो मातरं प्रणम्य चिन्ताकारणं पप्रच्छ । अथ विदितवृत्तः स सहसैव रणांगणं जगाम । सोऽथ शरव्रातैः सपदि सैन्यं विजित्य कृतकृत्यो जगर्ज । अत्रान्तरे महर्षिर्वाल्मीकिस्तत्राऽऽजगाम । एतदालोक्य लवः सत्वरं तमुपसृत्य च प्रणनाम । मुनिरुवाच । वत्स ! दीर्घायुर्भव । ततो महर्षिर्युद्धघटनां विलोक्य जगाद । लव ! संह्रियतामस्त्रम् । तच्छ्रुत्वा लवो बाढमित्युवाच । अथ प्रणमन्तं चन्द्रकेतुमपि मुनिरुवाद । राजकुमार ! त्वमपि निर्व्यापारावलम्बितानि बलानि सान्त्वय । तदाकर्ण्य सोऽब्रवीत् बाढम् ।

अथ प्रशान्ते रणे समवाप्य निमंत्रणपत्रं सशिष्यो मुनिवरो रामाश्वमेधं द्रष्टुं साक्षात् प्रजापतिरिव साकेतं जगाम । ततः सोऽद्भुतदर्शनं यज्ञं विलोक्य प्रोवाच । वत्सौ ! परया मुदाऽत्र कृत्स्नं रामायणं काव्यं गायतम् । यदि राजा मुनिमण्डलाग्रे श्रवणाय

समाज्ञापयेत्तर्हि यथायोग्यं प्रवर्तताम् । धनवांछया स्वल्पोऽपि लोभो न कर्तव्यः । वनौकसां फलमूलाशिनां च धनेन किम् ? यदि काकुत्स्थः कस्य दारकौ युवाम इति पृच्छेत् । तदा वाल्मीकिच्छात्राविति वदतम् । पार्थिवमवज्ञाय न गेयम् । यतो धर्मतो राजा सर्वभूतानामधिपतिरिति निगद्य महाकविर्विरराम ।

अथ प्रभाते तौ कुशलवौ स्नात्वा विधिवदग्निं संपूज्य च यथा महर्षिणोक्तं तथा रामचरित्रमगायताम् । एवं पूर्वाचार्यविनिर्मितां शब्दार्थालंकारसमन्वितां च कवितां समाकर्ण्य काकुत्स्थः कुतूहलपरो बभूव । सोऽथ श्रौतस्मार्तपौराणिकादीन् विद्वज्जनान् समाहूय मुनिमण्डलीमध्ये रामायणगानाय तौ समवेशयत् । ततस्तौ मुनिदारकौ श्रोतॄणां हर्षवर्धनं गेयं प्रचक्रतुः । तच्छ्रुत्वा सानुजो रघुपतिः सामन्ताः कपिराक्षसा मुनिजनाः पौराश्च चित्रन्यस्ता इवाऽभूवन् । ततस्ते समाहिता मिथः प्रोचुः । अहो गीतं ! अहो ललितं काव्यं । अहो कुमारयोः स्वरूपम् ! वयं तु ब्रह्मभुवने वा त्रिदिवेऽपि यथैतयोरूपसम्पत्तिस्तथाऽन्यस्य न विद्मः । एतौ रामसदृशौ दर्पणे प्रतिबिम्बिताविव भातः । किन्तु जटावल्कलमात्रेण वैलक्षण्यमुपागतौ स्तः । नूनमिमौ रामतनयौ । यतोऽनयोः स्वरूपसम्पत्तिः सीतासदृशी वर्तते । एवं सदा रामचरितं कथयतां तेषां कर्मान्तरेषु यज्ञेषु तौ सर्गबन्धं गायन्तावास्ताम् । अथैकदाऽपराह्णेऽतिसंतुष्टो भरतमाहूय प्रोवाच । भ्रातः ! कुमाराभ्यामाभ्यामष्टादशसुवर्णमुद्राः सत्वरं देहि । एतदाकर्ण्य स द्रुतं ताभ्यां पृथक् पृथग्ददौ । किन्तु तौ ता नाऽगृह्णीताम् । प्रत्युत तावूचतुः । राजन् ! किमनेन ? वयन्तु वनवासिनो वन्यैः कंदमूलफलैर्जीवामः । ततः केनेदं काव्यं रचितमिति महीभुजा पृष्टौ तौ महामहोपाध्यायेन वाल्मीकिना कृतमिति सविनयं प्रत्यवदताम् । ततो राघवश्चक्षुषा हृदयेन च तौ तनयौ ज्ञात्वा दयितां स्मरन् प्रोवाच । भो भो हनुमत्प्रमुखा महानुभावाः ! मम वचसा तपोनिधिं वाल्मीकिं विज्ञापयन्तु । भगवन् ! जनसंभ्रमादहं सर्वथा निर्दोषां जानकीं जाने । केवलं कीर्तिलुब्धेन मयाऽपवादात्सा त्यक्ता । साऽस्मिन्नेकीभूतजगन्मये ते समक्षं सदसि पुनः शपथं करोतु । येनेयं जनता प्रत्ययं यातु । निशम्यैतद्राघववचनं हनूमान् सत्वरं गत्वा श्रीमद्वाल्मीकये निवेदयामास । तच्छ्रुत्वा महामुनिरपि तत्सर्वं तथेति प्रत्यपद्यत । अथाऽन्येद्युः प्रभाते नारदाद्या मुनिजना माण्डलिका भूपाला अन्ये च लोकाः सीताशपथवीक्षार्थमेकत्रिता बभूवुः । ततः साक्षात् सीता ब्रह्माणं सरस्वतीव वाल्मीकिमनुगता समदृश्यत । एतदालोक्य केचिद्रामं केचित्सीतां केचिदुभावेव सीतारामौ साधुवादैः संपूजयामासुः । ततो वैदेहीसहायो वाल्मीकिर्जनौघमध्ये प्रविश्य राघवं जगाद । दाशरथे ! लोकापवादभीतेन

त्वयेयं पतिव्रता सीता ममाश्रमसमीपे त्यक्ता । सम्प्रति जानकीयं तव प्रत्ययं दास्यति । कृपया त्वं तामनुज्ञातुमर्हसि । इमौ यमजातकौ सुतौ तवैव । एतत्तेऽहं सत्यं ब्रवीमि । देवीयमपापा । दुष्टैर्वितथवादिभिर्नभस्तटीव वृथा पंकेन लिप्ता । वस्तुत इयं तु शरच्चन्द्रिकेव विशुद्धाऽस्ति । रामचन्द्र ! यदि नास्मास्वसत्यं तदा तु सीतासदृशी पतिव्रता न भूता न चाग्रे भविष्यतीत्युक्त्वा कृतासनपरिग्रहे महामुनौ गगने देवगंधर्वसिद्धानां साधुसाध्विति शब्दोऽभवत् । ततः काकुत्स्थः सर्वदेहिनां शृण्वतां जगाद । अहंतु सर्वथैव निर्दोषां सीतां जानामि । इमौ यमजौ सुतावपि ममैव । किम्बहुना । स्वमनोवृत्तिरिव देव्यामस्यां ममाऽविश्वासलेशोऽपि नास्ति । श्रीमती सीता करोतु शपथम् । येन जनवादोऽस्याः प्रमृज्यताम् । निशम्यैवं रघुपतिवचनं मनस्विनी सीता मनसा श्रीरामं ध्यात्वा निम्नानना प्रोवाच ।

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवि! विवरं दातुमर्हसि ॥
मनसा कर्मणा वाचा यथा रामं समर्चये ।
तथा मे माधवी देवि! विवरं दातुमर्हसि ॥

इति रघुनाथपत्न्योक्ते तूर्णं नागैर्मूर्ध्ना धृतं कांचनासनमुदतिष्ठत् । ततस्तस्मिन् समुपविष्टा सर्वसाक्षिणी वसुधा पाणिना सीतां समादाय सपदि पातालं समाविवेश । एवमदर्शनं प्रयातायां तस्यां सर्वे सभ्या मुमुहुः । पुष्पवृष्टिश्च गगनात्पपात । ततो दुःखाग्निसंतप्तो राघवः शून्यं जगन्मन्यमानस्तनुहीन इव बभूव । सोऽथ कोपान्महीमुवाच। देवि ! मह्यं सीतां प्रयच्छ । ममापि दयितार्थिनो वा विवरं प्रयच्छ । अन्यथाऽहं जगद्भूमिरहितं करोमीत्युक्त्वा धनुषि बाणेषु च दृशं ददौ । एतदालोक्य पितामहो दिवस्तमवदत् । रघुनंदन ! त्वमिदानीं वृथा संतापं कर्तुन्नार्हसि । भवं स्मर । जनसन्निधौ रहस्यं वक्तुम् मे न युक्तम् । इत्युक्त्वा देवैः सह प्रजासृजि गगनेऽन्तर्हिते भूतलादशरीरिणी वागुद्गताऽभूत् । काकुत्स्थ ! मैथिलीकृते मिथ्यैव श्रमं मा कृथाः । आयासोऽयं मुष्ट्या गगनग्रहणोपमोऽस्ति । सीता पितॄणां स्वधा, दिवौकसां तृप्तिः सुधा, विष्णोर्वक्षसि लक्ष्मीः, सिद्धानां च मूर्ध्नि स्थिताऽस्ति । यदि तद्दर्शनरसो न विनिवर्तते । तर्हि तद्वपुर्जातावेतावमृतोपमौ सुतौ पश्य । तच्छ्रुत्वा राजा विक्रमं संस्तभ्य पुत्रौ गृहीत्वा च यज्ञान्ते ऋत्विग्भ्यो दानपात्रेभ्यो ब्राह्मणेभ्यश्च हेमपूर्णां महीं प्रादात् । ततो गतेषु प्राघुणिकेषु पुनर्यज्ञशतैरिष्ट्वा विपुलं वसु दत्वा च स राजा प्रशान्तोपद्रवे

राज्ये रराज । ततः पुत्रपौत्रप्रतिष्ठिता राममाता कालधर्ममुपागच्छत् । अथ सुमित्रा कैकय्यावपि विविधं धर्मं कृत्वा दिवं जग्मतुः । रामराज्ये सर्वत्र शान्तिरासीत् । प्रजा-श्चाऽऽधिव्याधिरहिताः सर्वसुखमन्वभूवन् । अथैकदा केकयाधिपो युधाजित् काकुत्स्थाय स्वगुरुमांगिरसगार्ग्यं प्रेषयामास । ततो राघवो महर्षिमागतं श्रुत्वा सहानुजः क्रोशमात्रं प्रत्युद्गम्य विधिवद् गार्ग्यं पूजयामास । अथ राजगुरुर्घोटकसहस्राणि, विविधानि रत्नानि शुभान्याभरणानि विचित्राणि कम्बलादीनि वस्त्राणि च रामाय प्रादात् । ततः सुखोप-विष्टो मुनी राजानं प्रोवाच । महाबाहो ! ते मातुलो यद्वाक्यमाह तत्प्रीतिसंयुक्तं श्रूय-ताम् । राजन् ! सिंधोरुभयतः पार्श्वे विविधफलमूलोपशोभितो गंधर्वविषयोऽस्ति । तं गंधर्वा रक्षंति । संप्रति तान् विजित्य तत्र शुभं नगरं निवेशय । तच्छ्रुत्वा प्रीतो राघवो बाढमित्युवाच । अथाऽन्येद्युः काकुत्स्थः सपुत्रं ससैन्यं भरतं च समायातं श्रुत्वा परां प्रीति माससाद । अथ त्वरमाणो युधाजिद् भरतं नीत्वा लघुविक्रमैः सैन्यैः समेतो गंधर्वनगरं प्राप। एतदाकर्ण्य योद्धुकामा गन्धर्वाः सहसैव समाजग्मुः । ततः सप्तरात्रं लोमहर्षणं तुमुलं बभूव। परंतु नचान्यतरयोर्जयोऽभूत् । अथाऽष्टमेऽहनि कोपाकुलो रामानुजः संवर्तनामक-मस्त्रं गंधर्वेषु चोदयामास । तेन विदारितास्ते क्षणेन पराजिता बभूवुः । एवं जितेषु तेषु कैकयीनंदनस्तत्र द्वे पुरोत्तमे निवेशयामास । ततो भरतस्तक्षं तक्षशिलायां * पुष्करं च पुष्करपुरे प्रतिष्ठापयामास । अथ रामकृपया लक्ष्मणपुत्रोऽगदः स्वनाम्नांगदपुरमावासया-मास । चन्द्रकेतुश्च चन्द्रवत्याः प्रतिष्ठापको बभूव ।

अथैकदा तापसविग्रहः कालोऽभ्येत्य लक्ष्मणेन निवेदितो रामभवनं विवेश । सोऽथ शुभासनमवाप्य रामेण पूजितः प्रोवाच । राजन् ! निर्जने किंचिद्वक्तुकामोऽस्मि । अन्यच्च । योऽस्मिन् मंत्रे प्रविशेत् सोऽवश्यं वध्यः । तच्छ्रुत्वा एवमस्त्विति रामः प्रत्यपदत् । ततस्तयोः स्वैरकथाऽभूत् । तत्र सोऽब्रवीत् । नरनाथ ! स्वयं भगवता कमलजन्मना विसृष्टोऽहं त्वत्सकाशमायातः । जगत्कार्ये कृतकृत्यं त्वां स यदाह । तत्स-माकर्णय । कैटभारे ! जगद्भारं हरता त्वया रक्षोभिर्विलुंठ्यमानं विशदं देवयशो रक्षितम् । वर्षाणामेकादशसहस्राणि च निष्कंटकं राज्यं कृतम् । साम्प्रतं तद्वैष्णवं निजं धाम कथं नासाद्यते ? देव ! विश्वनिर्माणशालिनीशक्तिस्त्वया रहितस्य मे जगत्परित्राणे न क्षमा । अहं कालाख्यस्तव पुत्रोऽस्मीति निगद्य स विरराम । एतत्कालवचो निशम्य राघवो विहस्य

* तक्षशिला नगरी तु तथैव संज्ञां रक्षति । किन्तु तस्य पुष्करस्य यत् पुष्करं नाम नगरं तस्य "पेशावर" इति नाम परिवर्तनं जातमिति केचित्कथयंति ।

प्रोवाच । पुत्र ! भगवान् ब्रह्मा यदाह । तत् सर्वं तथैव करोमि । नाऽत्र कश्चित्संदेहः । अत्रान्तरे चण्डमुनिर्दुर्वासा राजद्वारमभ्येत्य लक्ष्मणं प्रोवाच । रामानुज ! तूर्णं राघवं द्रष्टुमिच्छामि । ममात्यान्तिकं कार्यं वर्तते । तच्छ्रुत्वा लक्ष्मणोऽब्रवीत् । मुनिराज ! संप्रति नृपतिर्व्यग्रोऽस्ति । अतो भवान् मुहूर्तं क्षमताम् । एतदाकर्ण्याऽत्रिपुत्रो रुषा प्रत्यवदत् । सौमित्रे ! राज्ञोऽदर्शने सर्वं पुरमधुनैव दहामि । ततो विद्वानपि लक्ष्मणो रामसंदर्शिनार्थिनो दुर्वाससः शापाद्भीतस्तयोः कालरामयोः संवादं विभेद । अथ राजा कालं विसृज्य सत्कारान्मुनिं ददर्श । ततो विधिवत् पूजितो मुनिस्तमभाषत । राम ! वर्षसहस्रं प्रयातम् मे भोजनस्य । तदिदानीं त्वत्तस्तूर्णमिच्छामि । यथायुक्तं विधीयताम् । ततो महीभुजा समर्पितं सिद्धान्नमनसूयानंदनो भुक्त्वाऽभिमतां दिशं जगाम । ततो दुःखसन्तप्तमानसो राघवो लक्ष्मणमालोक्य दैन्यात् क्षणं मौनमाललंबे । ज्ञात्वैतत् सौमित्रिरुवाच । देव ! प्रतिज्ञां वृथा मा कृथाः । स्नेहमुत्सृज्य सत्वरं मां जहि । यतस्त्वं मर्यादा पुरुषोत्तमोऽसि । किम्बहुना । शरीरिणां स्नेहानुबंधोऽयं मिथ्याऽस्ति । सर्वत्र कालस्य निस्सारतरलागतिरेवंविधैव श्रूयते चावलोक्यते । एतल्लक्ष्मणवचनं श्रुत्वा राजा वसिष्ठादिभिर्विचार्य सजलनयनः सत्यप्रतिज्ञं लक्ष्मणं तत्याज । अथ लक्ष्मणः सरयूं गत्वा निरुद्धसकलेन्द्रियो वैष्णवं धाम समचिन्तयन् क्षणान्निरुच्छ्वासोऽभवत् । अत्रान्तरे सानुगः स्वयमायातो देवराजस्तं नीत्वा त्रिदिवं जगाम । ततस्तद्विरहितो रामोऽपि दशापि दिशः शून्या मेने । ततो रामो भरताय राज्यं दातुमियेष । ज्ञात्वैवं भरतो विसंज्ञोऽभवत् । शत्रुघ्नोऽपि च नाऽतुष्यत् । ततो रघुपतिस्तौ प्रियवचनैः संतोषयामास । अथैकदा रामोऽप्यात्मनो महाप्रस्थानं मुनिभिर्निश्चित्य कुशं कुशावत्यां लवं च श्रावस्त्यामभ्यषिंचत् । ततः पुत्रवान् शत्रुघ्नः समायाते सुबाहुं मथुरायां शत्रुघातिनं च विदिशायां प्रतिष्ठापयामास । ततो राजा काषायवसनव्रतं समादाय वायुपुत्रविभीषणौ प्रोवाच । महानुभावौ ! यावत्पृथिव्यां प्रथिता मत्कथा प्रचरिष्यति । तावद्यशसा सार्धं युवयोरप्यायुर्भविष्यति । एवमभिधाय गद्गदगिरा तौ विनिवार्य कुशान् समादाय च मौनमभजत् । तस्मिन्नवसरेऽस्य सव्ये पार्श्वे मूर्तिमती पृथ्वी दक्षिणे च साक्षाल्लक्ष्मीरासीत् । ततस्सर्वे वेदा द्विजाकारम् धृत्वा तमनुजग्मुः । श्रीमती सावित्री, प्रणवः, वषट्कारः, महर्षयः, कुलपर्वताः, पौरजानपदैः सहान्तः पुराप्रकृतयः, सुग्रीवप्रभृतयः सखायः कृतकृत्याः प्लवंगमाश्च पुरस्कृत्य भरतशत्रुघ्नौ चराचरैर्भूतैः सार्धं प्रजानाथमनुययुः । अथ रघुवरे सरयूपुलिनं प्राप्ते विमानोद्भासिताम्बराः सुरगणाः पुष्पवृष्टिंचक्रुः । स्वयंभूरपि प्रत्यक्षदर्शनं

दत्वा प्रोवाच । रघुराज ! दिष्ट्या शाश्वतं पदं प्राप्तवानसि । भगवन् ! साम्प्रतं मनुजैर्भ्रातृभिश्च सह स्वाधीनां वैष्णवीन्तनुमाविशेति ब्रह्मणोक्ते श्रीरघुराजः सशरीरो वैष्णवीन्तनुमाविवेश । ततोऽग्निपुरोगमा देवा विष्णुमयं देवं पूजयंति स्म । अथ महातेजा विष्णुः पितामहं प्रोवाच । सुव्रत ! जनौघानामेषां स्वर्लोकं दातुमर्हसि । एवं विष्णुवचनं श्रुत्वा जगद्गुरुर्ब्रह्माऽब्रवीत् । प्रभो ! समागताः सर्वेऽमी संतानकांल्लोकान् यास्यंति । किंबहुना । अत्रत्याः कीटपतंगा अपि सरयूजले स्नात्वाऽक्षयांल्लोकान् संप्राप्स्यंति । ततः सुग्रीवप्रमुखा देवांशाः प्लवंगमास्तां तां मूर्तिं समाश्रित्य एवं स्व धाम प्रतिपेदिरे । एवं श्रीरामचन्द्रे स्वपदमारूढेऽयोध्यावासिनो दर्शकाश्च तस्मिन् पापहारिणि पुण्यसलिलेऽवगाह्य प्रभालोलैर्विमानैस्त्रिदिवं ययुः । ततो रामवर्जिताऽयोध्या वर्षशतानि शून्याऽभवत् । अथ ऋषभाख्यो भूपः पुनस्तामावासयामास । इदं रामायणाख्यमाख्यानं पवित्रं पापनाशनं चास्ति । यः श्रद्धया पठति पाठयति किं वा शृणोति श्रावयति स सर्वपापविनिर्मुक्तः कैवल्यपदं लभते कैवल्यपदं लभते ।

रामो राजमणिः सदा विजयते रामं रमेशं भजे ।
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ॥
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं ।
रामे चित्तलयः सदा भवतु मे भो राम ! त्वं पाहि माम् ॥

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ।

ओं शांतिः शांतिः शांतिः ।

इति श्रीपुष्करारण्यान्तर्गताजयमेरुनगरस्थ त्रिपाठ्युपाख्यराजगुरु-पंडितबदरीलालात्मजेन श्रीजानकीगर्भसमुद्भवेन साहित्योपाध्यायशिवदत्त-काव्यतीर्थेन विरचिते गद्यरामायणे उत्तरकाण्डं समाप्तम् ॥



## ।। श्रीरामस्तुतिः ।।

रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ।। १ ।।

जयति रघुवंशतिलकः कौसल्याहृदयनंदनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ।। २ ।।

कल्याणानां निधानं कलिमलमथनं पावनं पावनानाम् ।
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां ।
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ।। ३ ।।

रामरामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ।। ४ ।।

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वंदे वाल्मीकिकोकिलम् ।। ५ ।।

दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ।। ६ ।।

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परांगतिम् ।। ७ ।।

गोष्पदीकृतवारीशं मशकीकृतराक्षसं ।
रामायण-महामाला रत्नं वन्दे निलात्मजम् ।। ८ ।।

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।। ९ ।।

पठन् द्विजो वा ऋषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ।। १० ।।

# शुद्धि-पत्रम्

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|
| अर्ह | अर्हा: | भूमिका | | गेन | नेन | २९ | ५ |
| विभ | विभी | ४ | १३ | अव: | भव | ,, | ८ |
| प्यंसि | प्यंति | ,, | २२ | वंश | वंशे | २९ | १९ |
| प्रजा | प्रजा: | ,, | २४ | घोप: | घोष: | ३० | १ |
| ततः | ततः स | ६ | ४ | चन् | ० | ,, | २० |
| पमा | पमा: | ८ | २५ | च | भृगो भृगो | ३१ | १६ |
| अथ | सोऽथ | १० | १८ | शये | शपे | ३२ | २ |
| जल | जलै | ११ | २४ | भृर् | भर | ,, | ५ |
| मेघो | मेघो | १२ | १४ | तं | ते | ,, | ६ |
| विश | विंश | १५ | २ | धूम्र: | धूम्र | ३३ | १७ |
| ततः | ततस्ता | ,, | १५ | ज्ञात्वा | निन्दन् | ३५ | १६ |
| एव | एवं | १६ | १५ | त्वदभुन | तदद्भुन | ३६ | २ |
| गर्भे | गर्भं | १७ | १४ | राजन् ! | राज्ञि ! | ३७ | १९ |
| बमुवुः | बभूवुः | ,, | २१ | मंतुं | मंत्रु | ३८ | ७ |
| इति शशाप | इति | १८ | ७ | क्षमा | क्षमा: | ,, | ८ |
| श्रमं | श्रमं | २० | ८ | नाथान् | नाथान्वीने | ४२ | २४ |
| राजर्षि | राजर्षि | ,, | १९ | रत्न | रान | ४३ | १० |
| नृं | नृ | २१ | ८ | कपो | कोपा | ,, | २८ |
| दीनां | दीनां | ,, | १६ | पा | पत्र | ४५ | १५ |
| राजन् | राजन्यथा | २२ | १९ | तीनिन | तीनि तुन | ४७ | २० |
| दीर्घ | दीर्घ | २३ | २४ | हृष्ट | हृष्टा | ४९ | १९ |
| वेति | येति तां | ,, | २६ | न | न | ५१ | १० |
| फारां | फारां न | २४ | १ | भग्न | भग्न | ५३ | १४ |
| मह्यं | मंह्य | २५ | १५ | कुष्ट | पुष्ट | ,, | २२ |
| माल्यं | माल्यै | २८ | ४ | जिना: | जिनघ्न्न: | ५४ | १८ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|---|---|---|---|
| न्त्वाय | न्त्याय | ५६ | २ | मूल्य | मौल्य | ७९ | १० |
| गुंजा | गुंज | ,, | २० | कृता | कृताः | ,, | २१ |
| ऽपला | पला | ५८ | ७ | मकर्ण्य | माकर्ण्य | ,, | २६ |
| णे | णौ | ,, | १३ | हतो | हितो | ८० | ११ |
| सदि | सादि | ,, | २३ | मोहि | मोह | ,, | १९ |
| रावव | राववः | ,, | २३ | य | ये | ,, | २६ |
| वाचलो | चालको | ६० | १७ | सुग्रीव | सुग्रीवं | ,, | २७ |
| शृणु | शृणु | ,, | २० | बोद्धु | योद्धु | ८२ | १७ |
| माल | मूल | ६१ | २ | नुल्य | तुल्य | ८३ | १० |
| हरणे | कृते त्वं | ,, | ९ | ययो | यो | ,, | २५ |
| वैरै | वैरे | ,, | २० | य | यः | ८४ | २४ |
| ममा | ममे | ,, | २४ | मुख | मुखः | ,, | २१ |
| भीतौ | भीतो | ६३ | १४ | अन्विश्य | अन्विष्य | ८७ | १७ |
| त्वया | तर्वा | ,, | १८ | सोत्सहा | सोत्साहा | ८८ | ५ |
| लोला | लोल | ,, | २३ | शक्रो | स शक्रो | ८९ | १३ |
| जगाद् | जगाद | ६४ | १४ | सत्कृता | सत्कृताः | ,, | १८ |
| विपाके | विपाकः | ,, | २० | रस्मि | रश्मि | ९० | १७ |
| तुगा | नुगा | ६५ | ७ | मभि | मप्य | ९१ | ३ |
| मसि | मपि | ६६ | ३ | त्पात | त्पपात | ,, | ११ |
| न चिरं | न च जीवितं | ,, | १७ | द्रूय | द्रूय | ९२ | २८ |
| स्मिते | स्मिने | ६७ | ११ | जप | जपं | ९३ | १३ |
| तनौ च | तनौ | ७१ | २३ | मतश | मतश् | ९५ | ११ |
| मुम्बुना | मुनिना | ,, | ,, | ततो | ततः स | ,, | २२ |
| स्वगति | स्वर्गति | ,, | २६ | न्य | न्यन | ९६ | ६ |
| न्तंः | न्तः | ७४ | २१ | जवि | जीव | ,, | १३ |
| कीर्त्ति | कीर्ती | ७८ | २५ | याम् | ताम् | ११७ | २५ |
| र्गोचितम्। कृतवान्। | | ७९ | २ | देशकाले | देशे काले च | १२१ | २७ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| हृतव्याः | हृंतव्याः | १२५ | २३ |
| थिंता | थिंतो | १२७ | ११ |
| तवि | ताव | १२८ | १४ |
| तव | तवाऽ | १३२ | १० |
| कालेयां | कालेया | १४० | ५ |
| क्रामति | क्रामंति | १४१ | १४ |
| दत्त | दत्ता | ,, | १७ |
| मुग्ध | मुग्धे | १४८ | २ |
| प्रकार | प्राकार | १५० | ८ |
| जेन | गेन | ,, | १३ |
| जिदि | जिद् | १५१ | ११ |
| गृहे | गृंहे | १५२ | १४ |
| पीत | पीन | १५८ | १६ |
| विनि | विर्नि | १७० | २२ |
| दार्शं | दांश | १७३ | २३ |
| गांध | गंधि | ,, | २३ |
| नर्न | ननं | १७६ | २० |
| राथि | रथिः | १७७ | ११ |
| वाक | वाक् | १८० | १९ |
| भव | भग | १८२ | ३ |
| पूं | पू | १८३ | १३ |
| जनः | जनाय | १८८ | ७ |
| मह | महे | ,, | २० |
| दरी | दर्री | १९० | १५ |
| सभ्रम | संभ्रम | १९१ | २ |
| शारे | शोर | १९९ | ६ |
| नीतं | नीत | २०३ | ११ |
| मत | म | २०४ | १३ |
| किरतु | किरंति | ,, | १६ |
| लवण | लव | २०६ | ८ |
| देवि | देवी | २०८ | १२ |
| ,, | ,, | ,, | १४ |
| भूभि | भूमि | ,, | २० |
| रपु | रघु | ,, | २१ |
| याते | यातं | २१० | २० |
| पाद् | पद् | ,, | २५ |
| पुरा | पुरश्चराः | ,, | २६ |
| स्व | स्वं | २११ | ७ |

